# गोपथ-ब्राह्मणम्

(मूल-मात्रम्)



सम्पादकः—

डा० विजयपालो विद्यावारिधिः

प्रकाशकः—
सवित्री देवी बागड़िया ट्रस्ट,
२ नं० चौरङ्गी एप्रोच
कलकत्ता—७०००१३

वितरकः—
रामलाल कपूर ट्रस्ट,
जी० टी० रोड बहालगढ़
(सोनीपत-हरयाणा)

प्रथमं संस्करणम्—१०००
सं० २०३७, सन् १९८०
मूल्यम् — ४०-००

मुद्रकः—
सुरेन्द्र कुमार कपूर,
रामलाल कपूर ट्रस्ट प्रेस,
बहालगढ़ (सोनीपत-हरयाणा)

# भूमिका

श्रेष्ठिप्रवर श्री मोहनलाल जी बागड़िया (कलकत्ता) और उनकी धर्मपत्नी श्रीमती सौ० विमलादेवी जी बागड़िया वैदिक धर्म में श्रद्धावान् एवं ऋषि दयानन्द सरस्वती के परमभक्त हैं। आपने वैदिक धर्म, वैदिक संस्कृति और आर्ष ग्रन्थों के प्रचार वा प्रसार के लिये अपनी स्वर्गीया पूज्य माता सावित्री देवी जी की स्मृति में **'सावित्रीदेवी बागड़िया ट्रस्ट'** स्थापित किया है।

श्री मोहनलाल जी बागड़िया के नाना स्व० श्री विन्ध्यवासिनीप्रसाद जी अग्रवाल वेद के प्रति परम निष्ठावान् ऋषि दयानन्द के परमभक्त एवं गम्भीर अनुशीलक थे। आप का मेरे प्रति अतिस्नेह था। मैं भी उनका ज्येष्ठ भ्राता के समान सम्मान करता था। इसी सम्बध से सन् १९७६ में कलकत्ता जाने पर श्रीमान् मोहनलाल जी बागड़िया और उनकी धर्मपत्नी श्री सौ० विमलादेवी जी के साथ मेरा परिचय हुआ।

यह परिचय शनैः शनैः आत्मीयता के रूप में परिणत हो गया। आपने ढाई-तीन वर्ष पूर्व वैदिक धर्म और आर्षज्ञान के प्रचारार्थ मुझ से सुझाव मांगा। मैंने ऋषि दयानन्द सरस्वती के मुख्य मन्तव्य को ध्यान में रखकर आर्षग्रन्थों के प्रकाशन का सुझाव दिया। आप ने मेरे सुझाव को मान कर इस कार्य में बारह सहस्र रुपया प्रतिवर्ष व्यय करने का संकल्प व्यक्त किया। उसी के फलस्वरूप मैंने बहुत वर्षों से अप्राप्य "गोपथ ब्राह्मण" के पुनः सम्पादन और मुद्रण की व्यवस्था की।

यद्यपि इस ग्रन्थ का प्रकाशन गत वर्ष ही जाना चाहिये था, परन्तु मेरी सतत अस्वस्थता, हमारे रामलाल कपूर ट्रस्ट के प्रेस की शिथिलता तथा प्रूप-संशोधक श्री पं० महेन्द्र शास्त्री जी के एक वर्ष से रुग्ण रहने के कारण इस ग्रन्थ के प्रकाशन में एक वर्ष का विलम्ब हो गया।

गोपथ ब्राह्मण के तीन संस्करण पहले प्रकाशित हो चुके हैं। उनमें सन् १९१९ में प्रकाशित Dr. Dieuke Gaastra द्वारा सम्पादित संस्करण सर्वोत्तम है। परन्तु अथर्ववेद की संहिता और ब्राह्मण के अध्ययन-अध्यापन की परम्परा ऋग्वेदादि के समान अविच्छिन्न नहीं रही। इस कारण संहिता और ब्राह्मण के पाठ अत्यन्त भ्रष्ट हो गये। यद्यपि गास्ट्रे महोदय ने गोपथ ब्राह्मण का अत्यन्त परिश्रम से सम्पादन किया था, तथापि उस में भी शतशः पाठ अशुद्ध तथा सन्दिग्ध रह गये।

# भूमिका

गोपथ ब्राह्मण की दुर्लभता और गास्ट्रे-संस्करण में भी भ्रष्ट पाठों को ध्यान में रख कर मैंने अपने रामलाल कपूर ट्रस्ट के अन्तर्गत पाणिनि महाविद्यालय के आचार्य श्री पं० विजयपाल जी विद्यावारिधि को गोपथ ब्राह्मण के पुनः सम्पादन के लिये सुझाव दिया। उन्होंने मेरे सुझाव को स्वीकार करके बड़े यत्न और धैर्य-पूर्वक इस का पुनः सम्पादन किया। पूना जाकर वैदिक संशोधन मण्डल के संग्रह में विद्यमान अद्य यावत् अप्रयुक्त दो प्राचीन हस्तलेखों से मिलान किया। श्री पं० विजयपाल जी के इस महद् अध्यवसाय से यद्यपि गोपथ ब्राह्मण के पूर्वमुद्रित संस्करणों के बहुत से अशुद्ध पाठों का उद्धार सम्भव हुआ, तथापि अध्ययनाध्यापन परम्परा के चिरकाल से विच्छिन्न हो जाने के कारण अभी भी इस ग्रन्थ में बहुत से पाठ इतने भ्रष्ट हैं कि उन का पूर्णतया उद्धार होना प्रायः अशक्य सा ही प्रतीत होता है। फिर भी यह संस्करण पूर्व मुद्रित संस्करणों से अधिक शुद्ध है, ऐसा कहना अत्युक्ति नहीं है।

इस समय दो महत्त्वपूर्ण ग्रन्थों के सम्पादन का कार्य चल रहा है। एक ग्रन्थ है—केरल-प्रदेशीय गार्ग्य नीलकण्ठ याजुष कृत 'निरुक्त-श्लोक-वार्त्तिक' नाम्नी अद्य यावत् अमुद्रित निरुक्त शास्त्र की प्राचीन व्याख्या। इस का एक मात्र हस्तलेख मद्रास में है। बड़े प्रयत्न से इस हस्तलेख की प्रतिलिपि प्राप्त की है। इस का सम्पादन श्री पं० विजयपाल जी विद्यावारिधि कर रहे हैं। दूसरा ग्रन्थ है—अथर्ववेदीय पैप्पलाद संहिता। इस के ३-४ हस्तलेख भुवनेश्वर के संग्रहालय में हैं। इस का सम्पादन डा० श्री दुःखीश्याम पट्टनायक जी एम. ए., साहित्याचार्य (भुवनेश्वर) कर रहे हैं।

अगले वर्ष में श्रीमती सावित्री देवी बागड़िया ट्रस्ट की ओर से 'निरुक्त-श्लोक-वार्त्तिक' नाम्नी निरुक्त-व्याख्या का प्रकाशन किया जायेगा।

रामलाल कपूर ट्रस्ट
बहालगढ़ (सोनीपत-हरयाणा)

विदुषां वशंवदः—
युधिष्ठिर मीमांसक

# उपोद्घातः

## १. कर्मवितानः

प्राचीनभारतीयसामाजिकजीवनं कर्मकाण्डे प्रत्यतिष्ठदितीतिहासपुराणानुशीलनात् सुतराम् अभिव्यज्यते । द्विजगृहस्थानां जीवनचक्रं यज्ञाक्षं परितोऽभ्राम्यत् । सम्पूर्णमार्यवाङ्मयं यज्ञमाहात्म्यवर्णनैः प्रातं दरीदृश्यते । यज्ञो वै श्रेष्ठतमं कर्मेति[1] घोषयामासुः प्रत्ना मनीषिणः । संहिता-ब्राह्मण-श्रौत-गृह्यसूत्रादिकस्य विपुलस्य वैदिकवाङ्मयस्य प्रणयनं यज्ञमधिकृत्यैव समजायत । किं बहुना, लोकवेदप्रसिद्धया यागो धर्मपर्यायताम् अवाप । तथा चावोचद् मीमांसकशिरोमणिः शबरः—

**यो हि यागमनुतिष्ठति, तं धार्मिक इति समाचक्षते । यश्च यस्य कर्ता, स तेन व्यपदिश्यते, यथा पाचको लावक इति । तेन यः पुरुषं निःश्रेयसेन संयुनक्ति, स धर्मशब्देनोच्यते । न केवलं लोके, वेदेऽपि—यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् (ऋ० १०।९०।१६) इति यजतिशब्दवाच्यमेव धर्मं समामनन्ति ।**[2]

सोऽयं यज्ञः प्रतिपादकशास्त्रदृष्ट्या श्रौतस्मार्त्तभेदाद् द्विविधः—श्रुतौ विहितत्वाच्छ्रौतः, स्मृतौ विहितत्वाच्च स्मार्त्त इत्यभिधीयते । अत्र श्रुतिशब्देन ब्राह्मणानि, स्मृतिशब्देन च गृह्य-धर्मसूत्राणि लक्ष्यन्ते । कर्त्तव्यापेक्षया यज्ञास्त्रिधा विभज्यन्ते—नित्यकर्त्तव्याः, निमित्तवशात् कर्त्तव्याः, काम्याश्चेति । तत्र नित्यानां नैमित्तिकानां च यज्ञानामवश्यानुष्ठेयता, तदननुष्ठाने प्रत्यवायस्मरणात्—

**नित्यनैमित्तिके कुर्यात् प्रत्यवायजिघांसया ।**[3] इति

यशःपशुधनादिकामानां प्रेप्सयानुष्ठेया यज्ञाः काम्याः, ते च बहुविधाः श्रौतगृह्यधर्मसूत्रेषु प्रदिष्टाः । यज्ञद्रव्यम् अपेक्ष्य श्रौतस्मार्त्तयज्ञानां त्रयो भेदाः स्मर्यन्ते । तथा चोक्तं धर्मसूत्रकारैः—

**अष्टकाः पार्वणः श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त पाकसंस्थाः ॥**

---

१. शत० ब्रा० १।७।१।५॥
२. पू० मी० १।१।२ शाबरभाष्ये ॥
३. सायणः, अथर्ववेदभाष्यभूमिकायाम् ।

अग्न्याधेयमग्निहोत्रं दर्शपौर्णमासावाग्रयणं चातुर्मास्यानि निरुढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञ संस्थाः।

अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यष्षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्थाः ॥[1]

अत्र पाकसंस्थाः स्मार्त्ताः, शेषास्तु श्रौता इति व्याख्यातारः। गोपथब्राह्मणे (१।१।१२) अग्निर्यज्ञं त्रिवृतं सप्ततन्तुम (अथर्व० पै० सं० ५।२८।१) इत्याथर्वणिक-श्रुतिमाश्रित्यैकविंशतिर्भेदा यज्ञस्य निर्दिष्टाः। तथा हि—

सप्त सुत्याः सप्त च पाकयज्ञा हविर्यज्ञाः सप्त तथैकविंशतिः।
सर्वे ते यज्ञा अङ्गिरसोऽपियन्ति नूतना यानृषयो सृजन्ति ये च सृष्टाः पुराणैः ॥[2]

तस्मिन्नेव ग्रन्थे चेमे यज्ञा नामग्राहं प्रदिश्यन्ते। तथा हि—

सायं प्रातर्होमौ स्थालीपाको नवश्च यः।
बलिश्च पितृयज्ञश्चाष्टका सप्तमः पशुः ॥ इत्येते पाकयज्ञाः।
अग्न्याधेयमग्निहोत्रं पौर्णमास्यमावास्ये।
नवेष्टिश्चातुर्मास्यानि पशुबन्धोऽत्र सप्तमः ॥ इत्येते हविर्यज्ञाः।
अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशिमांस्ततः।
वाजपेयोऽतिरात्रश्चाप्तोर्यामात्र सप्तमः ॥ इत्येते सुत्याः ॥[3]

ऐतरेयारण्यके (२।३।३) तु—स वा एष यज्ञः पञ्चविधः—अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः···इति यज्ञस्य पञ्च प्रकारा निरूपिताः।

श्रौतसूत्रेषु विवृताः प्रमुखा यज्ञास्त्विमे—अग्न्याधानम्, अग्निहोत्रम्, दर्शपूर्णमासौ, आग्रयणेष्टिः, दर्विहोमाः, चातुर्मास्यानि, निरूढपशुबन्धः, अग्निष्टोमः, एकाहः, द्वादशाहः, सत्राणि, गवामयनम्, वाजपेयः, राजसूयः, अग्निचयनम्, सौत्रामणी, अश्वमेधः, पुरुषमेधः, अभिचारयागः, अहीनः, अतिरात्रः।[4]

श्रौतयज्ञकर्मानुष्ठानेषु केचन विशेषाः परिदृश्यन्ते। तत्र यजमानस्तावत् कामनाविशेषप्रेरितो यज्ञसम्भारान् परिगृह्णाति। प्रायेणात्रानेकोऽग्निरिध्यते यस्मिन् देवताविशेषम् उद्दिश्य कर्माण्यनुष्ठीयन्ते। दर्शादिषु त्रयोऽग्नयः—गार्हपत्याहवनीयदक्षिणाः—भवन्ति, प्रधानाग्निस्तत्राहवनीय एव। होत्रध्वर्यूद्गातृब्रह्मभेदाद्

---

१. गौतमधर्मसूत्रं ८।१६-१८॥

२. गो० ब्रा० १।५।२५॥

३. गो० ब्रा० १।५।२३॥

४. आचार्यचिन्नस्वामिकृते यज्ञतत्त्वप्रकाशाभिधे ग्रन्थे, कात्यायनश्रौतसूत्रस्य विद्याधरीयभूमिकायां च यज्ञानुष्ठानप्रक्रिया द्रष्टव्या।

ऋत्विजां चत्वारो वर्गा अनुष्ठानान्याचरितुम् अपेक्ष्यन्ते। तेषां संख्या चतुष्प्रभृत्या षोडशभ्यः प्रतियागं भिद्यते, सहायाश्चातो व्यतिरिच्यन्ते। हव्यद्रव्येषु जान्तवानि यथा दुग्धदधिघृतमध्वादीनि, वानस्पत्यानि च यथा व्रीहियवमाषतिलसोमादीनि समाविश्यन्ते। प्रधानदेवतोद्देशेनात्र प्रधानयागः, तस्य पुरस्तात् परस्तादुभयत्र वा प्रधानदेवतोद्देशेनानुषङ्गिकाणि कर्माण्यप्यनुष्ठीयन्ते, तद्यथा—दर्शपूर्णमासयोः प्रधानयागमुभयतः प्रयाजानुयाजा हूयन्ते, सोमयागे च प्रवर्ग्योपसदिष्टी सवनात् पूर्वमनुष्ठीयेते। यागो दीक्षया(दर्शादिषु व्रतोपायनेन)समारभ्यते, अवभृथेन(स्नानेन) च समाप्यते। एतदनुष्ठानयुगलं महत्त्वातिरेकाद् इष्टिरूपेणानुष्ठीयते। श्रौतयज्ञेषु हुतशेषभक्षणम् ऋत्विग्यजमानानाम् अवश्यानुष्ठेयं कर्म प्रदिश्यते। आथर्वणिकानुष्ठानविशेषा अधस्ताद् यथाप्रसङ्ग वर्णयिष्यन्ते।

## २. कर्मानुष्ठानोद्भवः

सुविकसितस्यास्य वैदिककर्मकलापस्य मूलप्रयोजन-प्रभव-विकासान् अधिकृत्य साम्प्रदायिकैराधुनिकतत्त्वान्वेषणपरायणैश्च विचक्षणैर्विविधानि मतानि प्रस्तूयन्ते। तत्र—वेदप्रतिपादितोऽर्थो धर्मः, स च यज्ञ एव, वेदश्चापौरुषेयं वाक्यम्—इति साम्प्रदायिकाः सङ्गिरन्ते। अस्मिन् मते वेदस्य, अत एव च तत्प्रतिपादितकर्मवितानस्य सदातनत्वात् कर्मकलापस्योद्भवविकासयोः प्रश्न एव नोदेतीति नास्त्यत्र वक्तव्यविशेषः। साम्प्रतिकास्तत्त्वानुसन्धानकृतश्रमा नरवरास्तु सभ्यासभ्यप्राचीनार्वाचीनेषु विभिन्नमानवसमुदायेषु प्रसृतानां विश्वासानां कर्मकलापानां च तुलनेतिहाससमीक्षापुरःसरम् अध्ययनं विधाय यं निष्कर्षम् आपन्, सोऽत्र समासतोऽनुवर्ण्यते। तथा हि—

अहोरात्रचक्रं, वर्षणादिकर्म, ऋतुपरिवर्त्तनम्, ओषधि-वनस्पति-पशु-पक्षि मनुष्याणां जन्म-वृद्धि-क्षयान्, अन्याश्चैतादृशीर्घटनाः प्रत्यहं दर्शं दर्शं चकित-चकितो मनुजस्तत्तन्निमन्त्रीणां चितिशक्तीनां तत्र तत्रास्तित्वं परिकल्पयति। ताश्च चितिशक्तयो देवतानाम्नाभिधीयन्ते। ता एता देवताः प्रसादयितुकामा जना याश्चेष्टा विदधति, ता एव समुदिता धर्म इत्येतेन शब्देन व्यवह्रियन्ते।[1] अत्रैव निधीयते सर्वकर्मकलापप्रवृत्तेर्बीजम्। स्वार्थमूलकोऽयं व्यापारः। सभ्यताविकासे जातेऽप्यनुवर्त्तन्त एतानि कर्मानुष्ठानानि, परिवर्त्तन्ते परमेषां प्रयोजनानि, नूतनपरिवेशेषु पुरातनप्रयोजनाम् असङ्गतेः। तत्र कर्मानुष्ठानविकासस्य तिस्रोऽवस्था उदीर्यन्ते।

---

१. धर्मोद्भवसंबन्धिनो विभिन्ना वादाः—जीववादः (प्रेतात्मवादः), क्षणिकदेववादः, शिवसत्त्ववादः, पशुप्रतीकवादः, यातुविद्यावादः—विद्वद्भिः प्रस्तूयन्ते विव्रियन्ते च। द्र०-आ० वे० कीथ, वैदिकधर्म एवं दर्शन, पृ० ५२।

प्रथमा तावत् स्वार्थसाधनावस्था, यत्र देवतायै तदभीष्टवस्तूपहृत्य मानवः स्वार्थं सिषाधयिषति । अत्र हि मनुष्यः स्वाभीष्टार्थं साधयितुं बलाद् देवतां नियोजयति । द्वितीया तु देवताधीनतावस्था, यत्र देवतायै तदभीष्टवस्तूपहृत्य मानवो देवताधीनतामात्रम् अङ्गीकरोति । अत्र हि मनुष्यो देवताप्रसादमात्रं कामयते, प्रसन्ना हि सा स्वयमेव तदभीष्टार्थं साधयति । तृतीया च स्वार्थत्यागावस्था, यत्र खलु मानवः सर्वस्वं—स्वप्राणानपि—देवतायै समर्पयति । अत्र हि प्रतिनिधिरूपेण निष्क्रय-द्रव्यम्—पशु-पुरोडाशादि—एव देवताया उपह्रियते स्वप्राणार्पणासम्भवात् । इमां तृतीयावस्थामेव वैदिककर्मकलापाः प्रतिनिदधति । तथा च 'देवतोद्देशेन द्रव्य-त्यागो यज्ञः' इति याज्ञिकाः[1] । प्रायेण समर्पणवादं स्वीकृत्यापि केचित्—वैदिकयज्ञो यातुधानिकानुष्ठानान्यपि स्वपरिधानेनावृणोति—इति प्रतिपद्यन्ते । एवं च वैदिक-कर्मकलापः सामर्पणिक-यातुधानिकोभयविधकर्मणां संघात इति निष्कर्षः[2] ।

साम्प्रतिकाः साम्यवादिनस्तु यथास्वभावं सामाजिकार्थिकपरिवेशमेव वैदिक-कर्मानुष्ठानस्य बीजं परिकल्पयन्ते । तथा हि—आदिमकाल आर्याः सूर्यचन्द्रादीन् प्राकृतिकपदार्थान् इव मानवान् अपि प्रकृत्यवयवान् ऊरीचक्रुः । ते स्वानुष्ठेयकर्मसु प्राकृतिकघटनाभिः सह संसर्गम् अनुभूय साम्यसंघरूपेण प्रववृतिरे । तदेवं साम्य-संघाः पश्वादिधनानां सामूहिकोत्पादनस्य यां प्रक्रियाम् अनुसस्रुः, तां 'यज्ञ' इति, तस्याः प्रक्रियाया ज्ञानं 'वेद' इति च व्यपदिदिशुः । तत्र साम्य-संघो 'ब्रह्म' इति पदेनाभिधीयते स्म । देवैरनुष्ठितः सत्रयज्ञ आर्यपूर्वजैः सामूहिकरूपेणानुष्ठितः परिश्रम आसीदिति सत्रेषु ऋत्विग्यजमानविभागाभावाद्, यज्ञफलस्य सामूहिकत्वात्, समानगोत्रैरनुष्ठेयत्वात्, प्रवरणविधेः सद्भावात्, स्त्रीपुरुषयोः समानरूपेण सत्र-भाक्त्वाच्चेत्यस्मात् विशेषपञ्चकात् परिकल्प्यते । साम्यसंघयुगे समतीते तु तादृक्सामूहिकोत्पादनाभावः समजनि, तथापि पूर्ववर्त्तिसंस्कारवशात् सामाजिककर्मकला-पस्मारः रूपं यज्ञोऽवातिष्ठत । तथा च परवर्त्तियुगेषु 'प्राकृतिकघटनाभिः संसृष्टानां वास्तविकानां सामाजिकार्थिककर्मणां काल्पनिकः प्रतिबिम्बो यज्ञः' समजायतेति दिक् ।[3]

आचार्यवराः श्रीमद्युधिष्ठिरमीमांसकचरणास्त्वातिष्ठन्ते—सृष्ट्यादौ योगजश-क्तिसम्पन्नाः परापरज्ञा ऋषयः परमाणुमारभ्य परममहत्तत्त्वं यावत् पदार्थान् प्रत्यक्षं

---

१. रामसुन्दरत्रिवेदी, यज्ञप्रसङ्ग, पृ० ७१—७५ ।

२. आ० वे० कीथ, वैदिक धर्म एवं दर्शन, तृतीयकाण्ड ।

३. श्रीपाद अमृत डांगे, भारत—आदिमसाम्यवाद से दासप्रथा तक का इतिहास, अध्याय ३,४ ।

ददृशुः । कालान्तरे—त्रेतायुगमुखे—शक्तिबुद्धिह्रासात् सूक्ष्मव्यवहितपदार्था जनानाम् अज्ञेयाः समजायन्त । ततश्चाधिभौतिकाधिदैविकाध्यात्मिकप्रक्रियानुसारी वेदार्थोऽपि तैर्दुरधिगमो बभूव । तत्कालवर्त्तिनः साक्षात्कृतधर्माणः परावरज्ञा ऋषयो ब्रह्माण्डाध्यात्मरचनापरिज्ञापनाय, आध्यात्मिकाधिदैविकप्राचीनवेदार्थपरिरक्षणाय च यज्ञरूपाण्येतानि नाटकानि कल्पयाञ्चक्रुः । तदेवं श्रौतयज्ञा आधिदैविकाध्यात्मिकजगतो ज्ञानस्य तादृशान्येव साधनानि पुरासन्, यादृशानि भूगोल-खगोल-मानचित्रादीन्युपकरणान्यद्यत्वे वर्त्तन्ते ।[1]

भवतु नाम कापि परिकल्पना कर्मानुष्ठानोद्भवोपपादिका, वैदिककर्मकाण्ड-विकासस्य प्रद्योतकाः केचन सङ्केताः पुरातनवाङ्मय उपलभ्यमाना अत्रोद्ध्रियन्ते ।

## ३. कर्मकाण्डविकासः

यज्ञानां प्रारम्भः पूर्वम् असुरेषु जात इति संहिता-ब्राह्मणादिग्रन्थानुशीलनाद् ज्ञायते । तैत्तिरीयसंहितायां तावच्छ्रूयते—

**प्रजापतिर्देवासुरानसृजत । तदनु यज्ञोऽसृज्यत, यज्ञं छन्दांसि । ते विष्वञ्चो व्यक्रामन् । सोऽसुराननु यज्ञोऽपाक्रामद्, यज्ञं छन्दांसि ।**[2]

शतपथब्राह्मणेऽपि सौत्रामणी-प्रसङ्गे श्रूयते—

**असुरेषु वा एषोऽग्रे यज्ञ आसीत् सौत्रामणी । स देवान् उपप्रैत ।**[3]

असुरेभ्यो गृहीतोऽपि यज्ञो देवैस्तावतीं विकसितावस्थां नीतो यदसुरा अपि देवैरनुष्ठीयमानानि कर्माणि पुनरनुचक्रुः । तथा च श्रूयते तैत्तिरीयसंहितायाम्—

**देवा वै यद् यज्ञेऽकुर्वत तदसुरा अकुर्वत ।**[4]

कालान्तरे देवेभ्य इमं यज्ञं मनुष्या जगृहुः । गन्धर्वेभ्यो नाम देवविशेषेभ्यो महाराज ऐलोऽग्निविद्यारहस्यं—यज्ञविज्ञानं—लब्ध्वा मनुष्येषु प्रवर्त्तयमासेति पुराणेषु स्मर्यते । तथा चोक्तं हरिवंशे—

**गन्धर्वेभ्यो वरं लब्ध्वा त्रेताग्निं समकल्पयत् ।**
**एको अग्निः पूर्वमासीद् ऐलस्त्रेतामकल्पयत् ॥**[5]

---

१. श्रौतयज्ञ-मीमांसा, शाबरभाष्य हिन्दी व्याख्या, उपोद्घात पृ० ६४—६६ ।

२. तै० सं० ३।३।७॥

३. शत० ब्रा० १२।६।३।७ ॥

४. तै० सं० ६।४।६ ॥

५. हरि० पु० १।१२६।४७ ॥

वायौ खल्वपि तथैव—

**त्रेतायां तु महारथः (ऐलः)।**
**एकोऽग्निः पूर्वमासीद् वै ऐलस्त्रींस्तानकल्पयत्॥**[1]

अथ मानवेषु यज्ञः कस्मिन् कालविभागे प्रववृत इत्याकाङ्क्षायाम् आचार्याः समातिष्ठन्ते—कृतयुगस्योत्तरार्द्धे देवासुरेषु प्रचारानन्तरं त्रेतायुगस्य प्रारम्भे मनुष्येषु यज्ञो वितेन इति।[2] अत्र प्रमाणान्युपन्यस्यन्ते—

**इदं कृतयुगं नाम कालः श्रेष्ठः प्रवर्तितः।**
**अहिंस्या यज्ञपशवो युगेऽस्मिन्न तदन्यथा॥ महा० शा० ३४०।८२॥**
**त्रेतादौ केवला वेदा यज्ञा वर्णाश्रमास्तथा॥ महा० शा० २३८।१४॥**
**त्रेतायुगे विधिस्त्वेष यज्ञानां न कृते युगे॥ महा० शा० २३२।३२॥**
**यथा त्रेतायुगमुखे यज्ञस्यासीत् प्रवर्त्तनम्॥ वायु-पु० ५७।८६॥**
**तदेतत् सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि॥ मु० उप० १।२।१॥**

त्रेतारम्भे[3] प्रादुर्भूता यज्ञाः स्वशैशवकालेऽत्यन्तसरला निराडम्बराश्चासन्। तदानीम् एकेनैवाग्निना कर्माणि समपद्यन्तेति—**अङ्गिरसां वा एकोऽग्निः** (ऐ० ब्रा० ६।२४) इत्यैतरेयप्रवचनेन ज्ञाप्यते। अत एकाग्निसाध्या अग्निहोत्रादयो यज्ञा एव प्रारम्भे प्रचरिताः। कालान्तरे तु महाराज ऐलस्त्र्यग्निसाध्यान् दर्शपूर्णमासचातुर्मास्ययज्ञान् प्रवर्त्तयामासेति पूर्वम् उक्तमेव। व्यासोऽप्यग्निहोत्रदर्शपूर्णमासचातुर्मास्यानां सनातनत्वं सस्मार। तथा हि—

**दर्शं च पौर्णमासं च अग्निहोत्रं च धीमतः।**
**चातुर्मास्यानि चैवासन् तेषु धर्मः सनातनः॥**[4]

ज्योतिष्टोमादीनां बहुसम्भाराडम्बरानुष्ठेयानां त्र्यधिकाग्निसाध्यानां यज्ञानां प्रवृत्तिः, काम्यानां च प्रकल्पना वैदिककर्मकाण्डविकासस्य चरमा परिणतिः। यज्ञाङ्गभूतानां देवता-कर्म-द्रव्य-वेदर्त्विगादीनां समावेशोऽपि तथैव क्रमशोऽजायतेत्यनुपदं प्रदर्श्यते।

तैत्तिरीयसंहितायां[5] श्रूयमाणा स्विष्टकृद्विषयिकाख्यायिका रुद्रदेवतायाः

---

१. वायु-पु० ६१।४८॥
२. श्रौतयज्ञ-मीमांसा, शाबरभाष्य हिन्दी व्याख्या, उपोद्घात पृ० १०४।
३. ऐतिह्यविदां युगमानं ज्योतिग्रन्थोक्तयुगमानाद् भिन्नमिति नातिरोहितं विदुषाम्।
४. महा० शा० २६९।२०॥
५. तै० सं० २।६।८॥ तु०—गो० ब्रा० २।१।२॥

स्विष्टकृदाहुतेश्च समावेशस्योत्तरकालवृत्तित्वं निदर्शयति। तथव यज्ञेषु पशुद्रव्यस्य समावेशोऽपि कालान्तरे जात इति चरकवचनेन सुतराम् अभिव्यज्यते। तथा हि—

**आदिकाले खलु यज्ञेषु पशवः समालभनीया बभूवुः, नालम्भाय प्रक्रियन्ते स्म। ततो दक्षयज्ञं प्रत्यवरकालं मनोः पुत्राणां नरिष्यन्नाभागेक्ष्वाकुनृगशर्यात्यादीनां च क्रतुषु पशूनामेवाभ्यनुज्ञानात् पशवः प्रोक्षणमापुः। अतश्च प्रत्यवरकालं पृषध्रेण दीर्घसत्रेण यजता पशूनामलाभाद् गवामालम्भः प्रवर्तितः।**[1]

पुरा किलैकेनैव यजुर्वेदेनानुष्ठेयोऽग्निहोत्रादिर्यज्ञः प्रववृते। ततो द्वाभ्याम् ऋग्यजुषवेदाभ्यां सम्पादनीया दर्शपूर्णमासादयः प्रचेरिरे। ततश्च त्रिभिर्ऋग्यजुःसामवेदैः साधनीया अग्निष्टोमादयो यज्ञा वितेनिरे। एतत् तथ्यं शातपथी श्रुतिः प्रमाणयति। तथा हि—

**यजुषा ह वै देवा अग्रे यज्ञं तेनिरे, अथर्चा, अथ साम्ना। तदिदम् अप्येतर्हि यजुषैवाग्रे यज्ञं तन्वते, अथर्चा, अथ साम्ना।**[2]

वैदिक कर्मकलापे व्यापृतानाम् ऋत्विजां संख्यापि तथैव क्रमिकविकासं लेभे यथा प्रदर्शितचरा वेदसंख्या। पुरस्तात् तावद् एकेनैवर्त्विजाध्वर्युणा कर्मजातम् अन्वष्ठायि, ततो होत्रध्वर्युभ्याम्, ततश्च होत्रध्वर्यूद्गातृभिः। मार्टिन हौगः खल्वपि वैदिक-पारसीककर्मकाण्डयोस्तुलनात्मकाध्ययनाद् इममेव निष्कर्षम् आययौ। ऐतरेयब्राह्मणभूमिकायां[3] प्रतिपादितस्य तन्मतस्य सार इह पुरस्क्रियते—

ब्राह्मणग्रन्थेषु श्रूयमाणोऽसुरशब्दः पारसीकान् अभिदधाति, देवासुर-संग्रामश्च वैदिक-पारसीकयोः सम्प्रदाय-संघर्षं व्यनक्ति। उभयोरपि सम्प्रदाययोर्यज्ञानुष्ठानानि प्रायः समानानि, तत्र प्रयुक्ताः पारिभाषिकशब्दाश्च सदृशाः परिदृश्यन्ते। तद्यथा— यस्न=यज्ञ, अहुरत्केशो=असुरदीक्षा, उख्द=उक्थ, यज्मैदे=ये यजामहे, होम=सोम, नबानज्दिस्त=नाभानेदिष्ठ, ज़ोता=होता, रथ्वि (रस्पि)=अध्वर्यु। पारसीकयज्ञे द्वावृत्विग्वर्गौ कर्माण्यनुतिष्ठतः। वैदिकयज्ञेऽपि होत्रध्वर्युवर्गाविव प्राचीनतमौ प्रतीयेते, तयोरेवाश्वमेधिकसूक्ते (ऋ० १।१६२) श्रुतत्वात्। आश्वमेधिकसूक्ते निरूपितो यज्ञः सोमयाग इति तत्र ग्रावग्राभश्रवणाद् निश्चीयते। तत्र चाध्वर्युप्रतिप्रस्थात्राग्नीध्रा होतृग्रावग्राभशंस्तारश्चेति द्वावृत्विग्वर्गौ समुल्लिख्येते। यद्यपि ब्रह्मशब्दोऽपि तत्र श्रूयते, तथापि स नर्त्विग्विशेषवाचकः, किन्तु वेदवाचकः[4] प्रती-

---

१. चरक चि० १९।३॥
२. शत० ब्रा० ४।६।७।१३॥
३. मार्टिन हौग, ऐ० ब्रा० भूमिका पृ० १२-३२॥
४. वत्सजङ्घाकृतिः कुशमुष्टिविशेषो वेद इति परिभाष्यते कर्मकाण्डे।

यते। प्राचीनतमयोर्ऋत्विजोर्होत्रध्वर्य्वोरपि होतुरेव प्राधान्यमासीद्, यतः स एव यथावसरम् ऋग्यजुषयोः प्रयोक्ता बभूव। अध्वर्युस्तु किल वेदिनिर्माण-पात्रासादनादिश्रमसाध्यकर्मसम्पादकत्वेन होतृसहायोऽभूत्। एतच्च सम्प्रत्यपि केषाञ्चिद् अध्वर्युकर्तृककर्मणां होत्रानुष्ठितत्वात् कल्प्यते। तद्यथा—प्रैषो यजुष्ट्वाद् अध्वर्युकर्तृकः, परन्तु अध्रिगुप्रैषो (ऐ० ब्रा० २।६,७) होत्रानुष्ठीयते नाध्वर्युणा। सोमयागेषु विकसितेषु स्तोत्राणां समावेशात् तृतीय ऋत्विग् उद्गाता नाम समाविष्टः। ततो यज्ञप्रक्रियायां दुरवगाहायां संजातायां निर्दोषकर्मसम्पादनार्थं चतुर्थस्य ब्रह्मनामकस्यर्त्विजोऽपि समावेशोऽजायत। अन्त्यर्त्विग्द्वयस्य समावेशो वैदिक-पारसीकसम्प्रदायविभागानन्तरं बभूवेति ऋग्वेदे (१।१०।१) तच्छ्रवणात् पारसीकसम्प्रदाये च तदनुल्लेखात् कल्प्यते। ऋग्वेदे (१०।९१।१०) सर्वे ऋत्विजः श्रूयन्ते। यद्यपि—**मो षु ब्रह्मेव तन्द्रायुर्भुवः** (ऋ० ८।९२।३०) इति वचनं ब्रह्मणः स्वल्पकर्मकृत्त्वं सूचयति, तथाप्यन्यत्र (ऋ० १०।७१।११ ; ११७।८) तस्य सर्वज्ञत्वं सुतरां ध्वन्यते। एतादृग्योग्यतासम्पन्ना एव विदग्धा ब्रह्माणो ब्राह्मणानि प्रोचुरित्यधस्ताद् उपपादयिष्यते।

## ४. श्रौतकर्मकाण्डेऽथर्ववेदस्य स्थानम्

सुविकसितोऽयं श्रौतकर्मकलापो वेदप्रतिपादित इति शास्त्रकृद्भिरुद्घोष्यते। यज्ञसिद्धयर्थमेव वेदप्रादुर्भाव इति प्राचीनाचार्यैरास्थीयते। तथा च स्मरति मनुः—

**अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।**
**दुदोह यज्ञसिद्धयर्थम् ऋग्यजुःसामलक्षणम्** ॥ मनु १।२३॥

जैमिनिरपि सूत्रयति—

**आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्** । पू० मी० १।२।१॥

वेदाङ्गज्योतिषे खल्वप्युक्तम्—

**वेदा यज्ञार्थमभिप्रवृत्ताः** ।

न्यायभाष्यकारो वात्स्यायनोऽप्याह—

**यज्ञो मन्त्रब्राह्मणस्य लोकवृत्तमितिहासपुराणस्य लोकव्यवहारव्यवस्थापनं धर्मशास्त्रस्य विषयः**। न्या० भा० ४।१।६२॥

यद्यपि वेदस्य लक्षणस्वरूपादिविषये मतानि भिद्यन्ते[1], तथापि वैदिककर्म-

---

१. (क) ऋचो वेदः...यजूंषि वेदः...अथर्वाणो वेदः...अङ्गिरसो, वेदः...सर्पविद्या वेदः...देवजनविद्या वेदः...मायावेदः...इतिहासो वेदः...पुराणं वेदः...। शत० ब्रा० १३।४।३।३—१३ ॥

काण्डप्रसङ्गे वेदश्रुत्याम्नायशब्दा मन्त्रब्राह्मणात्मकशब्दराशिम् अभिदधतीति सर्वैरूरीक्रियते[1]। तत्र—'अनुष्ठेयार्थस्मारका मन्त्राः' इति मन्त्रलक्षणं प्राहुः। मन्त्राश्च ऋग्यजुःसामभेदात् त्रिविधाः। तथा च जैमिनिस्तान् लक्ष्यति—

**तेषामृग् यत्रार्थवशेन पादव्यवस्था ॥**

**गीतिषु सामाख्या ॥**

**शेषे यजुःशब्दः ॥** पू० मी० २।१।३५–३७।

अयं मन्त्रविभागो रचनाविशेषप्रेक्षया विहित इति प्रतीयमानोऽपि कर्मकाण्डप्रसङ्गे ऋत्विग्विशेषसम्बद्धोऽधिगम्यते। तथा च श्रूयत ऐतरेयब्राह्मणे—

**यद् ऋचैव हौत्रं क्रियते यजुषाध्वर्यवं साम्नोद्गीथम्**···। ऐ० ब्रा० ५।३३॥

एवं च होतृव्यवहार्यमन्त्रा[2] ऋचः, तासां च संघातेनोपनिबद्धो ग्रन्थ ऋक्संहितेति, अध्वर्युव्यवहार्यमन्त्रा[2] यजूंषि, तेषां संघातेनोपनिबद्धो ग्रन्थो यजुःसंहितेति, उद्गातृव्यवहार्यमन्त्राः सामानि, तेषां संघातेनोपनिबद्धो ग्रन्थः सामसंहितेति निष्कर्षः। एषा समुदिता विद्या त्रयीति समाख्यां भजते।

वैदिककर्मकाण्डस्य श्रौतयागरूपायां प्रधानधारायाम् ऋग्यजुःसामवेदात्मिका त्रयी त्वेवोपयुयुजे पुरातनकाले। अथर्ववेदः खलु त्रयीवत् सनातनोऽपि शान्तिकपौष्टिकाभिचारिकादिकर्ममात्रोपयोगी बभूव।[3] यद्यपि गृह्यादिकर्मसु राजकर्मसु चाथर्वणिकाः प्रतिष्ठां प्रापुः, तथाप्युच्चाभियुक्तवर्गानुष्ठितश्रौतयागेषु त उपेक्षिता एव बभूवुः। एतच्च प्राचीनश्रौतवाङ्मये प्रायेण त्रय्या एव प्राशस्त्योल्लेखाद्, अवरकालिकवाङ्मये क्रमशोऽथर्ववेदसमावेशोपलम्भाद्, आथर्वणिकवङ्मये चाथर्ववेदब्रह्मर्त्विजोर्माहात्म्यातिशयसंकीर्त्तनात् कल्प्यते। तथा हि—

ऋग्वेदे तावत् अथर्ववेदस्य भेषजाथर्वाङ्गिरआदिभिर्नामभिरुल्लेखो न विद्यते। तत्र सामान्यस्य (ऋ० ८।११।५) विशेषस्य (ऋ० १०।६०।६) चोल्लेखस्यावसरा अपि स्वल्पा एव सन्ति, ऋग्वेदस्य देवशंसनप्रधानत्वात्। यद्यपि श्रुतावथर्वाङ्गिरोभृगवस्तादृशमास्पदं प्रापुर्यादृशमन्य ऋषयः, तथापि श्रौतप्रतिपाद्ये कर्मणि (यागे)

---

(ख) मन्त्रश्च द्विधा वैदिकस्तान्त्रिकश्च ॥ सर्वदर्शनसंग्रह—योगप्रकरणे।

(ग) श्रुतिश्च द्विधा वैदिकी तान्त्रिकी च ॥ मनु० २।१ कुल्लूकभट्टः।

१. मन्त्राणामेव शक्त्या वेदत्वं, ब्राह्मणानां तु लक्षणयेत्याचार्याः श्रीयुधिष्ठिरमीमांसकपादा वेदश्रुत्याम्नायमीमांसायां निरणैषुः।

२. प्रायिकम् एतत्, क्वचिद् व्यत्यासदर्शनात्।

३. द्र०—मनु० ३।१ कुल्लूक-मेधातिथ्योर्भाष्ये।

भेषजादिकर्मणोऽल्पत्वाद् न श्रौतवाङ्मयेऽथर्ववेदोल्लेखः। साहित्यिकविधाप्रसङ्गे तु तत्रापि त्रय्या अनन्तरम् अथर्ववेद उल्लिख्यते, तदनन्तरं चेतिहासपुराणगाथादीनि विन्यस्यन्ते। तद्यथा—ऋग्भ्यः स्वाहा यजुर्भ्यः स्वाहा सामभ्यः स्वाहाङ्गिरोभ्यः स्वाहा वेदेभ्यः स्वाहा गाथाभ्यः स्वाहा नाराशंसीभ्यः स्वाहा।[१] तथैवोपनिषत्स्वपि त्रय्या अनन्तरम् अथर्ववेद उल्लिख्यते। तद्यथा—तस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः····।[२] उपनिषत्सु क्वचित् त्रयीमात्रमेव श्रूयते।[३] यद्यपि गृह्यवाङ्मयस्याथर्ववेदेन घनिष्ठः सम्बन्धः, तथापि सर्वस्य वाङ्मयस्य त्रय्या प्रभावितत्वाद् गृह्यमपि प्रायस्तयैव सम्बध्यते, अथर्ववेदेन सह विशिष्टः सम्बन्धो न क्वचिद् निरूप्यते। क्वचित् तु पूर्ववत् त्रय्या अनन्तरम् अथर्ववेदः स्मर्यते।[४] क्वचिद् विशिष्टोल्लेख उपलभ्यते[५], अन्यत्र त्रयीमात्रमेव संकीर्त्यते।[६] अथर्ववेदस्य यथोचितं महत्त्वं गृह्यसूत्रेष्वेव प्रकटीभवति। धर्मसूत्रेष्वस्य स्मरणं स्वल्पमेव विद्यते, तत्र चापि त्रय्या अनन्तरम् अस्योपन्यास इतिहासादिपरकः।[७] मनुस्मृतौ (११।३३) आङ्गिरसी श्रुतिः, याज्ञवल्क्यस्मृतौ चाथर्वणिकं राजपौरोहित्यं निर्दिश्यते। वाल्मीकिना रामायणे त्रय्या एवोल्लेखः क्रियते।[८] महाभारतेऽथर्ववेदस्य पूर्णं महत्त्वम् अभिव्यज्यते (राजकर्माणि)।[९] यद्यपि महाभारतेऽपि क्वचित् पूर्ववत् त्रयी स्मृता, तथापि प्राधान्येन वेदचतुष्टयं वर्ण्यते। तद्यथा—

**ऋग्वेदः सामवेदश्च यजुर्वेदश्च पाण्डव।**
**अथर्ववेदश्च तथा सर्वशास्त्राणि चैव हि॥** महा० सभा० ११।३२॥

---

१. तै० सं ७।५।११।२ ॥ अपि द्र०—काठ० सं ५।२॥ शत० ब्रा० १०।५।२।१० ॥ तै० ब्रा० ३।१२।८।२॥ तै० आ० २।९।२ ॥ आश्व० श्रौ० १०।७।१ आदि ॥ शाङ्खा० श्रौ० १६।२।२ आदि ॥

२. बृह० उप० २।४।१० ॥ अपि द्र०—छा० उप० ३।१—४ ॥ मु० उप० ६।३२ ॥

३. मु० उप० २।१६ ॥ प्रश्न० २।६॥ नृ० ता० ५।२ ॥

४. आश्व० गृ० ३।३।१—३ ॥ शाङ्खा० गृ० १।२४।८ ॥ हिरण्य० गृ० २।१९।१६ ॥

५. शाङ्खा० ग० १।१६।३ (ब्रह्मवेदः); पार० गृ० २।१०।७ (अथर्ववेदः), २।१०।२१ (अथर्वणाम्); हिरण्य० गृ० २।३।९ (अथर्ववेदः)।

६. शाङ्खा० गृ० १।२२।१५ ॥ हिरण्य० गृ० १।५।१३ ॥

७. विष्णु स्मृ० ३०।३७ ॥ बौ० ध० २।५।९।१४ ॥ याज्ञ० स्मृ० १।४४ ॥ औषनस स्मृ० ३।४४ ॥

८. वा० रा० ४।३।२८ ॥

९. महा० ५।१०८।१०; ३।२०३।१५ ॥

इत्थं साहित्यिकविधारूपेण सम्मतोऽप्यथर्ववेदः श्रौतकर्मकलाप उपेक्षित एवासीदिति निष्कर्षः ।

आथर्वणिककर्मकाण्डवाङ्मयेऽथर्ववेदस्य तत्सम्बद्धर्त्विक्पुरोहितयोर्माहात्म्यम् अतिशयोक्त्या संकीर्त्यते । तथा हि—

(क) अथर्ववेदः संस्तूयते—

एतद् वै भूयिष्ठं ब्रह्म यद् भृग्वङ्गिरसः। गो० ब्रा० १।३।४।।

त्रिविष्टपं त्रिदिवं नाकमुत्तमं तमेतया त्रय्या विद्ययैति ।

अत उत्तरे ब्रह्मलोका महान्तोऽथर्वणामाङ्गिरसां च सा गतिः ।। गो० ब्रा० १।५।२५।।

(ख) ब्रह्मणो महत्त्वं प्रदर्श्यते—

अथ वितानस्य ब्रह्मा कर्मणि ब्रह्मवेदविद् दक्षिणतो विधिवदुपविशति वाग्यतः । वैतान० १।१।।

ऋत्विजो वृणीते । अथर्वाङ्गिरोविदं ब्रह्माणं सामविदम् उद्गातारम् ऋग्विदं होतारं यजुर्विदम् अध्वर्युम् । वैतान० ११।२।।[1]

एष ह वै विद्वान् सर्वविद् ब्रह्मा यद् भृग्वङ्गिरोविद् । गो० ब्रा० १।२।१८।।

तैत्तिरीयसंहितायां (३।५।२।१) श्रूयमाणम्—तस्माद् वसिष्ठो ब्रह्मा कार्यः—इति वाक्यं गोपथकारेण (गो० ब्रा० २।२।१३) परित्यज्यते । अपि च राष्ट्रसंवर्गेऽथर्वपरिशिष्ट उक्तम्—

ब्रह्मा शमयेन्नाध्वर्युर्नच्छन्दोगो न बह्वृचः ।
रक्षांसि रक्षति ब्रह्मा ब्रह्मा तस्मादथर्वविद् ।।

(ग) पुरोहितः संगीयते—

तत्र भूमिपतिर्विद्वांसं ब्रह्माणम् इच्छेत् । एष ह वै विद्वान् यद् भृग्वङ्गिरोविद् । एते ह वा अस्य सर्वस्य शमयितारः पालयितारो यद् भृग्वङ्गिरसः । कौशिक० ९४।२-४।।

बह्वृचो हन्ति वै राष्ट्रम् अध्वर्युर्नाशयेत् सुतान् ।
छन्दोगो धनं नाशयेत् तस्माद् आथर्वणो गुरुः ।। राष्ट्रसंवर्ग,अथर्व० परि० २।।

अथैवंविधस्याथर्वणिकानां स्वकत्थनस्य किं प्रयोजकम् इत्यन्विष्यते । श्रौतयागेषु होत्रध्वर्यूद्गातार ऋग्यजुःसामभिरनुष्ठेये स्वस्वकर्मणि प्रवीणाः सन्तो

---

१. अपि द्र०—गो० ब्रा० १।२।१६ ।।

ऽपि पारस्परिकसमन्वयार्थं त्रयीविद्या-तदनुष्ठेयकर्म-तदरहस्यविदम् अनूचानविशेषम् अपेक्षन्ते स्म । श्रूयते खल्वपि—

**परिमिता वा ऋचः परिमितानि सामानि परिमितानि यजूंषि,**
**अथैतस्यैवान्तो नास्ति यद् ब्रह्म ।** तै० सं० ७।३।१।४॥

त्रयी विद्या, तदनुष्ठेयकर्माणि, तेषां रहस्यं चैतत् सर्वं ज्ञानं ब्रह्मपदवाच्यम् । 'ब्रह्मोद्यम्' 'ब्रह्मवादिनो वदन्ति' इत्यादिषु व्याहरणेषु श्रूयमाणो ब्रह्मशब्दस्तादृग् ज्ञानमेवाभिदधाति । इदमेव च ब्रह्म (ज्ञानम्) कालान्तर उपनिषत्सु आत्मपर्यायो बभूव । इदमेव चतुर्थी विद्या—चतुर्थो वेदः—इति व्यपदिश्यते स्म । एतादृग्ज्ञान-सम्पन्नश्च विपश्चिद् 'ब्रह्मा' इत्युपाधिं भेजे ।[1] नास्य सम्बन्धो ऽथर्ववेदेन सहासीदि-त्यैतरेयवचनेन प्रमाप्यते । तथा हि—

**ऋङ्मयो यजुर्मयः साममयो वेदमयो ब्रह्ममयोऽमृतमयः सम्भूय देवता अप्येति ...** । ऐ० ब्रा० १।२२।१५॥

तथैवाथर्ववेदेऽपि क्वचित् प्रयुज्यमानस्य[2] ब्रह्मपदस्य नाथर्वणा सम्बन्धः । वस्तुतस्त्रयीं प्रति यद् ब्रह्म बभूव, स एव होत्रध्वर्यूद्गातॄन् प्रति ब्रह्मा बभूवेति शक्यते वक्तुम् । ऋत्विक्कर्मणां विनियोगम् आचक्षाणायाम्—

**ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु ।**
**ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः ॥**

ऋ० १०।७१।११॥

इत्यस्याम् ऋचि श्रूयमाणं ब्रह्मपदं विवृण्वानो यास्कोऽपि न ब्रह्माणम् अथर्वणा सम्बध्नाति । तथा चाह—**ब्रह्मा सर्वविद्यः, सर्वं वेदितुमर्हति, ब्रह्मा परिवृढः श्रुततः**(निरु० १।८)इति । ऐतरेयब्राह्मणे यच्छ्रूयते—**यद् ऋचैव हौत्रं क्रियते यजुषा-ध्वर्यवं साम्नोद्गीथं व्यारब्धा त्रयी विद्या भवत्यथ केन ब्रह्मत्वं क्रियत इति । त्रय्या विद्ययेति ब्रूयात्** (ऐ० ब्रा० ५।३३ )—इति, अत्रापि ब्रह्मत्वं नाथर्वाङ्गिरोभिः सम्बध्यत इति स्पष्टम् । तथैवान्यत्र—**तद् वाचा त्रय्या विद्ययैकं पक्षं संस्कुर्वन्ति, मनसैव ब्रह्मा संस्करोति** (ऐ० ब्रा० ५।३३) इति, ब्रह्मणो विपुलज्ञानेन यज्ञस्य संस्कर्तृत्वं व्याहृतम् । वस्तुत आथर्वणव्यतिरिक्तवाङ्मय आथर्वणिकानां तादृश-विशिष्टयोग्यतासम्पन्नत्वं नोदीर्यते । कालान्तरे तु त्रयाणाम् ऋत्विजां त्रय्या

---

१. वैदिकवाङ्मये ब्रह्मशब्दो द्वैधं प्रयुज्यते—आद्युदात्तोऽन्तोदात्तश्च । तत्राद्युदात्तो ब्रह्मशब्दो धात्वर्थप्राधान्याद् ज्ञानार्थकः, अन्तोदात्तस्तु प्रत्ययार्थप्राधान्याद् अनूचानार्थक इति स्वरविदां विवेकः ।

२. अथर्व० (शौ० सं०) ११।८।२३; १५।३।७; १५।६।३ ॥

सम्बद्धत्वात्, चतुर्थ ऋत्विग् ब्रह्मापि केनचिद् वेदेन सम्बद्धः स्यात्; स च वेदो नाथर्वाङ्गिरोभ्योऽन्य इति कृत्वाथर्वाङ्गिरोविदेव ब्रह्मा भवेद्—इत्याथर्वणिकैः प्रस्तुतः स्वप्राग्त्यसंकीर्त्तनसारभूतस्तर्कः स्वीकृतो बभूव। ततश्चाथर्ववेदो ब्रह्मवेद-समाख्यां लेभ इत्यैतिह्यविदः परिकल्पयन्ति।

अथर्ववेदे श्रौतकर्मणां सवनानां श्रवणात्[1] प्रायश्चित्तकर्मनिरूपणात्[2] चाथर्वणिकानां श्रौतकर्मज्ञत्वं स्वीकर्त्तव्यमेव, भवतु स्वल्पमेव तज्ज्ञानम्। ततश्चोपरिष्टात् प्रस्तुता परिकल्पना नैकान्तिकीति दिक्।

आथर्वणिकश्रुतेर्वेदत्वं गोपथब्राह्मणकालात् पूर्वमेव प्रतिष्ठितम् आसीत्। **अस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणम्**···(बृ० उप० २।४।१०) इत्यादीनि वचनानि चात्र प्रमाणम्। मध्यकालिकाचार्याणां त्वयं विषयः सांशयिक आसीदिति सायणीयाथर्ववेदभूमिकायां[3] प्रस्तुतेन चोद्यपरिहारेणाक्षिप्यते। तस्य त्वयं सारः—

**यज्ञं व्याख्यास्यामः। स त्रिभिर्वेदैर्विधीयते** (सत्या० १।१) इति स्मरणात्, **त्रयो वेदा अजायन्त, ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्** (ऐ० ब्रा० ५।३२), **ऋचः सामानि जज्ञिरे यजुस्तस्मादजायत** (ऋ० १०।९०।९) इति त्रयाणां प्रादुर्भावश्रवणात्, **वेदैरशून्यस्त्रिभिरेति सूर्यः** (तै० ब्रा० ३।१२।९।१) **यम् ऋषयस्त्रैविदा विदुः, ऋचः सामानि यजूंषि** (तै० ब्रा० १।२।१।२६) इति संख्यानियमात्, ब्रह्मकर्त्तव्यस्यापि त्रय्यैव सिद्धत्वात् (ऐ० ब्रा० ५।३३) चतुर्णां होत्रादीनाम् ऋत्विजाम् अपेक्षितस्य क्रियाकलापस्य त्रय्यैव सिद्धत्वाद् न चतुर्थस्य वेदस्याकाङ्क्षेति चोद्यम् उद्भाव्य परिह्रियते—त्रय्यां तत्र तत्र प्रतिपादितं यद् ब्रह्मत्वं तदथर्ववेदसिद्धमेव लेशेनोक्तम् इत्यतात्पर्यविषयत्वाद् अकृत्स्नत्वाच्च नादरणीयम्। अकृत्स्नत्वादेव यज्ञार्द्धं त्रिभिर्वेदैर्निष्पाद्यतेऽर्द्धान्तरं त्वथर्ववेदेनेति श्रूयते। तथा हि—

**प्रजापतिर्यज्ञमतनुत। स ऋचैव हौत्रमकरोद् यजुषाध्वर्यवं साम्नौद्गात्रम् अथर्वाङ्गिरोभिर्ब्रह्मत्वम्···स वा एष त्रिभिर्वेदैर्यज्ञस्यान्यतरः पक्षः संस्क्रियते। मनसैव ब्रह्मा यज्ञस्यान्यतरं पक्षं संस्करोति**। गो० ब्रा० १।३।२।

'स त्रिभिर्वेदैर्विधीयते'—इति स्मृतिस्तूदाहृतश्रुत्यनुसारेण मुख्याथर्वविदोऽसम्भवे तत्तच्छाखासु यावदुक्तब्रह्ममात्रेणापि क्रतुशरीरनिष्पत्तिर्भवतीत्येवमभिप्राया।

---

१. अथर्व० (शौ० सं) ६।४७,४८ सूक्ते। अपि द्र०—वैतान० २१।७॥
२. अथर्व० (शौ० सं०) ६।११४ सूक्ते।
३. अपि द्र०—मनु० २।६. मेधातिथिभाष्यम्।

'त्रय्या विद्ययेति ब्रूयाद्'—इति श्रुतिरपि प्रकृतव्याहृतित्रयापेक्षत्वाद् अविरुद्धा। 'अस्य महतो भूतस्य'—इति वाजसनेयश्रुत्यनुसारेण त्रयाणाम् उत्पत्तिश्रुतिरुपलक्षणतया व्याख्येया। 'वेदैरशून्यस्त्रिभिरेति सूर्यः'—इति श्रुतिः प्रकृतकालत्रयाभिप्रायेण। 'यमृषयस्त्रैविदा विदुः'—इति त्रैविध्यं तु वेदगतमन्त्राभिप्रायम्। तदेवम् आमुष्मिकफलेषु दर्शपूर्णमासादिष्वयनान्तेषु त्रयीविहितकर्मस्वपेक्षितब्रह्मत्वम् अनन्यलभ्यत्वाद् अथर्ववेदैकसमधिगम्यम् इति स्थितम्।

सायणकृतसमाधाने यज्ञस्य तदृत्विजां चैतिहासिकविकासस्य नावलोक्यतेऽवकाशः। वस्तुत इतिहासपरिष्कृताधुनिकपक्षः प्रत्यभादेव न हि मध्यकालिकानाम् आचार्याणाम्। अस्तु। अन्ततः श्रौतकर्मकाण्डेऽथर्ववेदश्चतुर्थवेदत्वेन, ब्रह्मा चाथर्वणिकर्त्विक्त्वेन प्रतिष्ठितं पदं समुपालभेताम्।

## ५. आथर्वणिक-वाङ्मयम्

### ५. ०. अथर्ववेदनामधेयानि—

चतुर्थोऽयं वेदः प्रथमतोऽथर्वाङ्गिरस इति समाख्यया प्रसिद्धो बभूव। एषा च समाख्यास्य स्वकीय एव शरीरे उपलभ्यते। तद्यथा—

**यस्मादृचोऽपाक्षन यजुर्यस्मादपाकषन्।**
**सामानि यस्य लोमान्यथर्वाङ्गिरसो मुखं**
**स्कम्भं तं ब्रूहि कतमः स्विद् एव सः॥** अथर्व० (शौ० सं०) १०।७।२०॥

अथर्वाणोऽङ्गिरसश्च सम्भूय संहितानाम प्रयोजयन्तीति तेषां विगृहीतप्रयोगदर्शनात् कल्प्यते। पुरातनकालेऽथर्वाणः शान्तिक-पौष्टिक-भेषजरूपेण, अङ्गिरसश्च यात्वाभिचारिकघोररूपेण ख्यातिं लेभिरे।[1] अयं विभाग आथर्वणसम्प्रदायादन्त्रापि प्रसिद्ध आसीत्।[2] आथर्वणवाङ्मयेऽयं वेदो भृग्वङ्गिरस इति नाम्नापि समुल्लिख्यते।[3] परन्तु भृगव इति वा भृगुवेद इति वा विगृहीतप्रयोगो न तथोपलभ्यते यथाथर्वाण इति। अथर्वाङ्गिरोभृगवः परस्परं सम्बद्धा इति मन्त्रब्राह्मणलिङ्गेन कल्प्यते।[4] आथर्वणकर्मकाण्डवाङ्मयेऽयं वेदो ब्रह्मवेद इति संज्ञयापि स्मर्यते।[5]

---

१. गो० ब्रा० १।२।२१; १।५ १० ॥ शत० ब्रा० १०।५।२।२० ॥ अथर्व० (शौ० सं०) ११।६।१४ ॥

२. शत० ब्रा० १३।४।३।३ ॥ आश्व० श्रौ० १०।७।१ आदि ॥ शाङ्खा० श्रौ० १६।२।६ आदि ॥ पञ्च० ब्रा० १२ ६।१० ॥ ३. गो० ब्रा० १।१।३; १।२।२ ॥

४. ऋ० १०।१४।६; १०।६२।१०; ८।४३ १३॥ तै० सं० ५।१।४।४ ॥ पञ्च० ब्रा० १२।८।६ ॥ शत० ब्रा० ६।१।५।१ ॥

५. गो० ब्रा० १।२।२२; २।२।६ ॥ वैतान० १।१ ॥

शौनकः सुभेषज इत्याख्यया निर्दिदेशेमं वेदम् ।[१] अथर्वाङ्गिरस इत्येवास्य वेदस्य प्रसृततमा समाख्यासीदिति संक्षेपेणाथर्ववेद इति नाम प्रावर्त्तिष्ट ।

### ५. १. शाखाः

चरणव्यूहनामक आथर्वणपरिशिष्टेऽथर्ववेदस्य नव शाखाः प्रदिश्यन्ते—पैप्पलादाः, तौदाः, मौदाः, शौनकीयाः, जाजलाः, जलदाः, ब्रह्मवदाः, देवदर्शाः, चारणवैद्याश्चेति । एतासु पैप्पलाद-शौनकीये शाखे सम्प्रत्युपलभ्येते । तत्र शौनकीय-संहितायाः प्रचुरप्रचाराया विंशतिकाण्डात्मिकाया एकत्रिंशदधिकसप्तशतेषु सूक्तेषु विभक्तानां षट्सहस्राणां मन्त्राणां षष्ठोंऽशो यजूंषि शेषश्चर्च इति परिमाण-विवेकः । अस्या अन्त्यं काण्डद्वयम् अथर्वप्रातिशाख्य-पञ्चपटलिकयोः संकलनाभावाद् अर्वाचीनम् इत्याधुनिका आतिष्ठन्ते ।[२] काण्डानां प्रथमसप्तके लघुसूक्तानि न्यस्यन्ते, तत्रादिमपञ्चके प्रायो मन्त्रसंख्यावृद्धिक्रमः (४, ५, ६, ७, ८), षष्ठसप्तमयोश्च मन्त्रसंख्याह्रासक्रमः (३, २) आश्रीयते । अष्टमम् आरभ्याष्टादशात् काण्डाद् बृहत्-सूक्तानि न्यस्यन्ते पञ्चदश-षोडशवर्जम्, तत्र क्रमशः प्रतिकाण्डं सूक्तसंख्या ह्रसति, मन्त्रसंख्या च वर्द्धते । अष्टमप्रभृत्यासप्तदशं काण्डविन्यासोऽनुवाकसंख्याह्रासक्रमम् अनुरुणद्धीति प्रतीयते । पैप्पलादी संहिता सम्प्रति स्वरचिह्नरहितोपलभ्यते । सा खलु विंशतिकाण्डात्मिका पञ्चोत्तराष्टशतकाण्डिकायुता सार्द्धषट्सहस्रमन्त्रसम्पन्ना विद्यते । तत्र काण्डानुवाककाण्डिकामन्त्रा इति विभागक्रमः, प्रत्यनुवाकं प्रायः पञ्च काण्डिकाः (=सूक्तानि) संकलिताः । आद्यत्रयोदशसु काण्डेषु प्रतिकाण्डं मन्त्री वृद्धिक्रमेण (४—१२) न्यस्यन्ते । विषयोपन्यासक्रमोऽत्र शौनकीयसंहितातो बहुधा भिद्यते ।

### ५. २. संहिताविषयाः

अथर्ववेदे प्रतिपादिता विषयाः प्राधान्येन द्विधा विभज्यन्ते—शान्ता घोराश्च । तथा चोक्तं वायुपुराणे—

**ब्रह्मवेदस्तथा घोरैः कृत्याविधिभिरन्वितः ।**
**प्रत्यङ्गिरसयोगैश्च द्विशरीरशिरोऽभवत् ॥** वायु० पु० ६५।२७।

कौशिकसूत्रे वहुषु कर्मस्वाथर्वणिकमन्त्राणां विनियोगः प्रदर्शितः । तमाधृत्य ब्लूमफील्डः सम्पूर्णम् अथर्वाभिहितविषयं चतुर्दशधा विभज्य वर्णयामास[३] स एव विभागोऽत्र निरूपितविषयस्वरूपनिदर्शनार्थं दिङ्मात्रेणानुवर्ण्यते । तथा हि—

---

१. ऋ० प्रा० १६।८८ ॥ तु०—सौभेषजं छन्दः (गो० ब्रा० १।५।२३) ।

२. मो० ब्लूमफील्डः, दि अथर्ववेद एण्ड दि गोपथब्राह्मण, द्वितीयखण्डे ।

३. मो० ब्लूमफील्डः, दि अथर्ववेद एण्ड दि गोपथब्राह्मण, तृतीयखण्डे ।

(१) भैषज्यानि—आधिव्याधीनाम् उपचारार्थं भैषज्यानि सूक्तानि प्रयुज्यन्ते। भैषज्यमन्त्रैर्देवा आहूयन्ते प्रार्थ्यन्ते च। प्रयोगेषु न केवलं वानस्पत्यान्यौषधानि, अपितु प्रतीक-जलयन्त्रादय उपायाः समाविश्यन्ते।

(२) आयुष्याणि—दीर्घायुष्य-शारीरधातुसाम्यादिकामनापराणां मन्त्राणामत्र समावेशः। अग्निरत्र प्रधानो देवः, रक्षासूत्र-मणि-मुक्तादीनि च साधनानि निर्दिश्यन्ते।

(३) आभिचारिकाणि, कृत्याप्रतिहराणि—दैत्य-यातुधान-शत्रूणां संहार एभिर्मन्त्रैरुद्दिश्यते। अग्नीन्द्रबृहस्पत्यादयोऽत्र देवाः, यन्त्र-वनस्पत्यादयश्चोपायाः प्रोच्यन्ते।[1]

(४) स्त्रीकर्माणि—स्त्रीणां सम्मोहन-गर्भधारण-प्रसव-वशीकरणादिविषयका मन्त्रा अत्र संगृह्यन्ते।

(५) साम्मनस्यानि—पारिवारिक-सामाजिकसौमनस्यं, क्रोध-कलहशान्तिः, वादजयः, सभाप्रभाव इत्येवंविध विषया अत्र निरूप्यन्ते।

(६) राजकर्माणि—राज्ञोऽभिषेक-निर्वाचन-रक्षा-यशः-प्रभाव-विजयादिविषयकाः मन्त्रा अत्र संगृहीताः।

(७) ब्रह्मण्यानि—ब्राह्मणेभ्यः पुष्कलदक्षिणादानं तेषामवध्यता, तेजः-शापप्रभावाश्च येषु मन्त्रेषु वर्ण्यन्ते, तेऽत्र संकलिताः।

(८) पौष्टिकानि—सम्पत्प्राप्तिं विपन्निवृत्तिं चोद्दिश्य येषां मन्त्राणां प्रयोगस्तेषामत्र संनिवेशः। अथर्ववेदस्य प्रायः पञ्चमांशः पौष्टिकैर्मन्त्रैराकीर्णः।

(९) प्रायश्चित्तीयानि—पापस्याशौचस्य चापाकरणार्था प्रार्थना येषु मन्त्रेषु विद्यते, तेऽत्र सङ्गृहीताः।

---

१. कृत्यावलगाभिचारा विद्विषां वधबाधोपायाः। एतेषां स्वरूपमधिकृत्य मतानि भिद्यन्ते। सायणादयस्तावत् संगिरन्ते—शत्रुवधाद्युद्दिश्यानुष्ठीयमानानि "मारण-मोहन-स्तम्भन-विद्वेषणोच्चाटन-वशीकरणानि तन्त्रोपदिष्टानि षट् कर्माणि 'अभिचार' इत्युच्यते। 'कृत्या अभिचारकर्मभिरुत्पादिताः पिशाच्यः। अभिचारकर्माणि जडत्वात् स्वयमेव शत्रुसमीपमागत्य न विघ्नन्ति, किं तु हिंसिकाः पिशाचीरुत्पादयन्ति' (अथर्व० १९।९।९ सायणभाष्ये)। कृत्यासाधनमपि कृत्येत्युपचर्यते—'कृत्या नाम मृद्दार्वादिना निर्मितपुत्तल्यादि' (अथर्व० १९।३४।२ सायणभाष्ये)। 'पीडार्थं भूमेरधो बाहुप्रदेशे निखन्यमाना अस्थिकेशादिवेष्टिता विषवृक्षादिनिर्मिताः पुत्तल्यो वलगा इत्युच्यन्ते' (अथर्व० १९।९।९ सायणभाष्ये)। अथापरेऽभिमन्यन्ते—शत्रुवधमुद्दिश्य विषसम्पृक्ताशनपानादीनां प्रयोगोऽभिचारः, विषयुक्तपदार्थैर्वायुप्रदूषणं विस्फोटकपदार्थैश्च शालानगरादिध्वंसः कृत्या, भूम्यादौ निखातः सुगुप्तो वैद्युतिकः प्रयोगो वलग इत्यभिधीयते (प्रियरत्नकृते 'अथर्ववेदीयमन्त्रविद्या' नामके ग्रन्थे)।

(१०) **सर्गाध्यात्मविषयकाणि**—सृष्टिविषयका आध्यात्मिकाश्च मन्त्राः प्रायोऽष्टमाद्यूनविंशान्तेषु काण्डेषु विन्यस्ताः ।

(११) **याज्ञानि साधारणानि च**—यज्ञसम्बन्धिनो मन्त्रा अत्र समाविष्टाः ।

(१२) **वैयक्तिकविवेचनानि**—त्रयोदशाद्यष्टादशान्तेषु काण्डेषु व्यपवृक्तविषया दृश्यन्ते । तत्र त्रयोदशे रोहितः (सूर्यः), चतुर्दशे विवाहः, पञ्चदशे व्रात्यः (पैप्पलादेऽभावः), षोडशेऽभिषेक-दुःस्वप्नादिः, सप्तदशे आयुष्यम् (एकं सूक्तम्), अष्टादशे चान्त्येष्टिः प्रतिपाद्यते ।

(१३) **विंशः काण्डः**—शस्त्रकाण्डः । कुन्तापवर्जम् अवशिष्टानि सूक्तानि वेदान्तरादिह पठितानि ।

(१४) **कुन्तापसूक्तानि**—विंशे काण्डे त्रयोदश सूक्तानि (१२७-१३६) कुन्तापसंज्ञकानि ।

**५. ३ कल्प-ब्राह्मणोपनिषद्-लक्षण-परिशिष्टानि**

संहिता-ब्राह्मण-श्रौत-गृह्यसूत्राणीति वैदिकवाङ्मयस्य साधारणक्रमस्य व्यत्यासेनाथर्वणवाङ्मये संहिता-गृह्य-श्रौत-ब्राह्मणानीति क्रमोऽनुस्रियते । तत्र कौशिकसूत्रं, वैतानसूत्रं, गोपथब्राह्मणम् इति यथासंख्यं गृह्य-श्रौत-ब्राह्मान्याथर्वणिकानाम् । अस्य वेदस्य पञ्च कल्पाः प्रसिद्धाः—संहिताकल्पः (कौशिकसूत्रम्), वैतानकल्पः (वैतानसूत्रम्), नक्षत्रकल्पः, शान्तिकल्पः, आङ्गिरसकल्पः (अभिचारकल्पः) । तत्र कौशिकसूत्रं संहिताविधिनाम्ना[1] प्रसिद्धं शौनकादिचतुश्शाखासम्बद्धं विस्तरेण मन्त्रविनियोगं विदधाति । चतुर्दशाध्यायात्मकोऽयं ग्रन्थ एकचत्वारिंशदुत्तरशत-कण्डिकासु विभज्यते । तत्रान्त्यम् अध्याययुगलम् अर्वाचीनम् इत्याधुनिकाः ।[2] आयुष्यगणः, चातनागणः, कृत्यागण इत्येवं गणसरणिम् अनुसृत्य कौशिको मन्त्रविनियोगं प्रदर्शयन्नपि मन्त्रपदार्थं न स्पृशतीति शतपथादिब्राह्मणतो विशेषः । अयं ग्रन्थः सप्तमादित्रिपञ्चाशत्तमान्तासु कण्डिकास्वेव स्वकीयम् आथर्वणिकस्वरूपं प्रकटयति । प्रायेणात्र गृह्यकर्माणि (आश्चर्यमिव श्रौतकर्माणि) निरूप्यन्ते । दारिलकृतं कौशिकभाष्यं,केशवकृता च केशवोपद्धतिरित्येतत् कौशिकसूत्रव्याख्याद्वयमंशतो ब्लूमफील्डसंस्करणपरिशिष्टे प्रकाशितम् । कौशिकप्रदिष्टानाम् आथर्वणिककर्मणां वैशिष्ट्यमिह समासतो निदर्श्यते—

(१) भैषज्यादीनां कर्मणां प्रधानं साधनं जलम् उपादीयते । एतच्च 'शान्त्यु-

---

१. 'तत्र चतसृषु शाखासु शौनकादिषु कौशिकोऽयं संहिताविधिः'—केशवीयव्याख्यादौ । अपि द्र०—सायणीयाथर्ववेदभाष्यभूमिका ।

२. मो० ब्लूमफील्डः, कौशिकसूत्रभूमिकायाम् ।

दक' रूपेण वा परोपकरणरूपेण वोपयुज्यते । अभिमन्त्रितं जलं यथावसरं स्नानपानाभिषेकादिकर्मसु व्यवह्रियते । (२) एकेनाग्निनैकेन चर्त्विजा कर्म सम्पाद्यते । पौष्टिककर्मसु (संस्थितहोमेषु) शान्तानि हवींषि (आज्यादीनि), आभिचारिकेषु च घोराणि (इङ्गिडतैलादीनि) हूयन्ते । (३) आथर्वणिककृत्येषूपयोगार्हाः पदार्था वानस्पत्याः (पुष्प-फल-मूल-पर्ण-काष्ठादयः), खनिजाः (धातवी मणयश्च), जैवाः (केशचर्मास्थिदन्तादयः), कृत्रिमाः (विषायुधचक्रवाद्यादयः) च भवन्ति । (४) रक्षामणियन्त्रादिरूपेण प्रयोक्ष्यमाणाः पूर्वोक्ताः पदार्था दधिमधुभ्यां संस्कृत्य, तदर्थाहुतिमग्नय उपहृत्य कारयितरि बध्यन्ते पुरोहितेन । तदेवं मन्त्रप्रयोगः, रक्षामणिबन्धनं, जलाभिषेकः, अग्निप्रज्वालनं, हविःप्रदानं चेति विधयो युगपद् अनुष्ठीयन्ते । (५) सर्वकर्मानुष्ठानकुशलः पुरोहित आथर्वणिककर्मस्वपरिहार्यः । (६) आथर्वणिककृत्येषु प्रतीका आश्रीयन्ते, तद्यथा शरविमोचनं सूत्रबन्धं प्रतिनिदधाति । साधर्म्येण संसर्गेण च प्रतीकविशेषः संवेदनमारभत इत्याधुनिकैराविष्कृतः सिद्धान्तः । इमान्यनुष्ठानानि कं कथं च मानसिकप्रभावम् उत्पादयन्तीति मनोविज्ञानविषयः, तत्र परेषामधिकार इति नात्र वितन्यते ।

वैतानसूत्रं वैतानकल्प-विधानकल्पापरपर्यायम् अष्टाध्यायात्मकं शौनकीयशाखया सम्बद्ध्यते । आथर्वणिकं श्रौतसूत्रम् इदं प्रधानतः कौशिकसूत्रं संहितावद् आश्रयति । यज्ञप्रायश्चित्तसूत्रं वैतायनसूत्रं वास्यैं परिशिष्टं प्रसिद्धम् । श्रौतकर्मनिरूपणेऽयं ग्रन्थः कात्यायनश्रौतसूत्रम् अनुवदते । अत्रापि कौशिकसूत्रवद् गणपद्धतिरङ्गीक्रियते । अस्य सोमादित्यकृता अवक्षेपनाम्नी व्याख्या प्रकाशिता विद्यते । नक्षत्रकल्पः कृत्तिकारोहिणीनाम्ना प्रसिद्धो नक्षत्राणां नामर्षिप्रभावादीनि निरूपयति । आङ्गिरसकल्पोऽभिचारकल्पो वा सम्प्रति नोपलभ्यते । शन्तिकल्पो नक्षत्रकल्पसदृशो ग्रहशान्त्यादिविधीन् निर्दिशति ।

आथर्वणिकानां ब्राह्मणं गोपथनाम् विस्तरेणाधस्ताद् वर्णयिष्यते । मुण्डकादयः सप्ततिरुपनिषदोऽथर्ववेदेन सम्बद्धाः श्रूयन्ते । द्विसप्ततिराथर्वणपरिशिष्टानि 'कौशिकोक्तानि परिशिष्टानि' इति शीर्षकेणोपलभ्यन्ते । तेष्वन्यतमश्चरणव्यूहो नाम निर्दिशति—**लक्षणग्रन्था भवन्ति चतुरध्यायो प्रातिशाख्यं पञ्चपटलिका दन्त्योष्ठ्यविधिः बृहत्सर्वानुक्रमणिका चेति** । तत्र चतुरध्यायी प्रायेणाथर्ववेदस्याद्याष्टादशकाण्डानां संक्षिप्तं प्रातिशाख्यम् । अथर्ववेदप्रातिशाख्यं, त्रिप्रपाठकात्मकं चतुरध्यायी-ग्रन्थाद् भिन्नम् । पञ्चपटलिका—ऋषि-देवता-छन्दसामनुक्रमणी, दन्त्योष्ठ्यविधिः—वकार-बकार-निर्णायको ग्रन्थः, बृहत्सर्वानुक्रमणी च शौनकीयसंहितामन्त्राणाम् ऋषिदेवताछन्दोऽनुक्रमः । माण्डूकी शिक्षा वर्णोच्चारणग्रन्थः, आथर्वणज्योतिषम् आत्मज्योतिषं वा मुहूर्त्तादिबोधको ग्रन्थ इति ग्रन्थद्वयमप्यथर्ववेदेन सम्बध्यते ।

## ६. ब्राह्मणम्—स्वरूपं भेदाश्च

कर्मकाण्डप्रसङ्गे मन्त्रब्राह्मणात्मकशब्दराशिर्वेद इत्यभिहितं पुरस्तात्। तत्र मन्त्रः ससामान्यविशेषो विविक्तोऽथ ब्राह्मणमपि ससामान्यविशेषं विविच्यते। नपुंसकलिङ्गो ब्राह्मणशब्दः[1] प्रवचनपर्यायो[2] यज्ञकृत्यानां मन्त्राणां च विवरणरूपं ग्रन्थम् अभिदधाति। तथा चाब्रवीद् भट्टभास्करः—**ब्राह्मणं नाम कर्मणस्तन्मन्त्राणां च व्याख्यानग्रन्थः**।[3] आपस्तम्बः—**कर्मचोदना ब्राह्मणानि**[4] इति प्रधानं ब्राह्मणलक्षणम् अभिधायार्थवादादीनपि पदार्थान् समुच्चेतुं सूत्रयामास—**ब्राह्मणशेषोऽर्थवादः, निन्दा प्रशंसा परकृतिः पुराकल्पश्च**।[5] जैमिनिः खल्वपि—**तच्चोदकेषु मन्त्राख्या**[6]—इति मन्त्रं परिभाष्य ब्राह्मणं लक्षयाञ्चक्रे—**शेषे ब्राह्मणशब्दः**।[7] मीमांसावृत्तिकारस्तु—**इतिकरणबहुलम्, इत्याहोपनिबद्धम्, आख्यायिकास्वरूपम्** इत्येतानि ब्राह्मणलक्षणानि प्रास्तावीत्। शबरस्वामिसायणावेतेषु लक्षणेष्वव्याप्त्यतिव्याप्तिदोषान् उद्भाव्य सम्प्रदायप्रसिद्धमन्त्रव्यतिरिक्तवेदभागस्य ब्राह्मणत्वम् आस्थितवन्तौ[8]। ब्राह्मणस्वरूपाववोधस्तु किलैतैर्लक्षणैर्न जायत इति नितरां स्पष्टम्।

वस्तुनस्तु त्रयी-तदनुष्ठेयकर्म-तद्रहस्यविदो ब्रह्मणः प्रधानर्त्विजस्तत्तत्कर्मप्रसङ्गे समभिव्याहृतं व्याख्यानात्मकं वाक्यं ब्राह्मणम् इत्यैतरेयादिग्रन्थेषु प्रयुक्तेन ब्राह्मणशब्देनाभिव्यज्यते। तथा हि—

**दुरोहणं रोहति। स्वर्गो वै लोको दुरोहणम्। स्वर्गमेव तं लोकं रोहति य एवं वेद। यदेव दुरोहण३म् असौ वै दुरोहो योऽसौ तपति। कश्चिद् वा अत्र गच्छति। स यद् दुरोहणं रोहत्येतमेव तद् रोहति। ऐ० ब्रा० ४।२०॥**

अत्र यद् 'दुरोहणं रोहति' इति व्याख्यायते, तदेव—**दुरोहणं रोहति तस्योक्तं ब्राह्मणम्** (ऐ० ब्रा० ६।२५) इत्यत्र प्रयुक्तेन ब्राह्मणशब्देन परामृश्यते। तथैव गौरि-

---

१. 'ब्राह्मणं ब्रह्मसंघाते वेदभागे नपुंसकम्'—मेदिनी।
२. 'प्रवचनशब्देन ब्राह्मणमुच्यते'। पुष्पसूत्र ८।८॥
३. तै० सं १।५ १ भाष्ये।
४. आप० श्रौ० परिभाषा २४।१।३२॥
५. ,, ,, ,, २४।१।३३॥
६. पू० मी० २।१।३२॥
७. पूर्व० मी० २।१।३३॥
८. पूर्व० मी० शावरभाष्य २।१।३३॥ सायणः, ऋग्वेदभाष्यभूमिकायाम्।

वीतस्य (ऐ० ब्रा० ४।२) उदुम्बर्यश्च (ऐ० ब्रा० ५।२४) व्याख्याने स्थलान्तरयोर्यथासंख्यम् ऐ० ब्रा० ८।२; ८।१७ इत्यत्र ब्राह्मणशब्देन स्मार्येते। एवं च याज्ञिकप्रसङ्गे ब्रह्मणः (पुं०) प्रवचनं ब्राह्मणम् इति निष्कर्षः। अवयवे प्रवृत्तोऽयं शब्दः समुदायेऽपि प्रवर्तते इति ग्रन्थोऽपि ब्राह्मणाभिधानं भजति। तथा च ब्रह्मणः (पुं०) इदम् इति व्युत्पत्त्या **तस्येदम्** (अष्टा० ४।३।१२०) इत्यौत्सर्गिकेऽणि ब्राह्मणम् इति निष्पद्यते। यत्तु सामश्रमी—न हि **ब्राह्मोऽजातौ** (अष्टा० ६।४।१७१) इति सूत्रे जाग्रति ब्रह्मन्-शब्दाद् ग्रन्थपरो ब्राह्मणशब्दः सम्भाव्यते, अतो ब्राह्मणवाचिब्रह्मन्-शब्दान्नेदं निष्पन्नं ब्राह्मणपदम्, अपि त्वस्मन्मते ब्राह्मणशब्दादेव प्रोक्ताद्यर्थेऽणि स्यान्निष्पन्नं ब्राह्मणमिति[1]—इति प्रत्यपीपदत्, तदपि शक्यतेऽनुयोक्तुम्—न हि **वृद्धाच्छः** (अष्टा० ४।२।११३) इति शैषिके सूत्रे जाग्रति ब्राह्मणप्रातिपदिकाद् औत्सर्गिकः प्रत्ययः सुलभ इति! तस्मात् **पुराणप्रोक्तेषु ब्राह्मणकल्पेषु** (अष्टा० ४।३।१०५) इति निपातनाद् **ब्राह्मोऽजातौ** (अष्टा० ६।४।१७१) इत्यस्य बाध एव युज्यते।

ब्राह्मणस्वरूपं केवलं लक्षणेन शक्यतेऽधिगन्तुम्। मन्त्रव्याख्यानानि ब्राह्मणानि, आदिवेदभाष्याणि ब्राह्मणानि[2] इत्येवंविधानि कथनानि महतीं भ्रान्तिं जनयन्ति प्राकृतजनमनःसु। तस्माद् ब्राह्मणग्रन्थप्रतिपादिता विषया निदर्शनम् अपेक्षन्ते। आपस्तम्बस्मृते ब्राह्मणलक्षणे विधि-अर्थवाद-निन्दा-प्रशंसा-परकृति-पुराकल्पा ब्राह्मणविषया निर्दिष्टाः। वस्तुतोऽत्र विध्यर्थवादावेव विषयौ, निन्दादीनाम् अर्थवादस्यावान्तरभेदत्वात्। इमे च निर्दिष्टा विषया उदाहरणमात्रं न तु परिगणनम्। अत एव शबरः पद्यद्वयस्मरणपुरःसरं दश विषयान् उदाजहार।[3] तथा हि—

**हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः।**
**परक्रिया पुराकल्पो व्यवधारणकल्पना॥**
**उपमानं दशैवैते विधयो ब्राह्मणस्य तु।**
**एतद् वै सर्ववेदेषु नियतं विधिलक्षणम्॥**[4]

शाबरसायणावेतेषु नवानामेव विषयाणाम् उदाहरणानि प्रस्तुतवन्तौ। तद् यथा—हेतुः—**शूर्पेण जुहोति, तेन ह्यन्नं क्रियते** (शत० ब्रा० २।५।२।३)। निर्वचनम्—**तद् दध्नो दधित्वम्** (तै० स० २।५।३।३)। निन्दा—**अमेध्या वै माषाः** (तै०

१. सत्यव्रतसामश्रमी, ऐतरेयालोचने, पृ० २॥
२. „ „ „ „।
३. पू० मी० २।१।३३ शाबरभाष्ये।
४. तु०—ब्रह्माण्ड-पुराण १।३३।४७, ४८॥

सं० ५।१।८।१) । प्रशंसा—**वायुर्वै क्षेपिष्ठा देवता** (तै० सं० २।१।१।१) । संशयः—**तद् व्यचिकित्सद् जुहुवा३ मा हौ३षम्** (तै० सं० ६।५।६।१) । विधिः—**यजमानेन सम्मितौदुम्बरी भवति** (तै० सं० ६।२।१०।३) । परकृतिः—**माषानेव मह्यं पचन्ति** [माषान् मे पचत—शत० ब्रा० १।१।१।१०] । पुराकल्पः—**पुरा ब्राह्मणा अभैषुः** (तै० सं० १।५।७।५) । विशेषावधारणकल्पना—**यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान् निर्वपेत्** (तै० सं० २।३।१२।१) । सामश्रमी निरुक्तालोचन उपमानमुदाहरति—**स यथा शकुनिः⋯एवमेव खलु सोम्य तन्मनः** (छा० ब्रा० ८।८।२) । एभ्योऽन्येऽपि विषया ब्राह्मणेषु यथावसरम् उल्लिख्यन्ते । तथा च गोपथ-ब्राह्मण उपनिषदपि संगृह्यत इत्यधस्ताद् दर्शयिष्यते । **बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति पृथिवी वैश्वानरः, संवत्सरो वैश्वानरः, ब्राह्मणो वैश्वानर इति** (निरु० ७।२४) इति यास्कटिप्पणं ब्राह्मणग्रन्थानां वैशिष्ट्यं प्रकटयति । दुर्गो यास्कोक्तेर-भिप्रायम् आविष्करुते—**येन केनचिद् गुणेन ब्राह्मणं सर्वं सर्वथा ब्रवीति । तत्र तत्त्व-मन्वेष्यमेव भवति । पृथिवी वैश्वानर इत्येवमादि किमपि ब्राह्मणेन बहु वैश्वानर-शब्देनोच्यते भक्त्येति** ।[1] एतदुक्तं भवति—ब्राह्मणानि यज्ञानुष्ठानमधिकृत्य विविध-गुणकल्पनाभिर्हेत्वादीन् अर्थवादान् प्रदर्श्याधिदैविकाध्यात्मिकक्रियाकलापैः सह यज्ञानुष्ठानानां सामञ्जस्यम् उपपादयन्ति ।

ऋत्विक्-संहिता-चरण (शाखा)-ब्राह्मण-[श्रौत-गृह्य-धर्म-] कल्पाः परस्परं सम्बध्यन्ते । होत्रादीनाम् ऋत्विजां चरणविशेषसम्बद्धानां संहिता-ब्राह्मण-कल्पाः पृथक् पृथक् स्युरिति साधारणो नियमः । साम्प्रतं वाङ्मयस्योत्सन्नत्वाद् अन्योऽन्यस्य स्वीकारः । तथा चाश्वलायनैरैतरेयब्राह्मणम् अङ्गीकृतम् । सर्वेषां ब्राह्मणानां विषयसाम्यात् प्रायः प्रतिपादनमपि समानरीतिम् अनुसरति, क्रमस्य तु नास्ति नियमः । तथा च दीक्षणीयेष्टिरैतरेयब्राह्मणे प्रथमपञ्चिकायां विव्रियते, कौषतकिब्राह्मणे तु सप्तमाध्याये । प्रयोगवैशिष्ट्यमभिसमीक्ष्य पाणिनिः पुराणापुराणभेदेन ब्राह्मण-द्वैविध्यस्य सस्मार—**पुराणप्रोक्तेषु ब्राह्मणकल्पेषु** (अष्टा० ४।३।१०५) इति । तत्र काशिकाकारः शाट्यायनिनः, ऐतरेयिणः, ताण्डिनः, भाल्लविन इति पुराणप्रोक्ता-ध्येतॄन्, याज्ञवल्कानि, सौलभानि इति च नवीनप्रोक्तब्राह्मणान्युदाजहार । कात्यायनस्तु याज्ञवल्कादीनामपि पुराणप्रोक्तत्वम् अभिमन्यमान आह—**याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वात्** (अष्टा० ४।३।१०५ महामा० वा०) इति ।

सम्प्रत्युपलभ्यमानानि ब्राह्मणानि यथावेदं नाममात्रेणात्र निर्दिश्यन्ते—

(१) **ऋग्वेदस्य**—ऐतरेयकम्, कौषीतम्, शाङ्खायनकम् ।[2]

---

१. निरु० ७।२४ दुर्गभाष्ये ।

२. शाङ्खायनशकस्यैवापरनाम कौषीतकमिति प्राचां मतं विहाय साम्प्रतिका एतयो-

(२) **कृष्णयजुर्वेदस्य**—तैत्तिरीयकम् (तैत्तिरीयसंहितायाः परिशिष्टरूपम्)।
**शुक्लयजुर्वेदस्य**—शतपथः—काण्व-माध्यन्दिनभेदाद् द्विविधः।

(३) **सामवेदस्य**—ताण्ड्यकम् (=पञ्चविंशकम्), जैमिनीयब्राह्मणम्, जैमिनीयार्षेयब्राह्मणम्, जैमिनीयोपनिषद् ब्राह्मणम्। तत्र ताण्ड्यांशभूतानि—षड्विंश-सामविधान-आर्षेय-वंश-देवताध्याय-संहितोपनिषद्-छान्दोग्याणि। षड्विंशस्यान्त्यप्रपाठकोऽद्भुतब्राह्मणम्। छान्दोग्यस्याद्यप्रपाठको मन्त्रब्राह्मणम्।

(४) **अथर्ववेदस्य**—गोपथब्राह्मणम्।

## ७. गोपथब्राह्मणम्

### ७.१. नामधेयम्

अथास्याथर्वणब्राह्मणस्य गोपथ इत्यभिधानं किन्निमित्तकमिति प्रश्नोऽनुद्भावितचरो द्वित्रान् परिकल्पान् आश्रित्य समाधीयते। वेदान्तरवैलक्षण्येन चतुर्थो वेदो यथा 'अथर्वाङ्गिरसः' इति 'भृग्वङ्गिरसः' इति वा प्रवक्तृनामभिरभिधानं लेभे, तथैवायं ब्राह्मणग्रन्थोऽपि स्वप्रवक्तृनामधेयेन गोपथ इति समाख्याम् अवापेति प्रथमः कल्पः। न चाथर्वाङ्गिरोभृगूणां मन्त्रद्रष्टृत्वेन प्रसिद्धत्वात् तत्प्रवक्तृत्वम् उपपद्येत, न तु गोपथस्य, तथात्वेनाप्रसिद्धत्वाद् इति वाच्यम्, गोपथस्यापि सूक्तद्रष्टृत्वेन प्रख्यातत्वात्[1]। अथापरः कल्पः—अथर्वाङ्गिरसो हि यज्ञस्य गोप्तार इति श्रूयते। तद् यथा—**अथर्वाङ्गिरसो गोप्तारः** (गो० ब्रा० १।१।१३), **अथर्वाङ्गिरसोभिश्च गुप्तो यज्ञश्चतुष्पाद् दिवमारुरोह** (गो० ब्रा० १।५।२५) इति। ते गोप्तार एव गोपथाः (गुप्+अथ) इति संज्ञायन्ते। तेषां गोपथानामयं ग्रन्थोऽपि तत्साहचर्यन्यायाद् गोपथ इत्यभिधीयते। अथान्यः कल्पः सम्भाव्यते। अस्य ब्राह्मणस्य पूर्ववर्ति-शतपथब्राह्मणं प्रसिद्धम् आसीद्, यस्माद् अनेन विपुलसामग्रीम् उद्गृह्यात्मसात्कृतेति स्फुटीभविष्यत्यधस्तात्। अतः शतपथनामानुकारेण गोपथ इति नामकरणं सम्भवेत्। तत्राध्यायशतकत्वात् शतपथ इति समाख्या, प्रकृते तु गवाम् इन्द्रियाणाम् एकादशानां प्रपाठकानां संख्यासाम्याद् गोपथ इति नामधेयं परिकल्प्येत। यत्तु सूर्यकान्तः—देवशुन्या सरमया लब्धसंकेत इन्द्रो गिरिगुहाप्रणिहितानां गवां गमनमार्गं संज्ञातवताम् अङ्गिरसां साहाय्येन पणिवलं सम्मृद्य गा मुमोचेत्यैतिह्यं परिकल्प्य प्रस्तौति—अङ्गिरसां गोपथज्ञत्वात् तेषां ब्राह्मणम् इदं गोपथसमाख्यां लेभ इति[2], तन्न समञ्जसम्, अङ्गिरसां गोपथज्ञत्वाश्रुतेः, अभ्युपगते च तेषां गोपथज्ञत्वे सरमाया गवेषणाकर्मनियोजनानुपपत्तेः।

---

ब्राह्मणयोः पार्थक्यम् आतिष्ठन्ते, यद्यप्येतयोर्भेदः स्वल्प एव। द्र०—भगवद्दत्तः, वैदिकवाङ्मय का इतिहास, ब्राह्मण तथा आरण्यक, द्वितीय अध्याय।

१. अथर्व० (शौ० सं०) १९।४७—५० सूक्तानां द्रष्टा गोपथः।

२. सूर्यकान्तः, अथर्ववेद एवं गोपथब्राह्मण, भूमिका पृ० ९।

### ७. १. प्रवक्तृत्वं शाखासम्बन्धश्च

गोपथब्राह्मणस्य प्रवक्तुर्विषये न किमपि ज्ञायते। पूर्वोक्तकल्पनासु प्रथमा चेत् स्वीक्रियेत, तर्हि गोपथो नामर्षिः प्रोवाचेदं ब्राह्मणमिति निर्णीयेत। परन्तु बाह्याभ्यन्तरसाक्ष्याभावात् कल्पनामात्रमेवैतत्। अपि च, भेदेन सृष्टिनिरूपणोपलम्भात् पूर्वपरनिरूपांशयोः प्रवक्तृभेदः स्पष्टं परिलक्ष्यते।[1] पूर्वोक्तानां नवानामाथर्वणशाखानां कतमया सहेदं ब्राह्मणं सम्बध्यत इत्यपि न निश्चितम्। शौनकशाखामन्त्राणां प्रायेण प्रतीकनिर्देशात् शौनकशाखासम्बद्धोऽयं ग्रन्थः, यद्यपि पैप्पलादशाखापि नास्याविदितेति केचिद्।[2] नैतद् मतं तर्कं सहेत, प्रतीकनिर्देशेषु व्यभिचारदर्शनात्। तथा हि—**अग्निर्यज्ञम्** (अथर्व० पै० ५।२८।१) इति प्रतीकेन (गो० ब्रा० १।१।१२), **अग्निं त्वा** (अथर्व० पै० १।९५।३) इति सकलपाठेन (गो० ब्रा० १।२।२१); **अग्निं दूतम्** (अथर्व० शौ० २०।१०१।१) इति सकलपाठेन (गो० ब्रा० १ २।२३) श्रूयते। अपि च, **शन्नो देवीरभिष्टय** इति प्रतीकेन चतुर्थवेदस्याद्यमन्त्रनिर्देशात् (गो० ब्रा० १।१।२९) पैप्पलादशाखया गोपथब्राह्मणस्य सम्बन्धः प्रतीयते,[3] तदादावेव तस्योपलम्भात्। शाखाद्वयस्यापि मन्त्रोद्धरणेऽनेकपाठान्तरदर्शनाद् एकान्ततस्तु निर्णयो न सम्भवति। अत्रोद्धृतेषु मन्त्रेषु केचन केवलं पैप्पलादके, अपरे केवलं शौनकीये, इतर उभयत्र, अन्ये केवलं शाकलके, कतिपये त्रिष्वपि समाम्नायेषु श्रूयन्त इत्यतोऽपि शाखासम्बन्धो दुर्निर्णयस्तिष्ठति।

### ७. ३. स्वरूपम्

अयं ग्रन्थो द्वयोर्भागयोर्विभज्यते—पूर्वब्राह्मणम्, उत्तरब्राह्मणं चेति। तत्र पूर्वब्राह्मणे पञ्च, उत्तरब्राह्मणे च षड् इति संयोज्यैकादश प्रपाठकाः सकलग्रन्थे सम्प्रत्युपलभ्यन्ते। आथर्वणपरिशिष्टे चरणव्यूहे तु भण्यते—

**तत्र गोपथः शतप्रपाठकं ब्राह्मणम् आसीत्। तस्यावशिष्टे द्वे ब्राह्मणे पूर्वम् उत्तरं च।**

पूर्वब्राह्मणे पञ्चस्वपि प्रपाठकेषु पञ्चत्रिंशदुत्तरशतं (३९+२४+२३+२४+२५=१३५) कण्डिकाः, उत्तरब्राह्मणे च षट्स्वपि प्रपाठकेषु त्रयोविंशत्युत्तरशतं (२६+२४+२३+१९+१५+१६=१२३) कण्डिका विद्यन्ते। प्रायेण पूर्ववर्तिवाङ्-

---

१. मो० ब्लूमफील्डः, दि अथर्ववेद एण्ड दि गोपथब्राह्मण, पृ० १०९।

२. मो० ब्लूमफील्डः, दि अथर्ववेद एण्ड दि गोपथब्राह्मण, पृ० १०७।

३. तु०—महाभाष्य-नवाह्निके वेदचतुष्टस्याद्यमन्त्रप्रतीकाः। [ऐतरेयमस्माकं पैप्पलादमथर्वणाम्। तृतीयं तित्तिरिप्रोक्तं जानन् वृद्ध इहोच्यते॥ वेङ्कटमाधवीय-ऋग्वेदानुक्रमणी ८।१।१३॥]

मयात् सामग्रीम् उद्गृह्यायं ग्रन्थः संकलितः। अत्र संकलिता बहवो मन्त्रा भिन्न-पाठाः[१], सन्दर्भाश्चानुपलब्धमूलाः[२] श्रूयन्ते। अस्य संकलनस्य त्रीणि प्रयोजनानि प्रतीयन्ते– अथर्ववेदस्य चतुर्थवेदत्वप्रतिष्ठापनप्रयासः, ब्रह्मण ऋत्विज आथर्वणि-कत्वप्रतिपादनम्, आथर्वणिकब्रह्मणश्च महत्त्वप्रख्यापनम्। एतानि च प्रयोजनानि पूर्वब्राह्मणे स्फुटं लक्ष्यन्ते। पूर्वब्राह्मणं कमपि यज्ञक्रमविशेषं नानुसरति। अयं भागः प्राय उपनिषच्छैल्या सन्दृभ्यते, वस्तुत एकस्तु सन्दर्भ[३] आत्मानम् उपनिषदं घोषयत्यपि। उत्तरब्राह्मणं प्रायेण वैतानसूत्रस्मृतं यज्ञक्रमम् अनुसृत्य विभिन्नेभ्यः स्रोतोभ्यस्तदनुरूपां सामग्रीं संकलय्य विन्यस्यति। सामान्यत उत्तरब्राह्मणस्य वैतानसूत्रेण सह स एव सम्बन्धः प्रतीयते, यः शतपथब्राह्मणस्याद्यानां नवानां काण्डानां वाजसनेयसंहिताया आद्यैरष्टादशभिरध्यायैः सह वर्त्तते; पूर्वब्राह्मणस्य च सैव स्थितिः शक्यते वक्तुं या शतपथस्यावशिष्टकाण्डपञ्चकस्य[४]—इति ब्लूमफील्डोक्तिर्यथार्थेति ग्रन्थद्वयतुलनया स्पष्टी भवति। उभे अपि पूर्वोत्तरब्राह्मणे अर्वाचीने प्रतीयेते, तत्राप्युत्तरब्राह्मणं पूर्वब्राह्मणापेक्षया नवीन इत्यैतिहासिकाः।[५]

**७. ४. कालः**

यद्यपि गोपथब्राह्मणस्य काल इदमित्थरूपेण न निर्धारित ऐतिह्यविद्भिः, तथाप्यत्रोद्धृतसन्दर्भैः, कतिपयनामोल्लेखेन, तर्केण चास्य ग्रन्थस्यात्यन्तार्वाचीनत्वं निश्चीयते। तथा हि—

(क) गोपथब्राह्मणकारेणातिरात्रविवरणम् (गो० ब्रा० २।५।१-५) ऐतरेय-ब्राह्मणात् (४।५,६) कौषीतकिब्राह्मणात् (१७।७-९) चैताभ्यां द्वाभ्यां स्रोतोभ्याम् उद्गृहीतम्। अत एवात्र पर्याया द्विर्निरूपिता उभयस्रोतश्शब्दैः।

(ख) उत्तरब्राह्मणस्य तृतीयप्रपाठक एकादश्यां कण्डिकायां कौषीतकिमतं तन्नामग्राहम् उपन्यस्तम्—इति ह स्माह कौषीतकिः।

(ग) काम्येष्टिप्रसङ्गे (गो० ब्रा० २।१।१३--१५) मैत्रायणी संहिता(२।१।१०) शब्दश उद्धृता।

(घ) पूर्वब्राह्मणस्य चतुथपञ्चमप्रपाठकौ शतपथब्राह्मणस्य द्वादशकाण्डाद् उद्गृहीतौ।

(ङ) होत्रकाणां स्तोत्रियादिनिरूपणम् (गो० ब्रा०.२।४।१-३) आश्वलायन-

---

१. अन्तरिक्षे पथिभिः··· । गो० ब्रा० १।२।९ ॥

२. गो० ब्रा० १।३।१३; १।५।५; १।५।१२ ॥

३. गो० ब्रा० १।१।३८ ॥

४. मो० ब्लूमफील्डः, दि अथर्ववेद एण्ड दि गोपथब्राह्मण, पृ० १०२।

श्रौतसूत्रं (७।४।१ आदि) शाङ्खायनश्रौतसूत्रं (७।२२-२४) चाधृत्य कृतम्। एतच्च तत्सूत्राणां ब्राह्मणीकृतं रूपं प्रतीयते।

(च) पौराणिकं शिववर्णनं (गो० ब्रा० १।२।८), बौद्धकालिकदूषीस्मारकस्य[1] दोषपतेरुल्लेखः (गो० ब्रा० १।१।२८), विकसितव्याकरणप्रदर्शनं (गो० ब्रा० १।१।२५-२७) चास्य ब्राह्मणस्यार्वाक्कालिकताज्ञापनायालम्।

(छ) मखशब्दनिरुक्तिः परिशिष्टरूपाश्च श्लोकाः (गो० ब्रा० २।२।५) गोपथस्य यास्कादप्यर्वाक्त्वम् अनुमापयन्तीति ब्लूमफील्डः[2]। ननु—**तां मनसा ध्यायेद् वषट्करिष्यन्** (निरु० ८।२२) इति ब्रुवाणो यास्कः, **तां मनसा ध्यायन् वषट्कुर्याद्** (गो० ब्रा० २।३।४) इति व्याहरतो गोपथस्य तावद् अनुवदत इति यास्कस्यैवार्वाक्त्वं सिध्यतीति चेद्; न, उभयोरपि यास्कगोपथयोः—**तां ध्यायेद् वषट्करिष्यन्** (ऐ० ब्रा० ३।८।१) इत्यैतरेयवचनानुवादित्वात्।[3]

(ज) यास्कापेक्षया गोपथस्यार्वाक्त्वं प्रतिपिपादयिषोर्ब्लूमफील्डस्योपरिष्टाद् उपन्यस्तं मतं तावद् न युज्यते वक्ष्यमाणाद् हेतोः। '**एतद् वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत् कर्म क्रियमाणम् ऋग् यजुर्वाभिवदति**' इति च ब्राह्मणम् (निरु० १।१६) इति यास्कः सन्दर्भोद्धरणपुरःसरं ब्राह्मणग्रन्थविशेषस्य सस्मार। प्रस्तुतस्य सन्दर्भस्य गोपथब्राह्मणे (२।२।६; २।४।२) एवाविकलरूपेणोपलम्भाद्, ऐतरेयब्राह्मणे (१।४।१३,१५ इत्यादिषु) पुनः '**यजुर्वा**' इति पाठवैकल्येन श्रवणाद् यास्कस्मृतो ब्राह्मणग्रन्थो गोपथ एवेति निश्चीयते। अतो गोपथब्राह्मणं यास्कापेक्षया पूर्वकालिकमिति निश्चप्रचम्।

**७. ५. निरूपितविषयसंक्षेप**

**पूर्वब्राह्मणं तावत्—**

(१) **प्रथमप्रपाठके**—(क) आथर्वणिकसिद्धान्तरीत्या सर्गनिरूपणम् (१-१५)—ब्रह्मतपः, अपां सृष्टिः, अप्सु ब्रह्मरेतःस्खलनम्, अपां शान्ताशान्तविभागः, शान्तापां समुद्राद् भृगोर्जन्म, ततो जायतेऽथर्वा, आथर्वणा ऋषयः[4], आथर्वणो वेदः, ओम्, लोकाः, त्रयी। अशान्तापां समुद्राद् जायते वरुणः, मृत्युः, अङ्गिराः, आङ्गिरसा ऋषयः, आङ्गिरसो वेदः, जगत्, पञ्च वेदाः, पञ्च व्याहृतयः, शम्, चन्द्रादिः, यज्ञः। देवयज्ञेऽथर्वाङ्गिरसो गोप्तारः, दक्षिणा, संन्धानम्। (ख) प्रणवोपनिषद्

---

१. मो० ब्लूमफील्डः, दि अथर्ववेद एण्ड गोपथब्राह्मण, पृ० १०५।
२. मो० ब्लूमफील्डः, अथर्ववेद एण्ड गोपथब्राह्मण, पृ० ११६।
३. मो० ब्लूमफील्डः, अथर्ववेद एण्ड गोपथब्राह्मण, पृ० १२०।
४. तु०—अथर्व० (शौ० सं०) १६।२२,२३॥

(१६-३०)—पुष्करे ब्रह्म-जन्म, ओंकारदर्शनम्, ओंकारमात्राभ्यस्त्रिकाः, वकारमात्रात आथर्वणिकानि तत्त्वलोकदेववेदादीनि, मकारत इतिहासादिवाङ्मयम्, ओंकारजपफलम्, प्रश्नोत्तराणि, ओंकारस्य रहस्योपेतं वर्णनम् (ग) गायत्र्युपनिषद् (३१—३८)—चतुर्विंशत्यक्षरा द्वादशयुगला गायत्री, भृग्वङ्गिरसो गायत्र्या नेत्रे, गायत्र्याः पादत्रयस्य द्वादशपदार्थवर्गैः सह रहस्यमयः सम्बन्धः । (घ) आचमनम् (३९) ।

(२) **द्वितीयप्रपाठके**—(क) ब्रह्मचारिकर्त्तव्यानि (१-९) अथर्ववेदम्(११।५) आश्रित्य निरूपितानि, आश्रमप्रवेशः, शिवतपः, ऋत्विक्कृत्यम् ।। (ख) विविधविषयाः (१०-१४)—देवयजनम्, ऋत्विक्कृत्यम् । (ग) अग्न्याधाने ब्रह्मौदनः (१५-१७)—चातुष्प्राश्यस्याथर्वणिकचतुष्केण सम्बन्धः, आदित्यानां जन्म, चातुष्प्राश्यस्य चतुष्कैः सम्बन्धः, आत्रेयस्य प्रथमदक्षिणा । (घ) अग्न्याधानेऽग्निपदाश्वः (१८-२१)—घोरसलिलोत्थाश्वस्य शंयुकर्तृकम् आथर्वणीभिराङ्गिरसीभिश्चौषधिभिः शमनम्, आथर्वणिका ऋत्विजः, वैश्वानर-जातवेदसोरग्न्योर्विशेषः, ब्रह्मणा कृतं वैश्वानरशमनम् । (ङ) सान्तपनोऽग्निः (२२-२३) । (च) ब्रह्मण ऋत्विजो माहात्म्यम् (२४)—पुनश्चतुष्कैश्चतुर्थवेदस्य वर्णनम् ।

(३) **तृतीयप्रपाठके**—(क) ब्रह्मणो महत्त्वम् (१-५)—आथर्वणिकस्य ब्रह्मत्वम्, व्रतभङ्गे प्रायश्चित्तम् ओम्-जनद्-व्याहृत्योर्मध्ये वेदत्रयीव्याहृतीनां गोपनम्, दक्षिणा । (ख) दर्शपूर्णमासयो रहस्यमयी व्याख्या (६-१०)—ब्रह्मोद्यम्, अध्यात्मम् । (ग) अग्निहोत्रस्य रहस्योपेता व्याख्या (११-१६)—कर्मानुष्ठान-चोद्य-परिहारौ, प्रायश्चित्तम्, तत्फलम्, द्विरग्निहोत्रम्, स्वाहा । (घ) अग्निष्टोमः (१७-२३)—एकगुः, सवनीयपशुः, दीक्षा ।

(४) **चतुर्थप्रपाठके**— सत्ररहस्यम् (१-२४)—ऋत्विग्-दीक्षा, इष्टयः, गवामयनम्, महाव्रतानिः, पृष्ठचयोर्मध्येऽभिप्लवः, विषुवद्, आरोहण-प्रत्यारोहणम्, ब्रह्मोद्यम् ।

(५) **पञ्चमप्रपाठके**—(क) सत्रव्याख्या (१-२२) – अभिप्लवः, सत्र-पुरुषयोरभिसम्बन्धः, यज्ञक्रमः, सहस्रदक्षिण-सत्रम्, विश्वजित्, त्रीणि सवनानि, सावित्र-पशुः । (ख) यज्ञविषयकाः श्लोकाः (२३-२५)—यज्ञक्रमः, पाक-हविः-सोमयज्ञाः, यज्ञाङ्गिरोवेदोत्पत्तिः, अथर्वमहत्त्वम् ।

**अथोत्तरब्राह्मणे—**

(१) **प्रथमप्रपाठके**—(क) दर्शपूर्णमासौ (१-१२) । (ख) काम्येष्टयः (१३-१६) । (ग) आग्रयणाग्निचयनचातुर्मास्यानि (१७-२६) ।

(२) **द्वितीयप्रपाठके**—(क) काम्येष्टयः (१)। (ख) तानुनप्त्रेष्टिः (२-४)। (ग) प्रवर्ग्येष्टिः (५-६)। (घ) यज्ञतनुभेदाः, परकीयसोमयागध्वंसः, सोमस्कन्द-प्रायश्चित्तम् (७-१२)। (ङ) स्तोमभागः (१३-१५)। आग्नीध्र-विभागः, प्रवृत्ताहुतयः, सदःकर्म, प्रस्थितग्रहाः, दर्शपूर्णमासौ (१६-२३)।

(३) **तृतीयप्रपाठके**—(क) वषट्कारानुवषट्कारौ (१-६)। (ख) ऋतु-ग्रहादिः (७-११)। (ग) एकाह-प्रातःसवनम् (१२-१९)। (घ) एकाह-माध्य-न्दिनसवनम् (२०-२३)।

(४) **चतुर्थप्रपाठके**—(क) पूर्वतोऽनुवर्त्तमानम् एकाह-माध्यन्दिनसवनम् (१-४)। (ख) एकाह-तृतीयसवनम् (५-१८)। (ग) षोडशियागः (१९)।

(५) **पञ्चमप्रपाठके**—(क) अतिरात्रः (१-५)। (ख) सौत्रामणी (६-७)। (ग) वाजपेयः (८)। (घ) अप्तोर्यामः (९-१०)। (ङ) अहीन-(सत्र) यागाः (११-१५)।

(६) **षष्ठप्रपाठकके**—पूर्वतोऽनुवर्त्तमाना अहीन (सत्र) यागाः (१-१६)।

**७. ६. आश्रयः**

गोपथब्राह्मणं संहिता-ब्राह्मण-श्रौतवाङ्मयाद् विपुलां सामग्रीं संजग्राहेत्य-सकृद् उक्तम्। उत्तरब्राह्मणस्य तावत् त्रयोविंशत्यधिकशतसंख्याकानां कण्डिकानाम् उपाशीतिः कण्डिकाः पूर्णतोंऽशतो वा ग्रन्थान्तरेभ्यः संकलिताः। तथैव पूर्वब्राह्मण-मपि ग्रन्थान्तराणि, विशेषतः शतपथब्राह्मणम्,उपजीवति। वैदिकवाङ्मये समुपल-भ्यमानः संहिता-ब्राह्मण-श्रौत-गृह्य-धर्मसूत्रम् इति साधारणः क्रम आथर्वणवाङ्मये विपर्यस्त इत्यावेदितं पुरस्तात्। संहिता-गृह्य-श्रौत-ब्राह्मणमित्याथर्वणिकः क्रमः। तथा च ब्राह्मणस्याश्रयोऽत्र श्रौतसूत्रम्—इत्युपपादयितुं प्रयत्स्यतेऽधस्तात्—

(१) यद्यपि कौशिकसूत्रं विशुद्धरूपेणाथर्वणिकगृह्यसूत्रम् इति न शक्यते-ऽभिधातुम्, तथापि गृह्यकर्मणानां प्रायेण प्रतिपादकत्वाद् गृह्यसूत्रसमाख्यया व्यपदिश्यते विपश्चिद्भिः। एतच्च सूत्रं संहितया साक्षात् सम्बद्धम्। तथा चाह सायणः—

**तत्र साकल्येन संहितामन्त्राणां शान्तिक-पौष्टिकादिषु कर्मसु विनियोग-विधानात् संहिताविधिर्नाम कौशिकं सूत्रम्। तदेवेतरैः सूत्रैरुपजीव्यत्वात् प्रधानं च।**[1]

(२) वैतानसूत्रेण कौशिकसूत्रं, गोपथब्राह्मणेन च वैतानसूत्रम् आश्रीयत इत्यग्रिमस्तुलनात्मक उपन्यासः संसाधयति। तथा हि—

१. सायणः, अथर्ववेदभाष्यभूमिकायाम्।

कौशिकसूत्रम्—चितिप्रायश्चित्तिशमीशमकासवंशाशाम्यवाकातलाशापलाशवाशाशिंशपाशिम्बलसिपुनदर्भापामार्गाक्रतिलोष्टवल्मीकवपादूर्वाप्रान्तव्रीहियवाः शान्ताः ॥८।१६।।

वैतानसूत्रम्—उषसि शान्त्युदकं करोति चित्यादिभिराथर्वणीभिः कपुर्विपर्वारोदाकावृक्कावतीनाडानिर्दहन्तीभिराङ्गिरसीभिश्च। चातनैर्मातृनामभिर्वास्तोष्पत्यैरनुयोजितैः ।।२।१।१०।।[1]

गोपथब्राह्मणम्– स खलु शान्त्युदकं चकार, आथर्वणीभिश्चाङ्गिरसीभिश्च चातनैर्मातृनामभिर्वास्तोष्पत्यैरिति शमयति ।।१।२।२८।।

अत्र कौशिकसूत्र आथर्वण्य ओषधयो नामग्राहं प्रोक्ता इति कृत्वा वैतानकारस्ताः प्रतीकेन—चित्यादिभिः—इति निर्दिदेश, आङ्गिरस्यः पुनः कौशिकसूत्रे न पठिता इति स्वरूपतोऽवबोधार्थं साकल्येनोपसंचख्यौ। गोपथब्राह्मणं खलु द्वयोरप्योषधिगणयोर्वैतानसूत्रतोऽधिगतत्वात् तौ प्रतीकाभ्यां—आथर्वणीभिश्चाङ्गिरसीभिश्च—इति संजग्राह। अतोऽत्र स्पष्टम् अभिव्यज्यते—गोपथब्राह्मणेन वैतानसूत्रम् आश्रीयत इति।

(३) वैतानसूत्रे (२।२।१) सकलपाठेन स्मर्यमाणाः 'यदक्रन्द...' इत्यादयः पञ्चर्चो गोपथब्राह्मणे (१।२।१८) प्रतीकमात्रेणोपन्यस्यन्ते।

(४) वैतानसूत्रे (३।१४।२०) स्मृतः— अल्पस्व एकगुना यजेत– इति विधिराख्यायिकाकल्पनयोपबृंह्यते गोपथब्राह्मणे (१।३।१७)।

(५) फाल्गुन्यां पौर्णमास्यां चातुर्मास्यानि प्रयुञ्जीत—इति वैतानसूत्रं (२।४।८) शब्दश उद्धृत्य विव्रियते गोपथब्राह्मणे (२।१।१९)।

(६) वैतानसूत्राणि ३।१।१; ३।५।३; ३।६।१५-१६ इत्येतानि यथासंख्यं गोपथब्राह्मणे २।१।१६; २।२।९; २।२।१२ इत्येतासु कण्डिकासु ब्राह्मणीकृतानि लक्ष्यन्ते।

(७) वैतानसूत्रे ३।६।१७; ३।८।११ इत्येते यथासंख्यं गोपथब्राह्मणे २।२।१२, १८ इत्यनयोः कण्डिकयोः संहितावत् खण्डशो व्याख्यायेते।

(८) वैतानगोपथयोः श्रूयमाणा अन्यत्र दुर्लभाः समानशब्दाः—गवीडा, समुद्वान्तम्, अद्भिः प्रत्यानीतम्[2], प्रतिवीत०[3]—इत्येवमादयः समुपोद्वलयन्त्यनयोरभिसंबन्धम्।

---

१. अपि तु०—वै० १।१।१९, कौ० ३।४॥ वै० ३।१।१४, कौ० २४।२८-३४॥ वै० ३।१४।३, कौ० ७।१४॥ वै० ३।१४।७, कौ० ६।११-१३।

२. वै० २।३।२-३; गो० ब्रा० १।३।१२॥

३. वै० ३।१२।१२; गो० ब्रा० २।३।२२॥

### ७. ७. वैशिष्ट्यम्

यद्यपि गोपथब्राह्मणं प्राचीनश्रौतवाङ्मयम् आश्रित्य प्रववृते, ततश्चैव स्वप्रतिपादितसामग्र्या अधिकांशम् उज्जहार, तथापि नेदं स्ववैशिष्ट्यरहितं मौलिकचिन्तनविहीनं वा वर्त्तते। अत्र पूर्वब्राह्मणे विशेषतो नैका नूतना मौलिकोद्भावना दरीदृश्यन्ते। निदर्शनरूपेणात्र केचन विशेषा उपन्यस्यन्ते—

(१) पूर्वब्राह्मणारम्भ आथर्वणदर्शनरीत्या सृष्टिर्निरूप्यते (१।१।१–१५)। अत्र खलु सृष्टिचक्रम् अथर्ववेदाक्षं परितो भ्राम्यति। अथर्ववेदस्य शान्तघोरस्वरूपमप्यत्र प्रदर्श्यते। ओंकारात् सृष्टिः (१।१।१६–३०) पूर्ववर्णितसृष्टेरंशतो भिद्यमानापि महनीया रुचिरा च विद्यते।

(२) प्रणवोपनिषदः काण्डत्रयं गोपथब्राह्मणे १।१।१६–२२ (प्रथमः); २३ (द्वितीयः) २४-३० (तृतीयः) इत्येताभिः कण्डिकाभिः प्रतिनिधीयते। अत्र किल यादृश्योंकारव्याख्या समुपलभ्यते, तादृशी नान्यत्र सुलभा। प्रतिवेदम् ओंकारोच्चारणभेदोऽत्र निरूप्यते। ओंकारस्य सार्धतिस्रो मात्रा भिन्नदेववर्णा उच्यन्ते। तथा हि—प्रथमा मात्रा ब्रह्मदेवत्या रक्ता वर्णेन··· द्वितीया मात्रा विष्णुदेवत्या कृष्णा वर्णेन तृतीया मात्रैशानदेवत्या कपिला वर्णेन··· सार्द्धचतुर्थी मात्रा सर्वदेवत्या··· शुद्धस्फटिकसन्निभा वर्णेन(१।१।२५)। एतासां मात्राणां ध्यानफलमपि निर्दिश्यतेऽत्र।

(३) अस्य ग्रन्थस्य गायत्र्युपनिषद्-नामकेंऽशे (१।१।३१-३८) अथर्ववेदेऽश्रूयमाणाया अपि स्तूयमानायाः सावित्र्याः[1] सविस्तरं विवरणं समुपलभ्यते। एतच्च सावित्र्याः प्राचीनतमं व्याख्यानम् इति मनीषिणो घोषयन्ति। अत्र 'वरेण्यम्' इति पदं स्वतन्त्ररूपेण विव्रियते, न तु 'भर्गः'—पदस्य विशेषणत्वेनेति विशेषः।

(४) व्याकरणमहाभाष्ये (१।१।३८) उपलभ्यमानाया अव्ययकारिकायाः पाठः प्रथमतोऽत्रैव श्रूयते (१।१।२६)। सामवेदखिलश्रुतिरप्येकात्रोद्ध्रियते (१।१।२९)।

(५) आथर्वणश्रुतिम् (एकादशकाण्डे पञ्चमसूक्तम्) अवलम्ब्य ब्रह्मचारिकृत्यानि प्रदिश्यन्ते (१।२।१-९)। वेदाध्ययनम् उद्दिश्याष्टाचत्वारिंशद्वर्षं ब्रह्मचर्यमत्र विधीयते। तथा हि—अष्टाचत्वारिंशद्वर्षं सर्ववेदब्रह्मचर्यम। चतुर्धा वेदेषु व्युह्य द्वादशवर्षं ब्रह्मचर्यं द्वादशवर्षाण्यवरार्द्धम्। अपि स्नायंश्चरेद् यथाशक्त्यपरम्। (१।२।५)। द्वादशवर्षं ब्रह्मचर्यं पृथग् वेदेषु तत् स्मृतम् (१५।२५)। अत्रैव प्रसङ्गत आश्रमवर्णनम् ऋषितपांसि च प्रकाशितानि।

(६) अग्न्याधेयेऽग्निपदाश्च विषयकं ब्राह्मणं (१।२।१८-२१), कारुविदाग्लागृधादिशब्दाश्च (१।२।२१) नान्यत्रोपलभ्यन्ते।

---

१. अथर्व० (शौ० सं०) १९।७१।१ ॥

(७) वेद-कल्प-रहस्य-ब्राह्मण-उपनिषद्-इतिहास-अन्वाख्यान-पुराण-स्वरसंस्कार-निरुक्त-अनुशासन-अनुमार्जन-वाकोवाक्यरूपा वाङ्मयविद्या यद्यपि नातिप्राचीनास्तथाप्यत्रैव समुपलभ्यन्ते विशेषतः (१।२।१०; १।१।१०,२१,२३,२४; १।३।३; २।२।६)।

(८) अग्न्याधेय-पूर्णाहुति-अग्निहोत्र-दर्शपूर्णमास-आग्रयण-चातुर्मास्य-पशुबन्ध-अग्निष्टोम-राजसूय-वाजपेय-अश्वमेध-पुरुषमेध-सर्वमेध-दक्षिणावद्-अदक्षिणाः (१।५।७) इति यज्ञक्रमोऽस्य ब्राह्मणस्य स्वकीयः प्रतीयते।

(९) अन्यत्राविहितं किञ्चित् प्रायश्चित्तविधानमप्यत्र श्रूयते। तद्यथा—ब्रह्मचारिणः श्मशानप्रवेशे विहितम् (१।२।७)।

(१०) **श्रेष्ठो ह वेदस्तपसोऽधिजातो ब्रह्मज्यानां क्षितये संबभूव**—इत्यृक्पाठोऽत्र (१।१।९) श्रूयते, नान्यत्र। सायणस्तु स्वकीयाथर्ववेदभाष्यभूमिकायाम् इमाम् ऋचं पाठभेदेनोद्धृतवान्। पद्यात्मिकाः कण्डिकाः (१।५।२३-२५), श्लोकाश्च (१।१ ३२; २।२।५) गोपथब्राह्मणस्यात्मीया विशेषा विद्यन्ते।

(११) उत्तरब्राह्मणं ग्रन्थान्तरसन्दर्भसकलनप्रायं सदपि स्वमौलिकतां न सर्वथा विजहाति। तत्र प्राशित्राख्यायिका (२।१।२) प्राचीनवाङ्मये सामग्रीतो वर्त्तमानापि ब्राह्मणेऽस्मिन् इध्म-बर्हि-बृहस्पतीनाम्-ऋषीणां सन्निवेशाद् विशेषत आथर्वणिकी समपद्यत।

(१२) मखपदनिर्वचनादि-भृग्वङ्गिरोविद्विरिष्टान्ता (२।२।५) गोपथोक्तिः सर्वथा मौलिक्येवेति नातिरोहितं विदुषाम्[1]।

(१३) परकीयसन्दर्भाणां स्वसम्प्रदायानुरूपम् आत्मसात्करणम् अस्मिन् ग्रन्थे बहुलम् अवलोक्यते। तथा च—'**इदमहमर्वावसोः**,' इति कौषीतकि-सन्दर्भः (६।१३) अत्र '**इदमहमर्वाग्वसोः**' इति रूपेणोपन्यस्यते। शतपथब्राह्मणे (१२।३।३।२) श्रूयमाणास्त्रयो वेदाः—ऋग्यजुः सामानि—अस्मिन् ब्राह्मणे (१।५।१०) पञ्च—ऋग्यजुः सामशान्तघोराः—सम्पन्नाः। परकीयसन्दर्भोद्धरणे स्वसम्प्रदायप्रतिकूलोंऽशः प्रायेणात्र त्यज्यते। एवं च=**तस्माद् वसिष्ठो ब्रह्मा कार्यः**=इति तैत्तिरीय-सन्दर्भांशः (तै० सं० ३ ५।२।१) स्तोमभागाख्यायिकायां (२।३।१३) प्रतिकूलत्वात् त्यज्यते।

(१४) निष्केवल्यस्यैन्द्रत्वप्रतिपादनपराख्यायिका गोपथब्राह्मणस्य (२।३।२३) मौलिकी रचनेति प्रतीयते, ऐतरेय-कौषीतकिब्राह्मणयोः (ऐ० ब्रा० ३।२४।१०; कौ० ब्रा० १५।४) प्रकारभेदेन श्रवणात्।

---

१. तथैव द्र०—२।१।१७; २।६।१४, १५; २।३।९॥

(१५) त्रिषु सवनेषु श्रूयमाणः (२।३।१६; २।४।४; २।४।१८) आहावप्रयोगा गोपथस्य स्वकीय एव वर्त्तंते।

(१६) अथर्वाङ्गिरोभृगुवसिष्ठादयः प्रख्याता ऋषयः, यौवनाश्व-मान्धातृ-जनमेजय-परीक्षितो राजानः, कुरु-पञ्चाल-काशि-मगधादीनि राज्यानि, विपाणमध्ये वसिष्ठाश्रमश्चेत्येवंविधैतिहासिकसामग्री प्रसङ्गतोऽत्रोल्लिख्यते।

एवं पुरातनश्रौतवाङ्मयसंकलनात्मकम् अपि गोपथब्राह्मणं सुपर्याप्तम् आत्मनो मौलिकतां वैशिष्ट्यं च प्रदर्शयतीति पूर्वोपन्यस्तनिदर्शनैर्निष्कृष्यते।

## ८. प्रस्तुतसंस्करणम्

गोपथब्राह्मणस्य प्रथमं संस्करणं राजेन्द्रलालमित्रो हरचन्द्रविद्याभूषणसाहाय्येन १८७२ तम ईशाब्दे कलिकातानगरतः प्रकाशितवान्। प्रथमप्रयासत्वात् तस्मिन् संस्करणे बह्व्यस्त्रुटयः समजायन्त। तदनन्तरं जीवानन्दविद्यासागरेण १८९१ तम ईशाब्दे कलिकातानगरत एवायं ग्रन्थः प्रकाशितः। तच्च संस्करणं ग्रन्थोपलब्धिमात्रम् आसीत्, सम्पादनप्रयासलेशस्यापि तत्रानुपलम्भात्। तत १९१९ तम ईशाब्दे डाक्टरोपाधिभूषितो डच्-क गास्ट्रो लीडननगरतोऽत्युत्कृष्टं संस्करणं प्राकाशयत्। तत् संस्करणं गास्ट्रस्य सम्पादनकलानैपुण्यं, वैदिकवाङ्मयस्य गहनाध्ययनं, महतीं सूक्ष्मेक्षिकां च परिचाययति। तदादर्शसंस्करणम् अनु गोपथब्राह्मणस्य किमपि संस्करणं न प्राकाशीति दुर्लभः संजातोऽयं ग्रन्थः। अतः वैदिकवाङ्मयप्रकाशनयोजनान्तर्गतम् अस्य ब्राह्मणस्योत्कृष्टं संस्करणं प्रकाशयितुं निरचैषुः। फलस्वरूपं प्रस्तुतसंस्करणं विदुषां करकमलेषूपह्रियते "सावित्रीदेवी बागड़ीया ट्रस्ट (कलकत्ता)" नामिकया संस्थया।

वर्त्तमानसंस्करणं प्राधान्येन गास्ट्रसंस्करण आध्रियते, पाठतुलनार्थं राजेन्द्रलालसंस्करणाद् अपि यथावसरं साहाय्यम् आदायि। अपि च, पुण्यपत्तनस्थे वैदिकसंशोधनमण्डले सुरक्षितौ, सम्भवतो गास्ट्रेणाप्रयुक्तौ, सुप्राचीनौ हस्तलिखितग्रन्थौ प्रस्तुतसंस्करणे सन्दिग्धपाठशोधार्थं समुपायुज्येताम्। तत्र हस्तलेखसंख्या ८५७५ निर्दिष्टः प्रथमः कोशः (पुणे-क-कोशः) शाके १६४२ तमे संवत्सरे नागराक्षरेषु लिखितः, अपरो हस्तलेखसंख्या ८५७६ निर्दिष्टो द्वितीयः कोशः (पुणे-ख-कोशः) शाके १७७४ तमे संवत्सरे नागराक्षरेषु लिखितः।

गास्ट्रसंस्कृतो ग्रन्थः प्राचीनप्रणाल्या संहितापाठरूपेण मुद्रित आसीत्, प्रस्तुतसंस्करणे तु पाठकानां सौविध्यं मनसिकृत्य यथार्हं विरामचिह्नानि तत्र तत्र योजितानीति ततो विशेषः। गास्ट्रो यान् सन्दर्भसङ्केतान् तुलनासङ्केतांश्च स्वभूमिकायां निर्दिदेश, ते सर्वेऽन्ये च यथोपलब्धं सङ्केता अस्मिन् संस्करणे पादटिप्पणेषु विन्यस्ताः। गास्ट्रविहितानि संशोधनानीह तन्नामस्मरणपुरःसरं संगृह्यन्ते। गास्ट्र-

संस्करणे सञ्जातानां मुद्रणदोषाणां परिमार्जनम् अत्र कृतम् । शास्त्रनिर्दिष्टाः पाठभेदाः प्रायेणात्र संस्करणे पादटिप्पणेषु संगृहीताः कोशनामनिर्देशं विहाय । गोपथब्राह्मण उद्धृताः सन्दर्भाः स्वस्वाकरेषु सस्वरकाः सन्तोऽप्यत्र शास्त्रसंस्करणवद् अस्वरका एव मुद्रिताः सन्ति ।

## ९. कृतज्ञताप्रकाशः

श्री रामलालकपूरन्यासस्याध्यक्षपदम् अलंकुर्वतां पदवाक्यप्रमाणज्ञानां वैदिकवाङ्मयोन्नयन-बद्धपरिकराणाम् आचार्यप्रवराणां श्रीयुधिष्ठिरमीमांसकचरणाम्बुजानां शुभाशंसनैः, सततप्रेरणया, प्रश्रितप्रोत्साहनेन, प्रौढनिर्देशेन, गभीरानुभवसिक्तपरामर्शैश्चाहम् एतद्ग्रन्थसम्पादनकर्म निर्वोढुम् अपीपरम् इत्यत्र भवन्तो भवन्तः सप्रणिपातेन वन्दनीयाः । विमलमतीनां वैदिकवाङ्मयाकर-प्रवक्तॄणां, भूयोविद्यानां च तद्व्याख्यातॄणां कृतिभ्य एतद्ग्रन्थसम्पादने यत् साहाय्यम् अग्राहि, तदन्तरेण वर्त्तमानरूपे गोपथप्रकाशनम् असम्भवीति तांस्तत्र भवतः प्रति कृतज्ञताभारेण विनतोऽस्मि । अस्य ग्रन्थस्य पूर्वसंस्करणानां सम्पादकाः, विशेषतो डच्रूक शास्त्र महाभागाः, भूयो भूयः साधुवादार्हाः, तत्संस्करणान्याधृत्य शास्त्रपद्धतिम् अनुसृत्य च प्रस्तुतसंस्करणस्य सम्पादितत्वात् । पुण्यपत्तनस्थ-वैदिकसंशोधनमण्डलाधिकारिणो धन्यवादान् अर्हन्ति ये गोपथब्राह्मणस्य हस्तलिखितकोशौ प्रदाय माम् अन्वग्रहीषुः । मुद्रणपत्राणां परिशिष्टस्य संशोधने च यथेष्टसहयोगार्थं स्वान्तेवासिभ्यां धर्मवीर-परिमलदेवाभ्याम् आशिषः प्रयच्छामि । दत्तेऽपि महत्यवधाने मुद्रणे दोषाः समजायन्त, तेषां ये पुनरीक्षणावसरे दृष्टिपथम् आयंस्ते ग्रन्थान्ते 'शोधनपत्रे' पर्यमृक्षत । उदारचेतसो विद्वांसोऽत्र ज्ञानलाघवाद् अनवधानवशाच्च संजातानि स्खलनानि विज्ञाप्यानुगृह्णन्त्विति विनिवेद्य विरमति—

विदुषां विधेयः,

१९८० तम ईशाब्दे सितम्बरमासेऽष्टम्यां तिथौ — विजयपालः

—:o:—

# विषय-सूची

## पूर्वभागे

| क्र० संख्या | विषय | पृष्ठ |
|---|---|---|
| ६. | अन्वाहार्यंपचनस्य प्रयोजनम् | ९५ |
| ७. | देवासुरस्पर्धादृष्टान्तेनान्वाहार्यस्य प्रजापतिभागत्वप्रतिपादनम् | ९५ |
| ८. | दर्शपूर्णमासाभ्याम् अयज्वनः सोमयागानर्हता | ९६ |
| ९. | सायंनिर्वापस्य पुरस्तात् चन्द्रोदये प्रायश्चित्तम् | ९६ |
| १०. | पूर्वोत्तरयोः पूर्णमास्यमावास्ययोर्मिथुनप्रदर्शनम् | ९६ |
| ११. | पूर्वोत्तरयोरेकत्रैव यागः | ९६ |
| १२. | दर्शपूर्णमासयागात् पूर्वं यागद्वयम् | ९७ |
| १३. | दर्शपूर्णमासयोरतिपाते पथिकृदिष्टिः | ९७ |
| १४. | प्रोषित आहिताग्नौ व्रतपतीष्टिः | ९७ |
| १५. | आर्त्तिजाश्रुकरणे व्रतभृदिष्टिः | ९८ |
| १६. | पितृ-पितामहयोः सोमपानाभाव इन्द्राग्निदेवताकेष्टिः | ९८ |
| १७. | आग्रायणेष्टिः | ९८ |
| १८. | अग्निचयने प्रयोक्तव्यस्याप्रतिरथसूक्तस्य प्राशस्त्यम् | ९९ |
| १९. | चातुर्मास्य प्रयोगः | १०० |
| २० | चातुर्मास्य-देवता-तद्यागफलोपपादनम् | १०० |
| २१. | वरुणप्रघाससस्य (चातुर्मास्यस्य) उत्पत्तिः | १०१ |
| २२. | वरुणप्रघासस्य देवता-द्रव्यनिदर्शनम् | १०१ |
| २३. | साकमेधस्य (चातुर्मास्यस्य) निरूपणम् | १०२ |
| २४. | साकमेधानन्तर्गतपितृयज्ञः | १०३ |
| २५. | पूर्वतोऽनुवर्त्तमानः पितृयज्ञः साकमेधश्च | १०३ |
| २६. | शुनासीरीयस्य (चातुर्मास्यस्य) निरूपणम्, चातुर्मास्य-माहात्म्यम् | १०४ |
| | **द्वितीय प्रपाठके** | |
| १. | आहिताग्नेः काम्येष्टयः (ऐन्द्राग्नपश्वालम्भः) | १०६ |
| २-४. | अग्निष्टोमान्तर्गत-तानूनप्त्रेष्टिः (ऋत्विग्-यजमान-पारस्परिकद्रोह-निवारणप्रतिज्ञा) | १०६-१०७ |
| ५. | यज्ञच्छिद्रापाकरणसमर्थस्य भृग्वङ्गिरोविदो ब्रह्मणो माहात्म्यम् | १०८ |
| ६. | अग्निष्टोमाङ्गभूतप्रवर्ग्यः | १०९ |
| ७. | देवासुरकथापुरःसरम् उपसद्-निरूपणम् | ११० |
| ८. | उपसद्-वर्णनम् | १११ |
| ९. | आग्नीध्रकर्तृकं देवपत्नीनां व्याख्यानम् | ११२ |
| १०. | त्रयस्त्रिंशद् यज्ञतन्वः (स्तोमभागाः, सवनानि, यज्ञः) | ११२ |

# संक्षेप-विवरणम्

अथर्व० परि०=अथर्ववेद-परिशिष्टानि
अथर्व पै० सं०=अथर्ववेद-पैप्पलादसंहिता
अथर्व शौ० सं०=अथर्ववेद-शौनकसंहिता
अष्टा०=अष्टाध्यायी
आप० श्रौ०=आपस्तम्बश्रौतसूत्रम्
आश्व० गृ०=आश्वलायन गृह्यसूत्रम्
आश्व० श्रौ०=आश्वलायन श्रौतसूत्रम्
ऋ० =ऋग्वेदः
ऋ० प्रा०=ऋग्वेद-प्रातिशाख्यम्
ऐ० ब्रा०=ऐतरेयब्राह्मणम्
औषनसस्मृ०=औषनसस्मृति
कपि० सं०=कपिष्ठल संहिता
काठ० सं०=काठक संहिता
का० सं०=काण्व संहिता
कौ० कौशिक०=कौशिकसूत्र
कौ० ब्रा०=कौषीतकिब्राह्मणम्
कौषी० ब्रा०=कौषीतकिब्राह्मणम्
गा०=गास्ट्र डचूक
गा० सं०=गास्ट्रसंशोधितः
गो० ब्रा०=गोपथब्राह्मणम्
चरकचि०=चरकचिकित्सास्थानम्
छा० उप०=छान्दोग्योपनिषद्
छा० ब्रा०=छान्दोग्य-ब्राह्मणम्
टि०=टिप्पणम्
तु०=तुलना कर्त्तव्या
तै० आ०=तैत्तिरीयारण्यकम्
तै० ब्रा०=तैत्तिरीय ब्राह्मणम्
तै० सं०=तैत्तिरीय संहिता
द्र०=द्रष्टव्य
निरु०=निरुक्तम्
न्या० भा०=न्यायभाष्यम्
पञ्च० ब्रा०=पञ्चविंशमहाब्राह्मणम्
पू० मी०=पूर्वमीमांसासूत्रम्
पृ०=पृष्ठम्
प्रश्न०=प्रश्नोपनिषद्
बृह० उप०=बृहदारण्यकोपनिषद्
बृहदा उप०=बृहदारण्यकोपनिषद्
बौ० ध०=बौधायनधर्मसूत्रम्
मनु०=मनुस्मृतिः
महा०=महाभारतम्
महाभा० वा०=महाभाष्यवार्त्तिकम्
महा० शा०=महाभारत-शान्तिपर्व
महा० सभा०=महाभारत-सभापर्व
मा० सं०=माध्यन्दिन-संहिता
मु० उप०=मुण्डकोपनिषद्
मै० सं०=मैत्रायणी संहिता
याज्ञ० स्मृ०=याज्ञवल्क्य स्मृतिः
रा०=राजेन्द्र लाल मित्रः
ला० सू०=लाटचायन श्रौतसूत्रम्
वायु पु०=वायुपुराणम्
वा० रा०=वाल्मीकिरामायणम्
विष्णु स्मृ०=विष्णुस्मृतिः
वै०, वैतान०=वैतान सूत्रम्
शत० ब्रा०=शतपथब्राह्मणम् (माध्यंदिनीयम्)
शाङ्ख० गृ०=शाङ्खायन गृह्यसूत्रम्
शाङ्ख० श्रौ०=शाङ्खायन श्रौतसूत्रम्
षड्० ब्रा०=षड्विंशब्राह्मणम्
सत्या०=सत्याषाढ श्रौतसूत्रम्
सा० पू०=सामवेद पूर्वार्चिक
हरि० पु०=हरिवंश पुराण
हिरण्य० गृ०=हिरण्यकेशीगृह्यसूत्रम्

---

# अथ गोपथ-ब्राह्मणम्

## पूर्वभागः

## प्रथमः प्रपाठकः

ओम् ॥ ब्रह्म ह वा इदमग्र आसीत् स्वयंम्वेकमेव[1] । तदैक्षत—महद् वै यक्षम्, तदेकमेवास्मि[2], हन्ताहं मदेव मन्मात्रं द्वितीयं देवं निर्मिमा[3] इति । तदभ्यश्राम्यदभ्यतपत् समतपत् । तस्य श्रान्तस्य तप्तस्य संतप्तस्य ललाटे स्नेहो यदार्द्रमाजायत,[4] तेनानन्दत् । तदब्रवीत्—महद् वै यक्षं सुवेदमविदमहमिति[5] । तद् यदब्रवीत्—महद् वै यक्षं सुवेदमविदमहमिति[5]—तस्मात् सुवेदो ऽभवत् । तं वा एतं सुवेदं सन्तं स्वेद इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः ॥१॥[6]

स भूयो ऽश्राम्यद् भूयोऽतप्यद् भूय आत्मानं समतपत् । तस्य श्रान्तस्य तप्तस्य संतप्तस्य सर्वेभ्यो रोमगर्तेभ्यः पृथक् स्वेदधाराः प्रास्यन्दन्त । ताभिरनन्दत् । तदब्रवीत्—आभिर्वा अहमिदं सर्वं धारयिष्यामि यदिदं किं

१. गास्ट्र-संशोधितः पाठः । 'स्वयन्त्वेकमेव' इति राजेन्द्रलाल-संस्करणे पुणे-कोशयोश्च पाठ; ।

२. यथाकोशं पाठः । 'यदेक—' इति गा० सं० पाठः ।

३. गा० सं० । 'निर्मम' इति कोशेषु पाठः ।

४. वोथलिङ्ग-संशोधितः पाठ; । 'यदार्द्रियमा–' इति प्रायेण कोशेषु पाठः ।

५. वोथलिङ्ग-संशोधितः पाठः । '—महा इति' ‘—मह इति' कोशेषु पाठौ ।

६. गो० ब्रा० १।१।१-१५ तु०—बृहदा० उप० ५।४॥

च, आभिर्वा अहमिदं सर्वं जनयिष्यामि यदिदं किं च, आभिर्वा अहमिदं सर्वमाप्स्यामि यदिदं किं चेति। तद् यदब्रवीत्—आभिर्वा अहमिदं सर्वं धारयिष्यामि यदिदं किं चेति, तस्माद् धारा अभवन्। तद् धाराणां धारात्वं, यच्चासु ध्रियते। तद् यदब्रवीत्—आभिर्वा अहमिदं सर्वं जनयिष्यामि यदिदं किं चेति, तस्माज्जाया अभवन्। तज्जायानां जायात्वं, यच्चासु पुरुषो जायते यच्च पुत्त्रः। पुन्नाम नरकमनेकशततारं, तस्मात् त्रातीति पुत्त्रः। तत् पुत्त्रस्य पुत्त्रत्वम्। तद् यदब्रवीत्—आभिर्वा अहमिदं सर्वमाप्स्यामि यदिदं किं चेति, तस्मादापोऽभवन्। तदपामप्त्वम्। आप्नोति वै स सर्वान् कामान् यान् कामयते [य एवं वेद][1] ॥२॥

ता अपः सृष्ट्वान्वैक्षत। तासु स्वां छायामपश्यत्। तामस्येक्षमाणस्य स्वयं रेतो ऽस्कन्दत्। तदप्सु प्रत्यतिष्ठत्। तास्तत्रैवाभ्यश्राम्यद् अभ्यतपत् समतपत्। ताः श्रान्तास्तप्ताः संतप्ताः सार्धमेव रेतसा द्वैधमभवन्। तासामन्यतरा अतिलवणा अपेया अस्वाद्व्यः। ता अशान्ता रेतः समुद्रं वृत्त्वातिष्ठन्। अथेतराः पेयाः स्वाद्व्यः शान्ताः। तास्तत्रैवाभ्यश्राम्यद् अभ्यतपत् समतपत्। ताभ्यः श्रान्ताभ्यस्तप्ताभ्यः संतप्ताभ्यो यद् रेत आसीत्, तदभृज्ज्यत। यदभृज्ज्यत, तस्माद् भृगुः समभवत्। तद् भृगोर्भृगुत्वम्। भृगुरिव वै स सर्वेषु लोकेषु भाति य एवं वेद ॥३॥

स भृगुं सृष्ट्वान्तरधीयत। स भृगुः सृष्टः प्राङैजत। तं वागन्ववदत्—वायो वाय[2] इति। स न्यवर्तत। स दक्षिणां दिशमैजत। तं वागन्ववदत्—मातरिश्वन् मातरिश्वन्निति। स न्यवर्तत। स प्रतीचीं दिशमैजत[3]। तं वागन्ववदत्—पवमान पवमानेति। स न्यवर्तत। स उदीचीं दिशमैजत[3]। तं वागन्वब्रदत्—वात वातेति। तमब्रवीत्—न न्वविद-

१. ब्राह्मणशैल्या अनेन वाक्यांशेनात्र भाव्यम्, यथोत्तरखण्डानामन्ते दृश्यते।

२. गास्ट्रसंशोधितः पाठः। 'वायो' इति कोशेषु पाठः।

३. गास्ट्रसंशोधितः पाठः। 'दिशमेजत' इति कोशेयु पाठः।

महमिति[1]। न हीति। अथार्वाङ्नेमेतास्वेवाप्स्वन्विच्छेति। तद् यदब्रवीत्—अथार्वाङ्नेमेतास्वेवाप्स्वन्विच्छेति, तदथर्वाभवत्। तदथर्वणोऽथर्वत्वम्। तस्य ह वा एतस्य भगवतोऽथर्वण ऋषेर्यथैव ब्रह्मणो लोमानि यथाङ्गानि यथा प्राण एवमेवास्य सर्व आत्मा समभवत्। तमथर्वाणं ब्रह्माब्रवीत्—प्रजापतेः प्रजाः सृष्ट्वा पालयस्वेति। तद् यदब्रवीत्—प्रजापतेः प्रजाः सृष्ट्वा पालयस्वेति, तस्मात् प्रजापतिरभवत्। तत् प्रजापतेः प्रजापतित्वम्। अथर्वा वै प्रजापतिः। प्रजापतिरिव वै स सर्वेषु लोकेषु भाति य एवं वेद।४।।

तमथर्वाणमृषिमभ्यश्राम्यद् अभ्यतपत् समतपत्। तस्माच्छ्रान्तात् तप्तात् संतप्ताद् दशतयानथर्वण ऋषीन् निरमिमीत[2]—एकर्चान् द्व्यृचांस्तृचांश्चतुर्ऋचान् पञ्चर्चान्त्षडर्चान्त्सप्तर्चानष्टर्चान् नवर्चान् दशर्चानिति। तानथर्वण ऋषीनभ्यश्राम्यद् अभ्यतपत् समतपत्। तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः संतप्तेभ्यो दशतयानाथर्वणानार्षेयान् निरमिमीत[3] एकादशान् द्वादशांस्त्रयोदशांश्चतुर्दशान् पञ्चदशान् षोडशान्त्सप्तदशानष्टादशान् नवदशान् विंशानिति। तानथर्वण ऋषीनाथर्वणांश्चार्षेयान् अभ्यश्राम्यद् अभ्यतपत् समतपत्। तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः संतप्तेभ्यो यान् मन्त्रानपश्यत्, स आथर्वणो वेदोऽभवत्। तमाथर्वणं वेदमभ्यश्राम्यद् अभ्यतपत् समतपत्। तस्माच्छ्रान्तात् तप्तात् संतप्तादोमिति मन एवोर्ध्वमक्षरमुदक्रामत्। स य इच्छेत् सर्वैरेतैरथर्वभिश्चाथर्वणैश्च कुर्वीयेति, एतयैव तद् महाव्याहृत्या कुर्वीत। सर्वैर्ह वा अस्यैतैरथर्वभिश्चाथर्वणैश्च कृतं भवति य एवं वेद, यश्चैवंविद्वानेवमेतया महाव्याहृत्या कुरुते।।५।।

स भूयो ऽश्राम्यद् भूयो ऽतप्यद् भूय आत्मानं समतपत् स आत्मत एव त्रीँल्लोकान् निरमिमीत[3]—पृथिवीमन्तरिक्षं दिवमिति। स खलु पादाभ्यामेव पृथिवीं निरमिमीत,[3] उदरादन्तरिक्षं मूर्ध्नो दिवम्। स

१. गास्ट्रपाठः। '—विदामहा इति' '—विदामह इति' इति कोशेषु पाठौ।
२. संशोधितोऽयं पाठः। कोशेषु 'निरमिमत' इत्येव पाठ उपलभ्यते।
३. गास्ट्रसंशोधितः पाठः। निरमिमत' इति कोशेषूपलभ्यते। अतोऽग्रेऽपि तथैव द्रष्टव्यम्।

तांस्त्रीँल्लोकानभ्यश्राम्यद् अभ्यतपत् समतपत् । तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः संतप्तेभ्यस्त्रीन् देवान् निरमिमीत[1]—अग्निं वायुमादित्यमिति । स खलु पृथिव्या एवाग्निं निरमिमीत, अन्तरिक्षाद् वायुं, दिव आदित्यम् । स तांस्त्रीन् देवानभ्यश्राम्यद् अभ्यतपत् समतपत् । तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः संतप्तेभ्यस्त्रीन् वेदान् निरमिमीत—ऋग्वेदं यजुर्वेदं सामवेदमिति । अग्नेर्ऋग्वेदं वायोर्यजुर्वेदमादित्यात् सामवेदम् । स तांस्त्रीन् वेदानभ्यश्राम्यद् अभ्यतपत् समतपत् । तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः संतप्तेभ्यस्तिस्रो महाव्याहृतीर्निरमिमीत—भूर्भुवः स्वरिति । भूरित्यृग्वेदाद्; भुव इति यजुर्वेदात्, स्वरिति सामवेदात् । स य इच्छेत् सर्वैरेतैस्त्रिभिर्वेदैः कुर्वीयेति, एताभिरेव तद् महाव्याहृतिभिः कुर्वीत । सर्वैर्ह वा अस्यैतैस्त्रिभिर्वेदैः कृतं भवति । य एवं वेद, यश्चैवंविद्वानेवमेताभिर्महाव्याहृतिभिः कुरुते ॥६॥

ता या अमू रेतः समुद्रं वृत्वातिष्ठन्, ताः प्राच्यो दक्षिणाच्यः प्रतीच्य उदीच्यः समवद्रवन्त । तद् यत् समवद्रवन्त तस्मात् समुद्र उच्यते । ता भीता अब्रुवन्–भगवन्तमेव वयं राजानं वृणीमह इति । यच्च वृत्वातिष्ठंस्तद् वरणोऽभवत् । तं वा एतं वरणं सन्तं वरुण इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः । स समुद्रादमुच्यत । स मुच्युरभवत् । तं वा एतं मुच्युं सन्तं मृत्युरित्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः । तं वरुणं मृत्युमभ्यश्राम्यद् अभ्यतपत् समतपत् । तस्य श्रान्तस्य तप्तस्य संतप्तस्य सर्वेभ्यो ऽङ्गेभ्यो रसो ऽक्षरत् । सो ऽङ्गरसो ऽभवत् । तं वा एतमङ्गरसं सन्तमङ्गिरा इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः ॥७॥

तमङ्गिरसमृषिमभ्यश्राम्यद् अभ्यतपत् समतपत् । तस्माच्छ्रान्तात् तप्तात् संतप्ताद् विंशिनो ऽङ्गिरस ऋषीन् निरमिमीत । तान् विंशिनो

१. गास्ट्रसंशोधितः पाठः । 'निरमिमत' इति कोशेषु । अतोऽग्रेऽपि सर्वत्र 'निरमिमीत' स्थाने 'निरमिमत' कोशस्थः पाठो ज्ञेयः ।

ऽङ्गिरस ऋषीनभ्यश्राम्यद् अभ्यतपत् समतपत् । तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः संतप्तेभ्यो दशतयानाङ्गिरमानार्षेयान् निरमिमीत–षोडशिनो ऽष्टादशिनो द्वादशिन एकर्चान् द्वयृचांस्तृचांश्चतुर्ऋचान् पञ्चर्चान् षडर्चान् सप्तर्चानिति । तानङ्गिरस ऋषीनाङ्गिरमांश्चार्षेयानभ्यश्राम्यद् अभ्यतपत् समतपत् । तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः संतप्तेभ्यो यान् मन्त्रानपश्यत् स आङ्गिरसो वेदोऽभवत् । तमाङ्गिरसं वेदमभ्यश्राम्यद् अभ्यतपत् समतपत् । तस्माच्छ्रान्तात् तप्तात् संतप्ताज्जनदिति द्वैतमक्षरं व्यभवत् । स य इच्छेत् सर्वैरेतैरङ्गिरोभिश्चाङ्गिरसैश्च कुर्वीयेति एतयैव तद् महाव्याहृत्या कुर्वीत । सर्वैर्ह वा अस्यैतैरङ्गिरोभिश्चाङ्गिरसैश्च कृतं भवति य एवं वेद, यश्चैवंविद्वानेवमेतया महाव्याहृत्या कुरुते ॥८॥

स ऊर्ध्वोऽतिष्ठित् । स इमाल्ँलोकान् व्यष्टभ्नात् । तस्मादङ्गिरसो ऽधीयान ऊर्ध्वस्तिष्ठिति । तद् व्रतम् । स मनसा ध्यायेद्, यद् वा अहं किं च मनसा ध्यास्यामि तथैवं तद् भविष्यति । तद्ध स्म तथैव भवति । तदप्येतदृचोक्तम्—

श्रेष्ठो ह वेदस्तपसो ऽधि जातो ब्रह्मज्ञानां[2] हृदये[3] संबभूव[4] ।
ऋच्युग्भूतं[5] यदसृज्यतेदं निवेशनमनृणं दूरमस्य[6] ॥ इति ।

ता वा एता अङ्गिरसां जामयो[7] यन्मेनयः । करोति मेनिभिर्वीर्यं य एवं वेद ॥९॥

---

१. 'किञ्चन' इति रा० पाठः ।

२. 'ब्रह्मज्ञानं' 'ब्रह्मज्यानां' इति पाठान्तरे ।

३. संशोधितः पाठः । मूले तु 'क्षितये' इति पाठः ।

४. सायणस्तु स्वाथर्ववेदभाष्यभूमिकायामर्धर्चमित्थमुद्धृतवान्—'श्रेष्ठो हि वेदस्तपसोऽधिजातो ब्रह्मज्ञानां हृदये संबभूव' इति ।

५. पुणे-कोशयोरयं पाठः । अन्यकोशेषु 'ऋज्यग्भूतं, ऋज्यद्भूतं, ऋग्यग्भूतं' इत्येवं पाठा उपलभ्यन्ते ।

६. नैषर्ग् अन्यत्र वैदिकवाङ्मये सम्प्रत्युपलभ्यते ।

७. 'यामयो' इति रा० पाठः ।

स दिशो ऽन्वैक्षत प्राचीं दक्षिणां प्रतीचीमुदीचीं ध्रुवामूर्ध्वामिति । तास्तत्रैवाभ्यश्राम्यद् अभ्यतपत् समतपत् । ताभ्यः श्रान्ताभ्यस्तप्ताभ्यः संतप्ताभ्यः पञ्च वेदान् निरमिमीत—सर्पवेदं पिशाचवेदमसुरवेदमितिहासवेदं पुराणवेदमिति । स खलु प्राच्या एव दिशः सर्पवेदं निरमिमीत, दक्षिणस्याः पिशाचवेदं, प्रतीच्या असुरवेदम्, उदीच्या इतिहासवेदं, ध्रुवायाश्चोर्ध्वायाश्च पुराणवेदम् । स तान् पञ्च वेदानभ्यश्राम्यद् अभ्यतपत् समतपत् । तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः संतप्तेभ्यः पञ्च महाव्याहृतीर्निरमिमीत—वृधत् करद् रुहन्[1] महत् तदिति—वृधदिति सर्पवेदात्, करदिति पिशाचवेदाद् रुहदित्यसुरवेदाद्, महदितीतिहासवेदात्, तदिति पुराणवेदात् । स य इच्छेत् सर्वैरेतैः पञ्चभिर्वेदैः कुर्वीयेति, एताभिरेव तद् महाव्याहृतिभिः कुर्वीत । सर्वैर्ह वा अस्यैतैः पञ्चभिर्वेदैः कृतं भवति य एवं वेद, यश्चैवंविद्वानेवमेताभिर्महाव्याहृतिभिः कुरुते ॥१०॥

स आवतश्च परावतश्चान्वैक्षत । तास्तत्रैवाभ्यश्राम्यद् अभ्यतपत् समतपत् । ताभ्यः श्रान्ताभ्यस्तप्ताभ्यः संतप्ताभ्यः शमित्यूर्ध्वमक्षरमुदक्रामत् । स य इच्छेत् सर्वाभिरेताभिरावद्भिश्च परावद्भिश्च कुर्वीयेति, एतयैव तद् महाव्याहृत्या कुर्वीत । सर्वाभिर्ह वा अस्यैताभिरावद्भिश्च परावद्भिश्च कृतं भवति य एवं वेद, यश्चैवंविद्वानेवमेतया महाव्याहृत्या कुरुते ॥११॥

स भूयो ऽश्राम्यद् भूयो ऽतप्यद् भूय आत्मानं समतपत् । स मनस एव चन्द्रमसं निरमिमीत, नखेभ्यो नक्षत्राणि, लोमभ्य ओषधिवनस्पतीन्, क्षुद्रेभ्यः प्राणेभ्यो ऽन्यान् बहून् देवान् । स भूयो ऽश्राम्यद् भूयो ऽतप्यद् भूय आत्मानं समतपत् । स एतं त्रिवृतं सप्ततन्तुमेकविंशतिसंस्थं यज्ञमप-

१. 'गुहन्' इति रा० पाठः । ब्लूमफील्डस्तु वैदिकोद्धरणकोशे 'गुहन्' इति, कौशिकसूत्रे (९१।१२) च 'रुहत्' इति पाठं स्वीचकार ।

श्यत् । तदप्येतदृचोक्तम्—अग्निर्यज्ञं त्रिवृतं सप्ततन्तुम्[1] इति । अथाप्येष प्राक्रीडितः श्लोकः प्रत्यभिवदति—

सप्त सुत्याः सप्त च पाकयज्ञा [हविर्यज्ञाः सप्त तथैकविंशतिः[2]] इति ।।१२।।

तमाहरत् । तेनायजत । तस्याग्निर्होतासीद्, वायुरध्वर्युः, सूर्य उद्गाता, चन्द्रमा ब्रह्मा, पर्जन्यः सदस्य, ओषधिवनस्पतयश्चमसाध्वर्यवो, विश्वे देवा होत्रका, अथर्वाङ्गिरसो गोप्तारः । तं ह स्मैतमेवं विद्वांसः पूर्वे श्रोत्रिया यज्ञं ततं सावसाय ह स्माहेत्यभिव्रजन्ति—मा नोऽयं घर्म उद्यतः प्रमत्तानाममृताः प्रजाः प्रधाक्षीदिति[3] । तान् वा एतान् परिरक्षकान् सदःप्रसर्पकानित्याचक्षते दक्षिणासमृद्धान् । तदु ह स्माह प्रजापतिः । यद् वै यज्ञेऽकुशला ऋत्विजो भवन्त्यचरितिनो ब्रह्मचर्यमपराग्या[4] वा, तद् वै यज्ञस्य विरिष्टमित्याचक्षते । यज्ञस्य विरिष्टमनु यजमानो विरिष्यते । यजमानस्य विरिष्टमन्वृत्विजो विरिष्यन्ते । ऋत्विजां विरिष्टमनु दक्षिणा विरिष्यन्ते । दक्षिणानां विरिष्टमनु यजमानः पुत्रपशुभिर्विरिष्यते । पुत्रपशूनां विरिष्टमनु यजमानः स्वर्गेण लोकेन विरिष्यते । स्वर्गस्य लोकस्य विरिष्टमनु तस्यार्धस्य योगक्षेमो विरिष्यते, यस्मिन्नर्धे यजन्त इति ब्राह्मणम् ।।१३।।

तं ह स्मैतमेवंविद्वांसं ब्रह्माणं यज्ञविरिष्टी वा यज्ञविरिष्टिनो वेत्युपाधावेरन्—नमस्ते अस्तु भगवन् यज्ञस्य नो विरिष्टं संधेहीति । तद् यत्रैव विरिष्टं स्यात् तत्राग्नीनुपसमाधाय शान्त्युदकं कृत्वा पृथिव्यै श्रोत्राय[5] इति त्रिरेवाग्नीन् संप्रोक्षति, त्रिः पर्युक्षति, त्रिः कारयमाणमाचामयति च संप्रोक्षति च, यज्ञवास्तु च संप्रोक्षति । अथापि वेदानां रसेन यज्ञस्य

---

१. अथर्व० (पै० सं०) ५।२८।१।।

२. पूर्वोद्धृतमन्त्रगतैकविंशतिसंख्याकानां यज्ञानां निदर्शनायोद्ध्रियमाणस्य श्लोकस्य द्वितीयं चरणमिह नष्टं प्रतिभाति । उत्तरत्र १।५।२५ स्थले पठितात् श्लोकादयं भागोऽत्र पूरितः ।

३. 'प्रसाक्षीदिति' इति रा० पाठः ।

४. यथाकोशं पाठः । 'ब्रह्मचर्योऽपराध्यां' इति बोधलिङ्गः सम्भावयति ।

५. अथर्व० (शौ० सं०) ६।१०।१।।

विरिष्टं संधीयते । तद् यथा लवणेन सुवर्णं संदध्यात्, सुवर्णेन रजतं, रजतेन लोहं, लोहेन सीसं, सीसेन त्रपु,[१] एवमेवास्य यज्ञस्य विरिष्टं संधीयते । यज्ञस्य संधितिमनु यजमानः संधीयते । यजमानस्य संधितिमन्वृत्विजः संधीयन्ते । ऋत्विजां संधितिमनु दक्षिणाः संधीयन्ते । दक्षिणानां संधितिमनु यजमानः पुत्रपशुभिः संधीयते । पुत्रपशूनां संधितिमनु यजमानः स्वर्गेण लोकेन संधीयते । स्वर्गस्य लोकस्य संधितिमनु तस्यार्धस्य योगक्षेमः संधीयते, यस्मिन्नर्धे यजन्त इति ब्राह्मणम् ॥१४॥

तद् ह स्माहाथर्वा देवो विजानन् यज्ञविरिष्टानन्दानीत्युपशमयेरन्[२] । यज्ञे प्रायश्चित्तिः क्रियते । अपि च यद् बह्विव यज्ञे विलोमं क्रियते, न चैवास्य काचनार्तिर्भवति, न च यज्ञविष्कन्धमुपयात्यपहन्ति पुनर्मृत्युमपात्येति पुनराजातिं, कामचारो ऽस्य सर्वेषु लोकेषु भाति,[३] य एवं वेद यश्चैवंविद्वान् ब्रह्मा भवति, यस्य चैवंविद्वान् ब्रह्मा दक्षिणतः सदो ऽध्यास्ते, यस्य चैवंविद्वान् ब्रह्मा दक्षिणत उदङ्मुख आसीनो यज्ञ आज्याहुतीर्जुहोतीति ब्राह्मणम् ॥१५॥

[४]ब्रह्म ह वै ब्रह्माणं पुष्करे ससृजे । स खलु ब्रह्मा सृष्टश्चिन्तामापेदे—केनाहमेकेनाक्षरेण सर्वांश्च कामान्त्सर्वांश्च लोकान्त्सर्वांश्च देवान्त्सर्वांश्च वेदान्त्सर्वांश्च यज्ञान्त्सर्वांश्च शब्दान्त्सर्वाश्च[५] व्युष्टीः[६] सर्वाणि च भूतानि स्थावरजङ्गमान्यनुभवेयमिति । स ब्रह्मचर्यमचरत् । स ओमित्येतत् अक्षरमपश्यद् द्विवर्णं चतुर्मात्रं सर्वव्यापि सर्वविभ्वयातयामब्रह्म ब्राह्मीं व्याहृतिं ब्रह्मदैवतम्[७] । तया सर्वांश्च कामान्त्सर्वांश्च लोकान्त्सर्वांश्च देवान्त्सर्वांश्च वेदान्त्सर्वांश्च यज्ञान्त्सर्वांश्च शब्दान्त्सर्वाश्च[५] व्युष्टीः[६] सर्वाणि

१. तु० छा० उप० ४।१७।७॥ २. सन्दिग्धम् । ३. 'भवति' ?

४. गो० ब्रा० १।१।१६–३० प्रणवोपनिषद् इति ब्लूमफील्ड-गास्ट्र-प्रभृतयः ।

५. गा० सं० । 'सर्वांश्च' इति कोशेषु पाठः । पुणे-कोशे 'सर्वाश्च' इत्येव पाठः ।

६. यथाकोशं पाठः ! 'व्यष्टीः' इति तु गास्ट्रेण कल्प्यते ।

७. यथाकोशं पाठः !

च भूतानि स्थावरजङ्गमान्यन्वभवत् । तस्य प्रथमेन वर्णेनापः स्नेहं[1] चान्वभवत् । तस्य द्वितीयेन वर्णेन तेजो ज्योतींष्यन्वभवत् ॥१६॥

तस्य प्रथमया स्वरमात्रया पृथिवीमग्निमोषधिवनस्पतीन् ऋग्वेदं भूरिति व्याहृतिं गायत्रं छन्दस्त्रिवृतं स्तोमं प्राचीं दिशं वसन्तम् ऋतुं वाचमध्यात्मं जिह्वां रसमितीन्द्रियाण्यन्वभवत् ॥१७॥

तस्य द्वितीयया स्वरमात्रयान्तरिक्षं वायुं यजुर्वेदं भुव इति व्याहृतिं त्रैष्टुभं छन्दः पञ्चदशं स्तोमं प्रतीचीं दिशं ग्रीष्मम् ऋतुं प्राणमध्यात्मं नासिके गन्धघ्राणमितीन्द्रियाण्यन्वभवत् ॥१८॥

तस्य तृतीयया स्वरमात्रया दिवमादित्यं सामवेदं स्वरिति व्याहृतिं जागतं छन्दः सप्तदशं स्तोममुदीचीं दिशं वर्षा ऋतुं ज्योतिरध्यात्मं चक्षुषी दर्शनमितीन्द्रियाण्यन्वभवत् ॥१९॥

तस्य वकारमात्रयापश्चन्द्रमसमथर्ववेदं नक्षत्राण्योमिति स्वमात्मानं जनदित्यङ्गिरसामानुष्टुभं छन्द एकविंशं स्तोमं दक्षिणां दिशं शरदम् ऋतुं मनो ऽध्यात्मं ज्ञानं ज्ञेयमितीन्द्रियाण्यन्वभवत् ॥२०॥

तस्य मकारश्रुत्येतिहासपुराणं वाकोवाक्यं[2] गाथा नाराशंसीरुपनिषदो ऽनुशासनानीति[3] वृधत् करद् रुहन् महत् तच्छमोमिति व्याहृतीः स्वरशम्यनानातन्त्रीः स्वरनृत्यगीतवादित्राण्यन्वभवत्, चैत्ररथं दैवतं वैद्युतं ज्योतिर्बार्हतं छन्दस्त्रिणवत्रयस्त्रिंशौ स्तोमौ ध्रुवामूर्ध्वां दिशं हेमन्तशिशिरावृतू श्रोत्रमध्यात्मं शब्दश्रवणमितीन्द्रियाण्यन्वभवत् ॥२१॥

सैषैकाक्षरर्ग् ब्रह्मणस्तपसो ऽग्रे प्रादुर्बभूव ब्रह्मवेदस्याथर्वणं शुक्रम् । अत एव मन्त्राः प्रादुर्बभूवुः । स तु खलु मन्त्राणामतपसाशुश्रू-

---

१. बोथलिङ्कसंशोधितः पाठः । 'वर्णेनापस्नेहश्चा०' इति कोशेषु पाठः ।

२. गास्ट्रसंशोधितः पाठः । कोशेषु 'वाकोवाक्यगाथानारा०' इति पाठः ।

३. गास्ट्रसंशोधितः पाठः । कोशेषु 'ऽनुशासनानामिति' इति पाठः । अत्र तुलनार्थं शतपथः (११।५।६।८) सन्दर्भो विमर्शनीयः ।

षानध्यायाध्ययनेन यदूनं च विरिष्टं च यातयामं च करोति, तदथर्वणां तेजसा प्रत्याप्याययेत्, मन्त्राश्च मामभिमुखीभवेयुर्गर्भा इव मातरमभिजिघांसु:[1] । पुरस्तादोंकारं प्रयुङ्क्ते । एतयैव तदृचा प्रत्याप्याययेत् । एषैव यज्ञस्य पुरस्ताद् युज्यते, एषा पश्चात् सर्वत एतया यज्ञस्तायते । तदप्येतदृचोक्तम्—या पुरस्ताद् युज्यते,[2] ऋचो अक्षरे परमे व्योमन्[3] इति । तदेतदक्षरं ब्राह्मणो यं काममिच्छेत्, त्रिरात्रोपोषितः प्राङ्मुखो वाग्यतो बर्हिष्युपविश्य सहस्रकृत्व[4] आवर्तयेत् । सिध्यन्त्स्यार्थाः सर्वकर्माणि चेति ब्राह्मणम् ॥२२॥

वसोर्धाराणामैन्द्रं नगरम् । तदसुराः पर्यवारयन्त । ते देवा भीता आसन्—क इमानसुरानपहनिष्यतीति । त ओंकारं ब्रह्मणः पुत्रं ज्येष्ठं ददृशुः । ते तमब्रुवन्—भवता मुखेनेमानसुराञ्जयेमेति । स होवाच—किं मे प्रतीवाहो भविष्यतीति । वरं वृणीष्वेति । वृणा इति । स वरमवृणीत—न मामनीरयित्वा ब्राह्मणा ब्रह्म वदेयुः, यदि वदेयुरब्रह्म तत् स्यादिति । तथेति । ते देवा देवयजनस्योत्तरार्धे ऽसुरैः संयत्ता[5] आसन् । तानोंकारेणाग्नीध्रीयाद् देवा असुरान् पराभावयन्त । तद् यत् पराभावयन्त, तस्मादोंकारः पूर्वमुच्यते । यो ह वा एतमोंकारं न वेदावशः[6] स्यादिति, अथ य एवं वेद ब्रह्मवशः[6] स्यादिति । तस्मादोंकार ऋच्यृग्भवति[7], यजुषि यजुः, साम्नि साम, सूत्रे सूत्रं, ब्राह्मणे ब्राह्मणं, श्लोके श्लोकः, प्रणवे प्रणव इति ब्राह्मणम् ॥२३॥

---

१. सार्वत्रिकोऽप्ययं पाठः सन्दिग्धः। 'अभिजिघांसेयुः' इति केचित्, 'अभिजिगांसेयुः' इति चापर ऊहन्ते । २. अथर्व० (पै० सं०) १६।१०२।४। अथर्व० (शौ० सं०) १०।८।१०॥

३. अथर्व० (पै० सं०) १६।६१।८॥ अथर्व० (शौ० सं०) ६।१०।१८॥

४. बोथलिङ्गसंशोधितः पाठः । कोशेषु 'सहस्रकृत्वा' इति पाठः । पुणे-कोशयोः 'सहस्रकृत्व' इत्येव मौलिकः पाठः, पश्चात्तु शोधो व्यायामि । ५. 'संयता' इति रा० अपपाठः ।

६. '–वश' इति पुणे-कोशयोः । '–त्रस' इति कोशेषु पाठः । '–वशी' इति बोथलिङ्गसंशोधितः पाठः ।

७. गा० सं० । 'ऋग्भवति' 'ऋगृग्भवति' 'ऋग्यङ्भवति' इति कोशेषु पाठाः । पुणेकोशयोस्तु 'ऋच्यृग्भवति' इत्येव पाठः ।

ओंकारं पृच्छामः—को धातुः ? किं प्रातिपदिकम् ? किं नामाख्यातम् ? किं लिङ्गम् ? किं वचनम् ? का विभक्तिः ? कः प्रत्ययः ? कः स्वर उपसर्गो निपातः ? किं वै व्याकरणम् ? को विकारः ? को विकारी ? कतिमात्रः ? कतिवर्णः ? कत्यक्षरः ? कतिपदः ? कः संयोगः ? किं स्थानानुप्रदानकरणम् ? शिक्षुकाः किमुच्चारयन्ति ? किं छन्दः ? को वर्ण इति पूर्वे प्रश्नाः । अथोत्तरे—मन्त्रः कल्पो ब्राह्मणमृग्यजुः साम ? कस्माद् ब्रह्मवादिन ओंकारमादितः कुर्वन्ति ? किं दैवतम् ? किं ज्योतिषम् ? किं निरुक्तम् ? किं स्थानम् ? का प्रकृतिः ? किमध्यात्ममिति । षट्त्रिंशत् प्रश्नाः, पूर्वोत्तरयोः त्रयो वर्गा द्वादशकाः । एतैरोंकारं व्याख्यास्यामः ॥२४॥

इन्द्रः प्रजापतिमपृच्छत्—भगवन् ! अभिष्टूय[1] पृच्छामीति । पृच्छ वत्सेत्यब्रवीत् । किमयमोंकारः, कस्य पुत्रः, किं चैतच्छन्दः, किं चैतद्वर्णः, किं चैतद्ब्रह्मा ब्रह्म संपद्यते ? तस्माद् वै तद् भद्रमोंकारं पूर्वमालेभे । स्वरितोदात्त एकाक्षर ओंकार ऋग्वेदे, त्रैस्वर्योदात्त एकाक्षर ओंकारो यजुर्वेदे, दीर्घप्लुतोदात्त एकाक्षर ओंकारः सामवेदे, ह्रस्वोदात्त एकाक्षर ओंकारोऽथर्ववेदे, उदात्तोदात्तद्विपद अ उ इत्यर्धचतस्रो मात्रा मकारे व्यञ्जनमित्याहुः । या सा प्रथमा मात्रा ब्रह्मदेवत्या रक्ता वर्णेन । यस्तां ध्यायते नित्यं, स गच्छेद् ब्राह्मं पदम् । या सा द्वितीया मात्रा विष्णुदेवत्या कृष्णा वर्णेन । यस्तां ध्यायते नित्यं, स गच्छेद् वैष्णवं पदम् । या सा तृतीया मात्रैशानदेवत्या[2] कपिला वर्णेन । यस्तां ध्यायते नित्यं, स गच्छेदैशानं पदम् । या सार्धचतुर्थी मात्रा सर्वदेवत्या व्यक्तीभूता खं विचरति शुद्धस्फटिकसन्निभा वर्णेन । यस्तां ध्यायते नित्यं, स गच्छेत् पदमनामकम् । ओंकारस्य चोत्पत्तिः । विप्रो यो न जानाति तत् पुनरुपनयनम् ।

---

१. 'अभिसूय' इति रा० पाठः ।

२. सार्वत्रिकः पाठः । 'मात्रेशानदेवत्या' इति पाठोऽत्र सम्भाव्यते गास्ट्रेण ।

तस्माद् ब्राह्मणवचनमादर्तव्यम्—यथा लातव्यो गोत्रो, ब्रह्मणः पुत्रो, गायत्रं छन्दः, शुक्लो वर्णः, पुंसो वत्सो, रुद्रो देवता, ओंकारो वेदानाम् ॥२५॥

को धातुरिति—आपृधातुः, अवतिमप्येके। रूपसामान्यादर्थसामान्यं नेदीयः। तस्मादापेरोंकारः, सर्वमाप्नोतीत्यर्थः। कृदन्तमर्थवत् प्रातिपदिकमदर्शनं प्रत्ययस्य नाम संपद्यते, निपातेषु चैनं वैयाकरणा उदात्तं समामनन्ति तदव्ययीभूतम् अन्वर्थवाची शब्दो न व्येति कदाचनेति।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥

को विकारीति—अवतेः[1] प्रसारणम्, आप्नोतेराकारपकारौ विकार्यौ। आदित ओकारो[2] विक्रियते, द्वितीयो मकारः। एवं द्विवर्ण एकाक्षर ओमित्योंकारो निर्वृत्तः ॥२६॥

कतिमात्र इति—आदेस्तिस्रो मात्राः, अभ्यादाने हि प्लवते, मकारश्चतुर्थी[3]। किं स्थानमिति—उभावोष्ठौ स्थानं, नादानुप्रदानकरणौ च द्विस्थानम्। संध्यक्षरमवर्णलेशः कण्ठ्यो यथोक्तशेषः। पूर्वो विवृतकरणस्थितश्च, द्वितीयः[4] स्पृष्टकरणस्थितश्च। न संयोगो विद्यते। आख्यातोपसर्गानुदात्तस्वरितलिङ्गविभक्तिवचनानि च संस्थानाध्यायिन आचार्याः पूर्वे बभूवुः, श्रवणादेव प्रतिपद्यन्ते न कारणं पृच्छन्ति। अथापरपक्षीयाणां कविः पञ्चालचण्डः परिपृच्छको बभूवांबु[5] पृथगुद्गीथदोषान् भवन्तो ब्रुवन्त्विवति। तद् वाच्युपलक्षयेद् वर्णाक्षरपदाङ्कशः। विभक्त्यामृषिनिषेवितामिति वाचं स्तुवन्ति। तस्मात् कारणं ब्रूमः—वर्णानामयमिदं भवि-

१. संशोधितोऽयं पाठः। कोशेषु 'विकारी च्यवते' इति पाठः।
२. संशोधितोऽयं पाठः। यथाकोशम् 'ओंकारो' इति पाठः।
३. 'चतुर्थी' इति कोशेषु।
४. कोशेषु विसर्गरहितः समस्तः पाठः।
५. सन्दिग्धोऽयं पाठः।

ष्यतीति। षडङ्गविदस्तत् तथाधीमहे। किं छन्द इति—गायत्रं हि छन्दः। गायत्री वै देवानामेकाक्षरा श्वेतवर्णा च व्याख्याता। द्वौ द्वादशकौ वर्गौ। एतद् वै व्याकरणं धात्वर्थवचनं शैक्ष्यं[1] छन्दोवचनं च। अथोत्तरौ द्वौ द्वादशकौ वर्गौ वेदरहसिकी व्याख्याता। मन्त्रः कल्पो ब्राह्मणमृग्यजुःसामाथर्वाणि[2]। एषा व्याहृतिः चतुर्णां वेदानामानुपूर्वेणों भूर्भुवः स्वरिति व्याहृतयः ॥२७॥

असमीक्ष्यप्रवल्हितानि श्रूयन्ते। द्वापरादावृषीणामेकदेशो दोषपतिरिह चिन्तामापेदे—त्रिभिः सोमः पातव्यः समाप्तमिव भवति। तस्माद् ऋग्यजुःसामान्यपक्रान्ततेजांस्यासन्। तत्र महर्षयः परिदेवयां चक्रिरे—महच्छोकभयं प्राप्ताः स्मः, न चैतत् सर्वैः समभिहितम्, ते वय भगवन्तमेवोपधावाम, सर्वेषामेव शर्म भवानीति। ते तथेत्युक्त्वा तूष्णीमतिष्ठन्। नानुपसन्नेभ्य इति। उपोपसीदामीति[3]। नीचैर्बभूवुः। स एभ्य उपनीय प्रोवाच—मामिकामेव व्याहृतिमादित आदितः कुरुध्वमिति। एवं मामका आधीयन्ते। नर्ते भृग्वङ्गिरोविद्भ्यः सोमः पातव्यः। ऋत्विजः पराभवन्ति, यजमानो रजसापवध्स्यति, श्रुतिश्चापध्वस्ता तिष्ठतीति। एवमेवोत्तरोत्तराद् योगात् तोकं तोकं प्रशाध्वमिति। एवं प्रतापो न पराभविष्यतीति। तथा ह तथा ह भगवन्निति प्रतिपेदिर आप्याययन्। ते तथा वीतशोकभया बभूवुः। तस्माद् ब्रह्मवादिन ओंकारमादितः कुर्वन्ति॥२८॥

किं देवतमिति—ऋचामग्निर्देवतं, तदेव ज्योतिः, गायत्रं छन्दः, पृथिवी स्थानम्।

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्।
होतारं रत्नधातमम्॥[4]

इत्येवमादिं कृत्वा ऋग्वेदमधीयते।

---

१. 'शैक्षम्' पाठान्तरम्। ऋगनादिगणे (अष्टा० ४।३।७३) पाठात् संभवति साधुत्वम्।
२. '—थर्वणि' इति रा० पाठः।
३. अत्र बहुवचनेन भाव्यमिति गास्ट्रः। ४. ऋ० १।१।१॥

यजुषां वायुर्देवतं, तदेव ज्योतिः, त्रैष्टुभं छन्दः, अन्तरिक्षं स्थानम्। इषे त्वोर्जे त्वा वायव स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण[1] इत्येवमादिं कृत्वा यजुर्वेदमधीयते।

साम्नामादित्यो देवतं, तदेव ज्योतिः, जागतं छन्दः, द्यौः स्थानम्।
अग्न आयाहि वीतये गृणानो हव्यदातये।
नि होता सत्सि बर्हिषि॥[2]
इत्येवमादिं कृत्वा सामवेदमधीयते।

अथर्वणां चन्द्रमा देवतं, तदेव ज्योतिः, सर्वाणि छन्दांसि, आपः स्थानम्। शं नो देवीरभिष्टय[3] इत्येवमादिं कृत्वाथर्ववेदमधीयते।

अद्भ्यः स्थावरजङ्गमो भूतग्रामः संभवति। तस्मात् सर्वमापोमयं भूतं सर्वं भृग्वङ्गिरोमयम्। अन्तरैते त्रयो वेदा भृगूनङ्गिरसः श्रिता इत्यब्विति प्रकृतिरपामोंकारेण च। एतस्माद् व्यासः पुरोवाच—भृग्वङ्गिरोविदा संस्कृतो ऽन्यान् वेदानधीयीत, नान्यत्र संस्कृतो भृग्वङ्गिरसो ऽधीयीत। सामवेदे ऽथ खिल श्रुतिः—ब्रह्मचर्येण चैतस्मादथर्वाङ्गिरसो ह यो वेद स वेद सर्वमिति ब्राह्मणम्॥२९॥

अध्यात्ममात्मभैषज्यमात्मकैवल्यमोंकारः। आत्मानं निरुध्य सङ्गममात्रीं भूतार्थचिन्तां चिन्तयेत्। अतिक्रम्य वेदेभ्यः सर्वपरमध्यात्मफलं प्राप्नोतीत्यर्थः। सवितर्कं ज्ञानमयमित्येतैः प्रश्नैः प्रतिप्रश्नैश्च यथार्थं पदमनुविचिन्त्य प्रकरणज्ञो हि प्रबलो विषयी स्यात् सर्वस्मिन् वाकोवाक्य इति ब्राह्मणम्॥३०॥

[4]एतद्ध स्मैतद् विद्वांसमेकादशाक्षं मौद्गल्यं ग्लावो मैत्रेयो ऽभ्याजगाम। स तस्मिन् ब्रह्मचर्यं वसतो विज्ञायोवाच। किं स्विद् मर्या

१. मा० सं० १।१  २. सा० पू० १।१
३. अथर्व० (पैं० सं०) १।१।१॥ अथर्व० (शौ० सं०) १।६।१
४. गो० ब्रा० १।१।३१—३८ गायत्र्युपनिषद् इति ब्लूमफील्ड-गास्ट्र-प्रभृतयः।

अयं तद् मौद्गल्यो ऽध्येति यदस्मिन् ब्रह्मचर्यं वसतीति। तद्धि मौद्गल्यस्यान्तेवासी शुश्राव। स आचार्यायाव्रज्याचचष्टे—दुरधीयानं वा अयं भवन्तमवोचद् यो ऽयमद्यातिथिर्भवति। किं सौम्य विद्वानिति। त्रीन् वेदान् ब्रूते भो इति। तस्य सौम्य यो विपष्टो विजिगीषो ऽन्तेवासी तं मे ह्वयेति। तमाजुहाव। तमभ्युवाच—असाविति। भो इति। किं सौम्य त आचार्यो ऽध्येतीति। त्रीन् वेदान् ब्रूते भो इति। यद् नु खलु सौम्यास्माभिः सर्वे वेदा मुखतो गृहीताः, कथं त एवमाचार्यो भाषते? कथं नु शिष्टाः शिष्टेभ्य एवं भाषेरन्? यं ह्येनमहं प्रश्नं पृच्छामि न तं विवक्ष्यति न ह्येनमध्येतीति। स ह मौद्गल्यः स्वमन्तेवासिनमुवाच—परेहि सौम्य ग्लावं मैत्रेयमुपसीद। अधीहि भोः सावित्रीं गायत्रीं चतुर्विंशतियोनिं द्वादशमिथुनां, यस्या भृग्वङ्गिरसश्चक्षुः, यस्यां सर्वमिदं श्रितं तां भवान् प्रब्रवीत्विति। स चेत् सौम्य दुरधीयानो भविष्यति, आचार्योवाच[1] ब्रह्मचारी ब्रह्मचारिणो सावित्रीं प्राहेति वक्ष्यति, तत् त्वं ब्रूयाः[2]—दुरधीयानं तं वै भवान् मौद्गल्यमवोचत्। स त्वा यं प्रश्नमप्राक्षीद्, न तं व्यवोचः। पुरा संवत्सरादार्तिमारिष्यसीति ।।३१।।

स तत्राजगाम यत्रेतरो बभूव। तं ह पप्रच्छ। स ह न प्रतिपेदे। तं होवाच—दुरधीयानं तं वै भवान् मौद्गल्यमवोचत्। स त्वा यं प्रश्नमप्राक्षीद्, न तं व्यवोचः। पुरा संवत्सरादार्तिमारिष्यसीति। स ह मैत्रेयः स्वान्न्तेवासिन उवाच—यथार्थं भवन्तो यथागृहं यथामनो विप्रसृज्यन्ताम्। दुरधीयानं वा अहं मौद्गल्यमवोचम्। स मा यं प्रश्नमप्राक्षीद्, न तं व्यवोचम्। तमुपैष्यामि, शान्तिं करिष्यामीति। स ह मैत्रेयः प्रातः समित्पाणिर्मौद्गल्यमुपससाद—असौ वा[3] अहं भो मैत्रेयः[4]। किमर्थमिति।

---

१. दुरन्वितोऽयं पाठः। 'आचार्यो वा ह' इति पाठस्तु सङ्गतः स्यात्।

२. संशोधितोऽयं पाठः। 'ब्रूयाद्' इत्येव कोशेषु पाठः।

३. पुणे-कोशयोः पाठः। अन्यत्र कोशेषु '—दासी वी' '—दासा वा' '—दासा वाग्रहं' इति पाठाः। ४. वाक्यान्तेऽत्र 'इति' पदम् अपेक्ष्यते।

दुरधीयानं वा अहं भवन्तमवोचम्। त्वं मा यं प्रश्नमप्राक्षीर्न तं व्यवोचम्। त्वामुपैष्यामि, शान्तिं करिष्यामीति । स होवाच—अत्र वा उपेतं च सर्वं च कृतं, पापकेन त्वा यानेन चरन्तमाहुः । अथो अयं[1] मम कल्याणः, तं ते ददामि, तेन याहीति। स होवाच—एतदेवात्रात्विषं चानृशंस्यं च यथा भवानाह, उपायामि त्वेव भवन्तमिति। तं होपेयाय। तं होपेत्य पप्रच्छ—

किं स्विकाहुर्भोः सवितुर्वरेण्यं भर्गो देवस्य कवयः किमाहुः ।
धियो विचक्ष्व यदि ताः प्रवेत्थ प्रचोदयन्त्सविता[2] याभिरेति॥ इति ।

तस्मा एतत् प्रोवाच—

वेदांश्छन्दांसि[3] सवितुर्वरेण्यं भर्गो देवस्य कवयो ऽन्नमाहुः ।
कर्माणि धियस्तदु ते ब्रवीमि[4] प्रचोदयन्त्सविता[2] याभिरेति ॥ इति ।

तमुपसंगृह्य पप्रच्छ—अधीहि भोः कः सविता ? का सावित्री ? ॥३२॥

मन एव सविता वाक् सावित्री । यत्र ह्येव मनस्तद्वाक्, यत्र वै वाक् तद् मन इति । एते द्वे योनी एकं मिथुनम् । अग्निरेव सविता पृथिवी सावित्री। यत्र ह्येवाग्निस्तत् पृथिवी, यत्र वै पृथिवी तदग्निरिति । एते द्वे योनी एकं मिथुनम् । वायुरेव सवितान्तरिक्षं सावित्री । यत्र ह्येव वायुस्तदन्तरिक्षं, यत्र वा अन्तरिक्षं तद् वायुरिति । एते द्वे योनी एकं मिथुनम् । आदित्य एव सविता द्यौः सावित्री । यत्र ह्येवादित्यस्तद् द्यौः, यत्र वै द्यौस्तदादित्य इति । एते द्वे योनी एकं मिथुनम् । चन्द्रमा एव सविता नक्षत्राणि सावित्री । यत्र ह्येव चन्द्रमास्तद् नक्षत्राणि, यत्र वै नक्षत्राणि तच्चन्द्रमा इति । एते द्वे योनी एकं मिथुनम् । अहरेव सविता रात्रिः सावित्री । यत्र ह्येवाहस्तद् रात्रिः, यत्र वै रात्रिस्तदहरिति । एते द्वे योनी एकं मिथुनम् । उष्णमेव सविता

---

१. संशोधितः पाठः । कोशेषु 'अथोऽयं' इति पाठः ।
२. यथाकोशम् अयं पाठः । रा० गास्त्र्योस्तु 'प्रचोदयान्त्सविता' इति पाठः ।
३. गा० सं० । 'वेदाच्छन्दांसि' इति कोशेषु पाठः ।
४. रा० पुणे-ख-कोशसम्मतः पाठः । गास्त्रं पुणे-क-कोशयोः 'प्रब्रवीमि' इति पाठः ।

शीतं सावित्री। यत्र ह्येवोष्णं तच्छीतं, यत्र वै शीतं तदुष्णमिति। एते द्वे योनी एकं मिथुनम्। अभ्रमेव सविता वर्षं सावित्री। यत्र ह्येवाभ्रं तद् वर्षं, यत्र वै वर्षं तदभ्रमिति। एते द्वे योनी एकं मिथुनम्। विद्युदेव सविता स्तनयित्नुः सावित्री। यत्र ह्येव विद्युत् तत् स्तनयित्नुः, यत्र वै स्तनयित्नुस्तद् विद्युदिति। एते द्वे योनी एकं मिथुनम्। प्राण एव सवितान्नं सावित्री। यत्र ह्येव प्राणस्तदन्नं, यत्र वा अन्नं तत् प्राण इति। एते द्वे योनी एकं मिथुनम्। वेदा एव सविता छन्दांसि सावित्री। यत्र ह्येव वेदास्तच्छन्दांसि, यत्र वै छन्दांसि तद् वेदा इति। एते द्वे योनी एकं मिथुनम्। यज्ञ एव सविता दक्षिणाः सावित्री। यत्र ह्येव यज्ञस्तद् दक्षिणाः, यत्र वै दक्षिणास्तद् यज्ञ इति। एते द्वे योनी एकं मिथुनम्। एतद्ध स्मैनद्विद्वांसमोपाकारिमासस्तुर्ब्रह्मचारी[1] ते संस्थित इति। अथैत आसस्तुराचित[1] इव चितो बभूव। अथोत्थाय प्राव्राजीदिति। एतद् वा अहं वेद। नैतासु योनिष्वित एतेभ्यो वा मिथुनेभ्यः संभूतो ब्रह्मचारी मम पुरायुषः प्रेयादिति ॥३३॥

ब्रह्म हेदं श्रियं प्रतिष्ठामायतनमैक्षत। तत् तपस्व। यदि तद्व्रते ध्रियेत तत्सत्ये प्रत्यतिष्ठत्। स सविता सावित्र्या ब्राह्मणं सृष्ट्वा तत् सावित्रीं पर्यदधात्। तत्सवितुर्वरेण्यम्[2] इति सावित्र्याः प्रथमः पादः। पृथिव्यर्चं समदधाद्, ऋचाग्निम्, अग्निना श्रियं, श्रिया स्त्रियं, स्त्रिया मिथुनं, मिथुनेन प्रजां, प्रजया कर्म, कर्मणा तपः, तपसा सत्यं, सत्येन ब्रह्म, ब्रह्मणा ब्राह्मणं, ब्राह्मणेन व्रतम्। व्रतेन वै ब्राह्मणः संशितो भवति, अशून्यो भवति, अविच्छिन्नो भवति। अविच्छिन्नोऽस्य तन्तुरविच्छिन्नं जीवनं भवति य एवं वेद, यश्चैवंविद्वानेवमेतं सावित्र्याः प्रथमं पादं व्याचष्टे ॥३४॥

---

१. अस्फुटम्। पुणे-कोशयोः 'आसस्तुः' इत्यस्य स्थाने 'आसद्गुः' इति पाठः।

२. ऋ० ३।६२।१०।। मा० सं० ३।५।। साम० १४६२ (२।६।३।१०।१)।

**भर्गो देवस्य धीमहीति** सावित्र्या द्वितीयः पादः । अन्तरिक्षेण यजुः समदधाद्, यजुषा वायुं, वायुनाभ्रम्, अभ्रेण वर्षं, वर्षेणौषधिवनस्पतीन्, ओषधिवनस्पतिभिः पशून्, पशुभिः कर्म, कर्मणा तपः, तपसा सत्यं, सत्येन ब्रह्म, ब्रह्मणा ब्राह्मणं, ब्राह्मणेन व्रतम् । व्रतेन वै ब्राह्मणः संशितो भवति, अशून्यो भवति, अविच्छिन्नो भवति । अविच्छिन्नो ऽस्य तन्तुरविच्छिन्नं जीवनं भवति य एवं वेद, यश्चैवंविद्वानेवमेतं सावित्र्या द्वितीयं पादं व्याचष्टे ॥३५॥

**धियो यो नः प्रचोदयादिति** सावित्र्यास्तृतीयः पादः । दिवा साम समदधात्, साम्नादित्यम्, आदित्येन रश्मीन्, रश्मिभिर्वर्षं, वर्षेणौषधिवनस्पतीन्, ओषधिवनस्पतिभिः पशून्, पशुभिः कर्म, कर्मणा तपः, तपसा सत्यं, सत्येन ब्रह्म, ब्रह्मणा ब्राह्मणं, ब्राह्मणेन व्रतम् । व्रतेन वै ब्राह्मणः संशितो भवति, अशून्यो भवति, अविच्छिन्नो भवति । अविच्छिन्नो ऽस्य तन्तुरविच्छिन्नं जीवनं भवति य एवं वेद, यश्चैवंविद्वानेवमेतं सावित्र्यास्तृतीयं पादं व्याचष्टे ॥३६॥

तेन ह वा एवंविदुषा ब्राह्मणेन ब्रह्माभिपन्नं ग्रसितं परामृष्टम् । ब्रह्मणाकाशमभिपन्नं ग्रसितं परामृष्टम् । आकाशेन वायुरभिपन्नो ग्रसितः परामृष्टः । वायुना ज्योतिरभिपन्नं ग्रसितं परामृष्टम् । ज्योतिषापो ऽभिपन्ना ग्रसिताः परामृष्टाः । अद्भिर्भूमिरभिपन्ना ग्रसिता परामृष्टा । भूम्यान्नमभिपन्नं ग्रसितं परामृष्टम् । अन्नेन प्राणो ऽभिपन्नो ग्रसितः परामृष्टः । प्राणेन मनो ऽभिपन्नं ग्रसितं परामृष्टम् । मनसा वागभिपन्ना ग्रसिता परामृष्टा । वाचा वेदा अभिपन्ना ग्रसिताः परामृष्टाः । वेदैर्यज्ञो ऽभिपन्नो ग्रसितः परिमृष्टः । तानि ह वा एतानि द्वादशमहाभूतान्येवंविदि प्रतिष्ठितानि । तेषां यज्ञ एव परार्ध्यः ॥३७॥

तं ह स्मैतमेवंविद्वांसो मन्यन्ते--विद्मैनमिति याथातथ्यमविद्वांसः । अयं यज्ञो वेदेषु प्रतिष्ठितः । वेदा वाचि प्रतिष्ठिताः । वाङ् मनसि प्रतिष्ठिता । मनः प्राणे प्रतिष्ठितम् । प्राणो ऽन्ने प्रतिष्ठितः । अन्नं भूमौ

प्रतिष्ठितम् । भूमिरप्सु प्रतिष्ठिता । आपो ज्योतिषि प्रतिष्ठिताः । ज्योतिर्वायौ प्रतिष्ठितम् । वायुराकाशे प्रतिष्ठितः । आकाशं ब्रह्मणि प्रतिष्ठितम् । ब्रह्म ब्राह्मणे ब्रह्मविदि प्रतिष्ठितम् । यो ह वा एवंवित् स ब्रह्मवित् । पुण्यां च कीर्तिं लभते सुरभींश्च गन्धान् । सोऽपहतपाप्मा । अनन्तां[1] श्रियमश्नुते य एवं वेद, यश्चैवंविद्वानेवमेतां वेदानां मातरं सावित्रीं संपदमुपनिषदमुपास्त इति ब्राह्मणम् ॥३८॥

आपो गर्भं जनयन्तीः[2] इति । अपां गर्भः पुरुषः । स यज्ञः । अद्भिर्यज्ञः प्रणीयमानः प्राङ् तायते[3] । तस्मादाचमनीयं पूर्वमाहारयति । स यदाचामति त्रिराचामति । द्विः परिशुम्भति । आयुरवरुह्य पाप्मानं निर्णुदति । उपसाद्य यजुषोद्धृत्य मन्त्रान् प्रयुज्यावसाय प्राचीः शाखाः संधाय निरङ्गुष्ठे पाणावमृतमस्यमृतोपस्तरणमस्यमृताय त्वोपस्तृणमीति पाणावुदकमानीय जीवा स्थ[4] इति सूक्तेन त्रिराचामति । स यत् पूर्वमाचामति सप्त प्राणांस्तानेतेनास्मिन्नाप्याययति । या ह्येमा बाह्याः शरीराद् मात्रास्तद् यथैतदग्निं वायुमादित्यं चन्द्रमसमपः पशूनन्यांश्च प्रजास्तानेतेनास्मिन्नाप्याययति । आपो ऽमृतम् । स यद् द्वितीयमाचामति सप्तापानांस्तानेतेनास्मिन्नाप्याययति । या ह्येमा बाह्याः शरीराद् मात्रास्तद् यथैतत् पौर्णमासीमष्टकाममावास्यां श्रद्धां दीक्षां यज्ञं दक्षिणास्तानेतेनास्मिन्नाप्याययति । आपो ऽमृतम् । स यत् तृतीयमाचामति सप्त व्यानांस्तानेतेनास्मिन्नाप्याययति । या ह्येमा बाह्याः शरीराद् मात्रास्तद् यथैतत् पृथिवीमन्तरिक्षं दिवं नक्षत्राण्यृतूनार्तवान् संवत्सरांस्तानेतेनास्मिन्नाप्याययति । आपो ऽमृतम् । पुरुषो ब्रह्म । अथाप्यृग् निगमो[5]

---

१. गास्ट्रसंशोधितः पाठः । कोशेषु 'अनन्त्यां' 'अनन्त' 'अनन्त्य' इति पाठाः ।

२. अथर्व० (पै० सं०) ४।१।८॥ 'आपो वत्सं जनयन्तीः' इति अथर्व० (शौ० सं०) ४।२।८॥

३. 'णायते' इति रा० पाठः ।

४. अथर्व० (पै० सं०) २०।४१।१॥ अथर्व० (शौ० सं०) १९।६९।१॥

५. पुण-कोशयोः पाठः । 'प्रींगिनगमो' इति गास्ट्रसंकरणे पाठः ।

भवति—तस्माद् वै विद्वान् पुरुषमिदं पुण्डरीकम्[1] इति । प्राण एष स पुरि शेते, संपुरि[2] शेत[2] इति । पुरिशयं सन्तं प्राणं पुरुष इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः । स यत् पूर्वमाचामति पुरस्ताद्धोमांस्तेनास्मिन्नवरुन्द्धे । स यद् द्वितीयमाचामत्याज्यभागौ तेनास्मिन्नवरुन्द्धे । स यत् तृतीयमाचामति संस्थितहोमांस्तेनास्मिन्नवरुन्द्धे । स यद् द्विः परिशुम्भति तत् संमित् संबर्हिः[3] । स यत् सर्वाणि खानि सर्वं देहमाप्याययति यच्चान्यदातारं[2] मन्त्रकार्यं यज्ञे स्कन्दति सर्वं तेनास्मिन्नवरुन्द्धे । स यदोंपूर्वान् मन्त्रान् प्रयुङ्क्त आ सर्वमेधादेते क्रतव एत एवास्य सर्वेषु लोकेषु सर्वेषु देवेषु सर्वेषु वेदेषु सर्वेषु भूतेषु सर्वेषु सत्त्वेषु कामचारः कामविमोचनं भवत्यर्धे च न प्रमीयते य एवं वेद । तदप्येतदृचोक्तम्—

आपो भृग्वङ्गिरोरूपमापो भृग्वङ्गिरोमयम् ।
सर्वमापोमयं भूतं सर्वं भृग्वङ्गिरोमयम् ।
अन्तरैते त्रयो वेदा भृगूनङ्गिरसो ऽनुगाः ।।[3]
अपां पुष्पं मूर्तिराकाशं पवित्रमुत्तमम् ।[3] इति ।

आचम्याभ्युक्ष्यात्मानमनुमन्त्रयत इन्द्र जीव[4] इति ब्राह्मणम् ।।३९।।

।। इत्यथर्ववेदे गोपथब्राह्मणपूर्वभागे प्रथमः प्रपाठकः ।।

—०—

१. अथर्व० (पै० सं०) १६।८८।३।। अथर्व० (शौ० सं०) ११।८।३२।। उभयत्र 'पुण्डरीकम्' इत्यस्य स्थाने 'ब्रह्मेति' इति पाठः ।

२. सन्दिग्धम् । पुणे-ख-कोशे नास्ति ।

३. अनुपलब्धमूलेयमृक् ।

४. अथर्व० (शौ० सं०) १९।७०.१।।

# द्वितीयः प्रपाठकः

ओम् । ब्रह्मचारीष्णंश्चरति रोदसी उभे[1] इत्याचार्यमाह । तस्मिन् देवाः संमनसो भवन्ति[2] इति वायुमाह । स सद्य एति पूर्वस्मादुत्तरं समुद्रम्[3] इत्यादित्यमाह । दीक्षितो दीर्घश्मश्रुः[4] । एष दीक्षित एष दीर्घश्मश्रुः । एष एवाचार्यस्थाने तिष्ठन्नाचार्य इति स्तूयते, वैद्युतस्थाने तिष्ठन् वायुरिति स्तूयते, द्यौस्थाने तिष्ठन्नादित्य इति स्तूयते । तदप्येतदृचोक्तम्—ब्रह्मचारीष्णन्[5] इति ब्राह्मणम् ॥१॥

जायमानो ह वै ब्राह्मणः सप्तेन्द्रियाण्यभिजायते[6]—ब्रह्मवर्चसं च यशश्च स्वप्नं च क्रोधं च श्लाघां च रूपं च पुण्यमेव गन्धं सप्तमम् । तानि ह वा अस्यैतानि ब्रह्मचर्यमुपेतस्योपक्रामन्ति[7] । मृगानस्य ब्रह्मवर्चसं गच्छति, आचार्यं यशः, अजगरं स्वप्नः, वराहं क्रोधः, अपः[8] श्लाघा, कुमारीं रूपम्, ओषधिवनस्पतीन् पुण्यो गन्धः । स यद् मृगाजिनानि वस्ते, तेन तद् ब्रह्मवर्चसमवरुन्द्धे, यदस्य मृगेषु भवति । स ह स्नातो ब्रह्मवर्चसी भवति । स यदहरहराचार्याय कर्म करोति, तेन तद् यशोऽवरुन्द्धे यदस्याचार्ये भवति । स ह स्नातो यशस्वी भवति । स यत्

---

१. अथर्व० (पै० सं०) १६।१५३।१॥ अथर्व० (शौ० सं०) ११।५।१॥

२. अथर्व० (शौ० सं०) ११।५।१॥ तु० अथर्व० (पै० सं०) १६।१५३।१॥

३. अथर्व० (शौ० सं०) ११।५।६॥ तु० अथर्व० (पै० सं०) १६।१५३।६॥

४. अथर्व० (शौ० सं०) ११।५।६॥ अथर्व० (पै० सं०) १६।१५३।६॥

५. अथर्व० (पै० सं०) १६।१५३।१॥ अथर्व० (शौ० सं०) ११।५।१॥

६. गास्ट्रसंशोधितः पाठः । कोशेषु 'जायन्ते' इति पाठः ।

७. संशोधितः पाठः । गास्ट्रसंशोधितस्तु 'उपेत्योपक्रामन्ति' इति पाठः । 'उपेतोपक्रामन्ति' इति कोशेषु पाठः ।

८. गा० सं० । पुणे-कोशयोस्तथैव पाठः । 'अप' इति कोशेषु पाठः ।

सुषुप्सुर्निद्रां निनयति, तेन तं स्वप्नमवरुन्द्धे, यो ऽस्याजगरे भवति। तं ह स्नातं स्वपन्तमाहुः—स्वपितु मैनं बोबुधथेति । स यत् क्रुद्धो वाचा न कंचन हिनस्ति पुरुषात् पुरुषात् पापीयानिव मन्यमानः, तेन तं क्रोधमवरुन्द्धे, यो ऽस्य वराहे भवति। तस्य ह स्नातस्य क्रोधाः श्लाघीयसं विशन्ते। अथाद्भिः श्लाघमानो न स्नायात्, तेन तां श्लाघामवरुन्द्धे, यास्याप्सु भवति। स ह स्नातः श्लाघीयो ऽन्येभ्यः श्लाघ्यते। अथैतद् ब्रह्मचारिणो रूपं यत् कुमार्याः। तां नग्नां नोदीक्षेत,[1] इति वेति वा मुखं विपरिधापयेत्। तेन तद् रूपमवरुन्द्धे, यदस्य कुमार्यां भवति। तं ह स्नातं कुमारीमिव निरीक्षन्ते। अथैतद् ब्रह्मचारिणः पुण्यो गन्धो य ओषधिवनस्पतीनां, तासां पुण्यं गन्धं प्रच्छिद्य नोपजिघ्रेत्। तेन तं पुण्यं गन्धमवरुन्द्धे, यो ऽस्यौषधिवनस्पतिषु भवति। स ह स्नातः पुण्यगन्धिर्भवति ॥२॥

स वा एष उपयंश्चतुर्धोपैत्यग्निं पादेनाचार्यं पादेन ग्रामं पादेन मृत्युं पादेन। स यदहरहः समिध आहृत्य सायंप्रातरग्निं परिचरेत्, तेन तं पादमवरुन्द्धे, यो ऽस्याग्नौ भवति। स यदहरहराचार्याय कर्म करोति, तेन तं पादमवरुन्द्धे, यो ऽस्याचार्ये भवति। स यदहरहर्ग्रामं प्रविश्य भिक्षामेव परीप्सति न मैथुनं, तेन तं पादमवरुन्द्धे, यो ऽस्य ग्रामे भवति। स यत् क्रुद्धो वाचा न कंचन हिनस्ति पुरुषात् पुरुषात् पापीयानिव मन्यमानः, तेन तं पादमवरुन्द्धे, यो ऽस्य मृत्यौ भवति ॥३॥

पञ्च ह वा एते ब्रह्मचारिण्यग्नयो धीयन्ते, द्वौ पृथग्घस्तयोर्मुखे हृदय उपस्थ एव पञ्चमः। स यद् दक्षिणेन पाणिना स्त्रियं न स्पृशति तेनाहरहर्याजिनां लोकमवरुन्द्धे, यत् सव्येन तेन प्रव्राजिनां, यद् मुखेन तेनाग्निप्रस्कन्दिनां, यद् हृदयेन तेन शूराणां, यदुपस्थेन तेन गृहमेधिनाम्।

---

१. गास्ट्रसंशोधितः पाठः। 'नोदीक्षेदेति' इति प्रायिकः पाठः।

तैश्चेत् स्त्रियं पराहरति, अनग्निरिव शिष्यते । स यदहरहराचार्याय कुले ऽनुतिष्ठते सो ऽनुष्ठाय ब्रूयाद्—धर्म गुप्तो मा गोपायेति । धर्मो हैनं गुप्तो गोपायति । तस्य ह प्रजा श्वः श्वः श्रेयसी श्रेयसीह भवति । धाय्यैव[1] प्रतिधीयते । स्वर्गे लोके पितॄन् निदधाति । तान्तवं न वसीत । यस्तान्तवं वस्ते, क्षत्रं वर्धते न ब्रह्म । तस्मात् तान्तवं न वसीत, ब्रह्म वर्धतां मा क्षत्रमिति । नोपर्यासीत । यद् उपर्यास्ते, प्राणमेव तद् आत्मनो ऽधरं कुरुते, यद् वातो वहति । अध एवासीत, अधः शयीत, अधस्तिष्ठेद्, अधो व्रजेत् । एवं ह स्म वै तत् पूर्वे ब्राह्मणा ब्रह्मचर्यं चरन्ति । तं ह स्म तत् पुत्रं भ्रातरं वोपतापिनमाहुः—उपनयेतैनमिति । आ समिद्धारात् स्वरेष्यन्तो ऽन्नमद्यात् । अथाह जघनमाहुः—स्नापयेतैनमित्या समिद्-धारात् । न ह्येतानि व्रतानि भवन्ति । तं चेच्छयानमाचार्यो ऽभिवदेत् स प्रतिसंहाय प्रतिशृणुयात्, तं चेच्छयानमुत्थाय, तं चेदुत्थितमभिप्रक्रम्य, तं चेदभिप्रक्रान्तमभिपलायमानम् । एवं ह स्म वै तत् पूर्वे ब्राह्मणा ब्रह्म-चर्यं चरन्ति । तेषां ह स्म वैषा पुण्या कीर्तिर्गच्छत्या ह वा अयं सो ऽद्य गमिष्यतीति ॥४॥

जनमेजयो ह वै पारीक्षितो मृगयां चरिष्यन् हंसाभ्यामसिष्यन्[2] उपावतस्थ इति । तावूचतुर्जनमेजयं पारीक्षितम्—अभ्याजगाम[3] । स होवाच—नमो वां भगवन्तौ, कौ नु भगवन्ताविति ? तावूचतुः—दक्षिणाग्निश्चाहवनीयश्चेति । स होवाच—नमो वां भगवन्तौ, तदाकीय-तामितीहोपाराममिति । अपि किल देवा न रमन्ते, न हि देवा न रमन्ते, अपि चैकोपारामाद् देवा आराममुपसंक्रामन्तीति । स होवाच—नमो वां भगवन्तौ, किं पुण्यमिति ? ब्रह्मचर्यमिति । किं लौक्यमिति ? ब्रह्म-चर्यमेवेति । तत् को वेद इति ? दन्तावलो धौम्रः । अथ खलु दन्तावलो धौम्रो यावति तावति काले पारीक्षितं जनमेजयमभ्याजगाम । तस्मा

१. सन्दिग्धम् ! 'धाय्येव' इति प्रायिकः पाठः ।
२. गास्त्रपाठः । 'अशिक्षन्' इति रा० पाठः । 'असिक्षन्' 'अशिष्यन्' इत्यपि कोशेषु ।
३. अत्र द्विवचनेन भाव्यम्, 'इति' पदं च वाक्यान्तेऽपेक्ष्यते ।

उत्थाय स्वयमेव विष्टरं निदधौ। तमुपसंगृह्य पप्रच्छ—अधीहि भो किं पुण्यमिति ? ब्रह्मचर्यमिति। किं लौक्यमिति ? ब्रह्मचर्यमेवेति। तस्मा एतत् प्रोवाच—अष्टाचत्वारिंशद्वर्षं सर्ववेदब्रह्मचर्यम्। तच्चतुर्धा वेदेषु व्युह्य द्वादशवर्षं ब्रह्मचर्यं द्वादशवर्षाण्यवरार्धम्। अपि स्नायंश्चरेद् यथाशक्त्यपरम्। तस्मा उ ह स ऋषभौ[1] सहस्रं ददौ। अप्यपि[2] कीर्तितम्—आचार्यो ब्रह्मचारी[3] इति। एक आहुराकाशमधिदैवतम्। अथाध्यात्मं ब्राह्मणो व्रतवांश्चरणवान् ब्रह्मचारी ॥५॥

ब्रह्म ह वै प्रजा मृत्यवे संप्रयच्छद्[4] ब्रह्मचारिणमेव न संप्रददौ। स होवाच—अश्याम्[5] अस्मिन्निति। किमिति ? यां रात्रीं समिधमनाहृत्य वसेत्, तामायुषो ऽवरुन्धीयेति। तस्माद् ब्रह्मचार्यहरहः समिध आहृत्य सायंप्रातरग्निं परिचरेत्। नोपर्युपसादयेदथ प्रतिष्ठापयेत्। यदुपर्युपसादयेज्जीमूतवर्षी तदहः पर्जन्यो भवति। ते देवा अब्रुवन्—ब्राह्मणो वा अयं ब्रह्मचर्यं चरिष्यति। ब्रूतास्मै भिक्षा इति गृहपतिर्ब्रूत बहुचारी गृहपत्न्या इति। किमस्या वृञ्जीताददत्या इति ? इष्टापूर्तसुकृतद्रविणमवरुन्ध्यादिति। तस्माद् ब्रह्मचारिणे ऽहरहर्भिक्षां दद्याद् गृहिणी, मा मे[6] ऽयमिष्टापूर्तसुकृतद्रविणमवरुन्ध्यादिति। सप्तमीं नातिनयेत्। सप्तमीमतिनयन् न ब्रह्मचारी भवति। समिद्भैक्षे सप्तरात्रमचरितवान् ब्रह्मचारी पुनरुपनेयो भवति[7] ॥६॥

नोपरिशायी स्याद् न गायनो न नर्तनो न सरणो न निष्ठीवेत्। यदुपरिशायी भवत्यभीक्ष्णं निवासा जायन्ते। यद् गायनो भवत्यभीक्ष्णश

१. गास्ट्रदिशम् अनुसृत्य संशोधितोऽत्र पाठः। यथाकोशपाठस्तु 'उहस्यृषभो' इति।
२. 'अप्यप' इति गास्ट्रपाठः।
३. अथर्व० (पै० सं०) १६।१५४।६॥ अथर्व० (शौ० सं०) ११।५।१६।
४. सार्वत्रिकोऽयं पाठः। 'संप्रायच्छद्' इति गास्ट्र-शोधोऽनावश्यकः।
५. गास्ट्रपाठः। 'अस्याम्' इत्येवान्यत्र।
६. कोशानुसारी पाठः। गास्ट्रसंशोधितस्तु 'मा' इति पाठः।
७. तुलना कार्या—शत० कां० ११, अ० ३, ब्रा० ६॥

आक्रन्दान् धावन्ते। यद् नर्तनो भवत्यभीक्ष्णशः प्रेतान् निर्हरन्ते। यत् स्वप्नो भवत्यभीक्ष्णशः प्रजाः संविशन्ते। यद् निष्ठीवति मध्य एव तदात्मनो निष्ठीवति। स चेद् निष्ठीवेद् दिवो नु मां[1], यदत्रापि मधोरहं[2] यदत्रापि रसस्य मे[3] इत्यात्मानमनुमन्त्रयते।

यदत्रापि मधोरहं निरष्ठविषमस्मृतम्।
अग्निश्च तत् सविता च पुनर्मे जठरे धत्ताम्॥[2]

यदत्रापि रसस्य मे परा पपातास्मृतम्।
तदिहोप ह्वयामहे तन्म आ प्यायतां पुनः[3]॥ इति

न श्मशानमातिष्ठेत्। स चेदभितिष्ठेदुदकं हस्ते कृत्वा यदीदमृतुकाम्येत्यभिमन्त्र्य जपन् संप्रोक्ष्य परिक्रामेत्, समयायोपरिव्रजेत्।

यदीदमृतुकाम्याघं रिप्रमुपेयिम।
अन्धः श्लोणं इव हीयतां मा नो ऽन्वागादघं यतः॥[4] इति

अथ हैतद् देवानां परिषूतं यद् ब्रह्मचारी। तदप्येतदृचोक्तम्—

देवानामेतत् परिषूतमनभ्यारूढं चरति रोचमानम्।
तस्मिन् सर्वे पशवस्तत्र यज्ञास्तस्मिन्नन्नं सह देवताभिः॥[4] इति

ब्राह्मणम्॥ ७॥

प्राणापानौ जनयन्[5] इति शङ्खस्य मुखे[6] महर्षेर्वसिष्ठस्य पुत्र एतां वाचं ससृजे, शीतोष्णाविहोत्सौ प्रादुर्भवेयातामिति। तथा तच्छश्वदनु-

१. अथर्व० (शौ० सं०) ६।१२४।१॥ तु० अथर्व० (पै० सं०) १६।४०।४॥

२. अनुपलब्धमूलम्।

३. अथर्व० (पै० सं०) २०।२६।८॥

४. अथर्व० (पै० सं०) १६।१५५।४॥ तत्र 'परिषूतम्' 'यज्ञाः' इत्यनयोः स्थाने यथासंख्यं 'पुरुहूतम्' 'यज्ञः' इति पाठौ भेदेनोपलभ्येते। अथर्व० (शौ० सं०) ११।५।२३ पूर्वार्द्धंचमात्रम्।

५. अथर्व० (पै० सं०) १६।१५५।५॥ अथर्व० (शौ० सं०) ११।५।२४ (उत्तरोऽर्द्धर्चः)

६. गास्ट्रसंशोधितः पाठः। कोशेषु 'मूले' इति पाठः।

वर्तते । अथ खलु विपाणमध्ये वसिष्ठशिला नाम प्रथम आश्रमः । द्वितीयः कृष्णशिलाः । तस्मिन् वसिष्ठः समतपत् । विश्वामित्रजमदग्नी जामदग्ने तपतः । गौतमभरद्वाजौ सिंहौ प्रभवे तपतः । गुंगुगुंगुवासे तपति । ऋषिऋंषिद्रोणे ऽभ्यतपत् । अगस्त्यो ऽगस्त्यतीर्थे तपति । दिव्यत्रिर्हं तपति । स्वयंभूः कश्यपः कश्यपतुङ्गे ऽभ्यतपत् । उलवृकक्षुतरक्षुः श्वा वराहचिल्वटिबभ्रुकाः[1] सर्पदंष्ट्रन संहन्तुकण्वानाः ।[2] कश्यपतुङ्गदर्शनात् सरणावाटात् सिद्धिर्भवति । ब्राह्मच वर्षसहस्रमृषिवने ब्रह्मचार्येकपादेनातिष्ठत्[3] द्वितीयं वर्षसहस्रं मूर्धन्येवामृतस्य धारामाधारयत् । ब्राह्माण्यष्टाचत्वारिंशद्व् वर्षसहस्राणि सलिलस्य पृष्ठे शिवो ऽभ्यतपत् । तस्मात् तप्तात् तपसो भूय एवाभ्यतपत् । तदप्येता ऋचो ऽभिवदन्ति—प्राणापानौ जनयन्[4] इति ब्राह्मणम् ॥८॥

एकपाद् द्विपद[5] इति । वायुरेकपात् । तस्याकाशं पादः । चन्द्रमा द्विपात् । तस्य पूर्वपक्षापरपक्षौ पादौ । आदित्यस्त्रिपात् । तस्येमे लोकाः पादाः । अग्निः षट्पादः । तस्य पृथिव्यन्तरिक्षं द्यौराप ओषधिवनस्पतय इमानि भूतानि पादाः । तेषां सर्वेषां वेदा गतिरात्मा प्रतिष्ठिताश्चतस्रो ब्रह्मणः शाखाः । अथो आहुः—षडिति, मूर्तिरांकाशश्चेति । ऋचा मूर्तिः । याजुषी गतिः । साममयं तेजः । भृग्वङ्गिरसा माया । एतद् ब्रह्मैव यज्ञश्चतुष्पाद् द्विः संस्थित इति । तस्य भृग्वङ्गिरसः संस्थे । अथो आहुः—एकसंस्थित इति । यद्धोतर्चा मण्डलैः करोति, पृथिवीं तेनाप्याययति । एतस्यां ह्यग्निश्चरति । तदप्येतदृचोक्तम्—अग्निवासाः पृथिव्यसितज्ञूः[6] इति । यदध्वर्युर्यजुषा करोति, अन्तरिक्षं तेनाप्याययति । तस्मिन् वायुर्न निविशते कतमच्चनाहरिति । तदप्येतदृचोक्तम्—

१. 'बभ्रुकाः' इति पुणे-कोश रा० पाठः । २. अस्फुटोऽयं सन्दर्भः ।
३. पुणे-कोश रा० सम्मतः पाठः । 'आतिष्ठति' इति गास्ट्रपाठः ।
४. द्र०-पृ० २७ टि० ५।
५. अथर्व० (पै० सं०) १८।२३।४ ॥ अथर्व० (शौ० सं०) १३।२।२७॥
६. अथर्व० (पै० सं०) १७।३।२॥ अथर्व० (शौ० सं०) १२।१।२१॥

अन्तरिक्षे पथिभिर्ह्रीयमाणो न नि विशते कतमच्चनाहः ।
अपां योनिः प्रथमजा ऋतस्य क्व स्विज्जातः कुत आ बभूव ॥[1] इति ।

यदुद्गाता साम्ना करोति, दिवं तेनाप्याययति । तत्र ह्यादित्यः शुक्रश्चरति । तदप्येतदृचोक्तम्—उच्चा पतन्तमरुणं सुपर्णम्[2] इति । यद् ब्रह्मचर्चां काण्डैः करोति, अपस्तेनाप्याययति । चन्द्रमा ह्यप्सु चरति । तदप्येतदृचोक्तम्—चन्द्रमा अप्स्वन्तः[3] इति । तासामोषधिवनस्पतयः काण्डानि । ततो मूलकाण्डपर्णपुष्पफलप्ररोहरसगन्धैर्यज्ञो वर्तते । अद्भिः कर्माणि[4] प्रवर्तन्ते । अद्भिः सोमो ऽभिषूयते । तद् यद् ब्रह्माणं कर्मणि[5] कर्मण्यामन्त्रयति, अपस्तेनानुजानाति । एषो ह्यस्य भागः । तद् यथा भोक्ष्यमाणो ऽप एव प्रथममाचामयेदप उपरिष्टाद्, एवं यज्ञो ऽद्भिरेव प्रवर्तते, अप्सु संस्थाप्यते । तस्माद् ब्रह्मा[6] पुरस्ताद्धोमसंस्थितहोमैर्यज्ञो[6] वर्तते । अन्तरा हि पुरस्ताद्धोमसंस्थितहोमैर्यज्ञं परिगृह्णाति । अन्तरा हि भृग्वङ्गिरसो वेदानादुह्य भृग्वङ्गिरसः सोमपानं मन्यन्ते । सोमात्मको ह्ययं वेद ।[7] तदप्येतदृचोक्तम्—सोमं मन्यते पपिवान्[8] इति । तद् यथेमां पृथिवीमुदीर्णां ज्योतिषा धूमायमानां वर्षं शमयति, एवं ब्रह्मा भृग्वङ्गिरोभिर्व्याहृतिभिर्यज्ञस्य विरिष्टं शमयति । अग्निरादित्या यम इत्येते[9] ऽङ्गिरसः । एत इदं सर्वं समाप्नुवन्ति । वायुरापश्चन्द्रमा इत्येते भृगवः । एत इदं सर्वं समाप्याययन्ति । एकमेव संस्थं भवतीति ब्राह्मणम् ॥९॥

---

१. अथर्व० (पै० सं०) १।१०७।४ । तत्र 'ह्रीयमाणः' 'विशते' इत्यनयोः स्थाने यथासंख्यम् 'ईयमानः', 'मिषते' इति पाठौ भेदेनोपलभ्येते । ऋ० १०।१६८।३ इत्यत्र च 'योनिः' 'ऋतस्य' इत्यनयोः स्थाने यथासंख्यं 'सखा' 'ऋतावा' इति पाठौ श्रूयेते ।

२. अथर्व० (पै० सं०) १८।२४।३॥ अथर्व० (शौ० सं०) १३।२।३६॥

३. अथर्व० (पै० सं०) १८।३२।१४॥ अथर्व० (शौ० सं०) १८।४।८९ ॥ ऋ० १।१०५।१॥

४. 'कर्णाणि' इति गा० पाठः । ५. 'कर्णणि' इति गा० पाठः ।

६. अनयोरन्यतरत् पदमतिरिच्यते । 'यज्ञे' इति वा पाठः स्यात् ?

७. संशोधितः पाठः । कोशेषु विसर्गरहितः पाठ उपलभ्यते ।

८. अथर्व० (पै० सं०) १८।१।३॥ अथर्व० (शौ० सं०) १४।१।३॥

९. 'आदित्याय शमयत्येते' इति गास्ट्रपाठः । 'आदित्याय म इत्येते' इति रा० पाठः ।

विचारी ह वै काबन्धिः कबन्धस्याथर्वणस्य पुत्रो मेधावी मीमांसको ऽनूचान आस। स ह स्वेनातिमानेन मानुषं वित्तं नेयाय। तं मातोवाच—त एवैतदन्नमवोचन्, त इम एषु कुरुपञ्चालेष्वङ्गमगधेषु काशिकौशलेषु शाल्वमत्स्येषु सवशोशीनरेषूदीच्येष्वन्नमदन्तीति। अथ वयं तवैवातिमानेनानाद्याः[1] स्मः। वत्स वाहनमन्विच्छेति। स मान्धातुर्यौवनाश्वस्य सार्वभौमस्य राज्ञः सोमं प्रसूतमाजगाम। स सदो ऽनुप्रविश्य-र्त्विजश्च यजमानं चामन्त्रयामास—तद् याः प्राच्यो नद्यो वहन्ति याश्च दक्षिणाच्यो याश्च प्रतीच्यो याश्चोदीच्यस्ताः सर्वाः पृथङ्नामधेया इत्याचक्षते, तासां समुद्रमभिपद्यमानानां छिद्यते नामधेयं समुद्र इत्याचक्षते। एवमिमे सर्वे वेदा निर्मिताः सकल्पाः सरहस्याः स ब्राह्मणाः सोपनिषत्काः सेतिहासाः सान्वाख्यानाः सपुराणाः सस्वराः ससंस्काराः सनिरुक्ताः सानुशासनाः सानुमार्जनाः सवाकोवाक्याः। तेषां यज्ञमभिपद्यमानानां छिद्यते नामधेयं यज्ञ इत्येवाचक्षते ॥१०॥[2]

भूमेर्ह वा एतद् विच्छिन्नं देवयजनं यदप्राक्प्रवणं यदनुदक्प्रवणं यत् कृत्रिमं यत् समविषमम्[3]। इदं ह त्वेव देवयजनं यत् समं समूलमविदग्धं प्रतिष्ठितं प्रागुदक्प्रवणं समं समास्तीर्णमिव भवति, यत्र ब्राह्मणस्य ब्राह्मणतां विद्याद् ब्रह्मा ब्रह्मत्वं करोतीति। वोचे' छन्दस्तद् न विन्दामो येनोत्तरमेमहीति। तान् ह पप्रच्छ—किं विद्वान् होता हौत्रं करोति, किं विद्वानध्वर्युराध्वर्यवं करोति, किं विद्वानुद्गातौद्गात्रं करोति, किं विद्वान् ब्रह्मा ब्रह्मत्वं करोतीति? वोचे' छन्दस्तद् न विन्दामो येनोत्तरमेमहीति। ते ब्रूमः—वागेव होता हौत्रं करोति। वाचो हि स्तोमाश्च वषट्काराश्चाभिसंपद्यन्ते। ते ब्रूमः—वागेव होता, वाग् ब्रह्म, वाग् देव इति। प्राणापानाभ्यामेवाध्वर्युराध्वर्यवं करोति।

१. गास्ट्रसंशोधितः पाठः। 'नेनाद्यास्मो'—नेनाद्वास्मो' इति कोशेषु पाठौ।

२. गो० ब्रा० १।२।१०—१४ तु० शत०ब्रा० ३।१।१॥

३. सन्दिग्धम्।

प्राणप्रणीतानि ह भूतानि, प्राणप्रणीताः प्रणीताः। ते ब्रूमः—प्राणापानावेवाध्वर्युः, प्राणापानौ ब्रह्म, प्राणापानौ देव इति। चक्षुषैवोद्गातौद्गात्रं करोति। चक्षुषा हीमानि भूतानि पश्यन्ति। अथो चक्षुरेवोद्गाता, चक्षुर्ब्रह्म, चक्षर्देव इति। मनसैव ब्रह्मा ब्रह्मत्वं करोति। मनसा हि तिर्यक् च दिश ऊर्ध्वं च, यच्च किं च मनसैव करोति तद् ब्रह्म। ते ब्रूमः—मन एव ब्रह्मा, मनो ब्रह्म, मनो देव इति ॥११॥

तद् यथा ह वा इदं यजमानश्च याजयितारश्च दिवं ब्रूयुः पृथिवीति, पृथिवीं वा[1] द्यौरिति ब्रूयुः, तदन्यो नानुजानात्येताम्, एवं नानुजानाति यदेतद् ब्रूयात्। अथ नु कथमिति? होतेत्येव होतारं ब्रूयाद्, वागिति वाचं, ब्रह्मेति ब्रह्म, देव इति देवम्। अध्वर्युरित्येवाध्वर्युं ब्रूयात्, प्राणापानाविति प्राणापानौ, ब्रह्मेति ब्रह्म, देव इति देवम्। उद्गातेत्येवोद्गातारं ब्रूयात्, चक्षुरिति चक्षुः, ब्रह्मेति ब्रह्म, देव इति देवम्। ब्रह्मेत्येव ब्रह्माणं ब्रूयाद्, मन इति मनः, ब्रह्मेति ब्रह्म, देव इति देवम् ॥१२॥

नानाप्रवचनानि ह वा एतानि भूतानि भवन्ति। ये चैवासोमपं याजयन्ति ये च सुरापं ये च ब्राह्मणं विच्छिन्नं सोमयाजिनं तं प्रातः समित्पाणय उपोदेयुः—उपायामो भवन्तमिति। किमर्थमिति? यानेव नो भवांस्त्वान् ह्यः प्रश्नानपृच्छत् तान्[2] एव नो भवान् व्याचक्षीतेति[3]। तथेति। तेभ्य एतान् प्रश्नान् व्याचचष्टे। तद् येन ह वा इदं विद्यमानं चाविद्यमानं चाभिनिंदधाति तद् ब्रह्म। तद् यो वेद स ब्राह्मणो ऽधीयानो ऽधीत्याचक्षत[4] इति ब्राह्मणम् ॥१३॥

---

१. गास्ट्रसंशोधितः पाठः। कोशेषु 'वाग्' इति पाठः।

२. गास्ट्रसंशोधितः पाठः। कोशेषु 'यान्' इत्येव।

३ गास्ट्रसंशोधित पाठः। कोशेषु '—येति' '-यति' इत्येव।

४. अत्र 'ऽधीतीत्याचक्षत' इति पाठः स्यात्?

अथातो देवयजनानि। आत्मा देवयजनम्। श्रद्धा देवयजनम्। ऋत्विजो देवयजनम्। भौमं देवयजनम्। तद्वा एतदात्मा देवयजनं यदुपव्यायच्छमानो वानुपव्यायच्छमानो वा शरीरमधिवसति। एष यज्ञः, एष यजते, एतं यजन्ते, एतद् देवयजनम्। अथैतच्छ्रद्धा देवयजनम्। यदैव कदाचिदादध्यात्, श्रद्धा त्वेवैनं नातीयात्, तद् देवयजनम्। अथैतदृत्विजो देवयजनम्। यत्र क्वचिद् ब्राह्मणो विद्यावान्[1] मन्त्रेण करोति तद्ध देवयजनम्। अथैतद्भौमं देवयजनम्। यत्रापस्तिष्ठन्ति यत्र स्यन्दन्ति, प्र तद् वहन्त्युद्वहन्ति, तद् देवयजनम्। यत् समं समूलमविदग्धं प्रतिष्ठितं प्रागुदक्प्रवणं समं समास्तीर्णमिव भवति, यस्य श्वभ्र ऊर्मो वृक्षः पर्वतो नदी पन्था वा पुरस्तात् स्यात्। न देवयजनमात्रं पुरस्तात् पर्यवशिष्येत्। नोत्तरतो ऽग्नेः पर्युपसीदेरन्निति ब्राह्मणम्॥१४॥

अदितिर्वै प्रजाकामौदनमचत्। तत्र उच्छिष्टमाश्नात्[2]। सा गर्भमधत्त। तत आदित्या अजायन्त। य एष ओदनः पच्यत, आरम्भणमेवैतत् क्रियत आक्रमणमेव। प्रादेशमात्रीः समिधो भवन्ति। एतावान् ह्यात्मा प्रजापतिना संमितः। अग्नेर्वै या यज्ञिया तनूरश्वत्थे तया समगच्छत। एषास्य घृत्या[3] तनूर्यद् घृतम्। यद् घृतेन समिधो ऽनक्ति, ताभ्यामेवैनं तत् तनूभ्यां समर्धयति। यद् निर्मार्गस्यादधाति, अवगूर्त्यै[4] वै वीर्यं क्रियते। यद् निर्मार्गस्यादधात्यवगूर्त्यै एव। संवत्सरो वै प्रजननम्। अग्निः प्रजननम्। एतत् प्रजननम्। यत् संवत्सर ऋचाग्नौ समिधमादधाति, प्रजननादेवैनं तत् प्रजनयिता प्रजनयति। अभक्तुर्' वै पुरुषः। न हि तद् वेद यमृतुम्' अभिजायते। यद् नक्षत्रं तदाप्नोति। य एष ओदनः पच्यते, योनिरेवैषा क्रियते। यत् समिध आधीयन्ते, रेतस्तद् धीयते'। संवत्सरे' वै रेतो हितं प्रजायते। यः' संवत्सरे पर्येते ऽग्निमाधत्ते, प्रजा-

---

१. रा० स्वीकृतः पाठः। कोशेषु 'विद्याविद्' इति पाठः इति गास्टः।

२. गास्ट्रसंशोधितः पाठः। कोशेषु 'अश्नात्' इति पाठः।

३. गास्ट्रसंशोधितः पाठ.। पाठशोधोऽत्र काठकसंहिताम् (७।१५) अनुसृत्य विहितः।

४. गास्ट्रसंशोधितः पाठः। 'अवकूत्या' इति कोशेषु।

तमेवैनमाधत्ते । द्वादशसु रात्रीषु पुरा संवत्सरस्याधेयाः । ता हि संवत्सरस्य प्रतिमा । अथो तिसृष्वथो द्वयोरथो पूर्वेद्युराधेयाः । त एवाग्निमादधानेन । आदित्या वा इत उत्तमा अमुं लोकमायन् । पथिरक्षयस्त इयक्षमाणं प्रतिनुदन्ते । उच्छेषणभाजा वा आदित्याः । [यदुच्छिष्टं] । यदुच्छिष्टेन समिधो ऽनक्ति, तेभ्य एव प्रावोचत् । तेभ्य एव प्रोच्य स्वर्गं लोकं याति ॥१५॥[1]

प्रजापतिरथर्वा देवः स तपस्तप्त्वैतं चातुःप्राश्यं ब्रह्मौदनं निरमिमीत[3] चतुर्लोकं चतुर्देवं चतुर्वेदं चतुर्हौत्रमिति । चत्वारो वा इमे लोकाः पृथिव्यन्तरिक्षं द्यौराप इति । चत्वारो वा इमे देवा अग्निर्वायुरादित्यश्चन्द्रमाः । चत्वारो वा इमे वेदा ऋग्वेदो यजुर्वेदः सामवेदो ब्रह्मवेद इति । चतस्रो वा इमा होत्रा हौत्रमाध्वर्यवमौद्गात्रं ब्रह्मत्वमिति । तदप्येतदृचोक्तम्—

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश ॥[4] इति ।

चत्वारि शृङ्गेति वेदा वा एत उक्ताः । त्रयो अस्य पादा इति सवनान्येव । द्वे शीर्षे इति ब्रह्मौदनप्रवर्ग्यावेव । सप्त हस्तासो अस्येति छन्दांस्येव । त्रिधा बद्ध इति मन्त्रः कल्पो ब्राह्मणम् । वृषभो रोरवीत्येष ह वै वृषभः, एष तद् रोरवीति यद् यज्ञेषु शस्त्राणि शंसत्यृग्भिर्यजुर्भिः सामभिर्ब्रह्मभिरिति । महो देवो मर्त्याँ आविवेशेत्येष ह वै महान् देवो यद् यज्ञः । एष मर्त्याँ आविवेश । यो विद्यात् सप्त प्रवत[5] इति प्राणान्नाह । सप्त विद्यात् परावत इत्यपानानाह । शिरो यज्ञस्य यो विद्याद् इति, एतद्

१. गास्ट्रसंशोधितः पाठः । पाठशोधोऽत्र काठकसंहिताम् (७।१५) मनुसृत्य विहितः ।
२. तु०—काठ० सं० ७।१५।। कपि० सं० ६।५।।
३. गास्ट्रसंशोधितः पाठः । कोशेषु 'निरमिमत' इति पाठः ।
४. अथर्वं० (पै० सं०) ८।१३।३।। ऋ० ४।५८।३।।
५. अथर्वं (पै० सं०) १६।१०७।२।। अथर्वं० (शौ० सं०) १०।१०।२।।

वै यज्ञस्य शिरो यद् मन्त्रवान् ब्रह्मौदनः। यो ह वा एतममन्त्रवन्तं ब्रह्मौदनमुपेयाद्, अपशिरसा ह वा अस्य यज्ञमुपेतो भवति[1]। तस्माद् मन्त्रवन्तमेव ब्रह्मौदनमुपेयाद् नामन्त्रवन्तमिति ब्राह्मणम् ।।१६।।

किमुपज्ञ[2] आत्रेयो भवतीति ? आदित्यं हि तमो जग्राह। तदत्रिरपनुनोद। तदत्रिरन्वपश्यत्। तदप्येतदृचोक्तम्—

सुताद्[3] यमत्रिर्दिवमुन्निनाय[4]।
दिवि त्वात्रिरधारयत् सूर्या मासाय कर्तवे[5] ।। इति।

तं होवाच—वरं वृणीष्वेति। स होवाच—दक्षिणीया मे प्रजा स्यादिति। तस्मादात्रेयाय प्रथमदक्षिणा[6] यज्ञे दीयन्त इति ब्राह्मणम् ।।१७।।[7]

प्रजापतिर्वेदानुवाच—अग्नीनादधीयेति। तान् वागभ्युवाच—अश्वो वै संभाराणामिति। तं घोरात् क्रूरात् सलिलात् सरस उदानिन्युः। तान् वागभ्युवाच—अश्वः शम्येतेति। तथेति। तमृग्वेद एत्योवाच—अहमश्वं शमेयमिति। तस्मा अभिसृप्ताय[8] महद् भयं ससृजे। स एतां प्राचीं दिशं भेजे। स होवाच—अशान्तो न्वयमश्व इति। तं यजुर्वेद एत्योवाच—अहमश्वं शमेयमिति। तस्मा अभिसृप्ताय[8] महद् भयं ससृजे। स एतां प्रतीचीं दिशं भेजे। स होवाच—अशान्तो न्वयमश्व इति। तं सामवेद एत्योवाच—अहमश्वं शमेयमिति। केन नु त्वं शमयिष्यसीति ? रथंतरं

---

१. 'अपशिरसा ··· भवति' इति यथाकोशं पाठः, स चासङ्गतः। 'अपशिरा ह वा अस्य यज्ञ उपेतो भवति' इति पाठोऽत्र समीचीनः स्यादिति गास्ट्रः।

२. गास्ट्रसंशोधितः पाठः। 'किमुपयज्ञ' इति पाठः कोशेषु।

३. 'श्रुताद्' इति पै० सं० पाठः। 'स्तुताद्' इति शौ० सं० पाठः।

४. अथर्व० (पै० सं०) १८।२०।८।। अथर्व० (शौ० सं०) १३।२।४।।

५. अथर्व० (पै० सं०) १८।२१।६।। अथर्व० (शौ० सं०) १३।२।१२ ('सूर्या' स्थाने 'सूर्यं' इति पाठः)

६. 'प्रथमं दक्षिणा' इति गास्ट्रकल्पितः पाठः। ७. तु०—शत० ब्रा० ४।३।४।२१।।

८. गास्ट्रसंशोधितः पाठः। 'अविसृप्ताय' इति कोशेषु पाठः।

नाम मे सामाघोरं चाक्रूरं च, तेनाश्व अभिष्टूयेतेति[1] । तस्मा अप्यभिसृप्ताय[2] तदेव महद् भयं ससृजे । स एतामुदीचीं दिशं भेजे । स होवाच—अशान्तो न्वयमश्व इति । तान् वागभ्युवाच—शंयुमाथर्वणं गच्छतेति[3] । ते शंयुमाथर्वणमासीनं प्राप्योचुः—नमस्ते अस्तु भगवन्, अश्वः शम्येतेति । तथेति । स खलु कबन्धस्याथर्वणस्य पुत्रमामन्त्रयामास—विचारिन्निति । भगो इति हास्मै प्रतिश्रुतं प्रतिशुश्राव । अश्वः शम्येतेति । तथेति । स खलु शान्त्युदकं चकार, आथर्वणीभिश्चाङ्गिरसीभिश्च चातनैर्मातृनामभिर्वास्तोष्पत्यैरिति शमयति । तस्य ह स्नातस्याश्वस्याभ्युक्षितस्य सर्वेभ्यो रोमसमरेभ्यो ऽङ्गारा आशीर्यन्त । सोऽश्वस्तुष्टो नमस्कारं चकार । नमः शंयुमाथर्वणाय[4], यो मा यज्ञियमचीक्लृपदिति । भविष्यन्ति ह वा अतो ऽन्ये ब्राह्मणा लघुसंभारतमाः । त आदित्यस्य पद आधास्यन्त्यनडुहो वत्सस्याजस्य श्रवणस्य[4] ब्रह्मचारिणो वा । एतद् वा आदित्यस्य पदं यद् भूमिः । तस्यैव पद आहितं भविष्यतीति । सो ऽग्नौ प्रणीयमाने ऽश्वे ऽन्वारब्धं ब्रह्मा यजमानं वाचयति—यदक्रन्दः प्रथमं जायमान[5] इति पञ्च[6] । तं ब्राह्मणा उपवहन्ति, तं ब्रह्मोपाकुरुते । एष ह वै विद्वान् सर्वविद् ब्रह्मा यद् भृग्वङ्गिरोविदिति ब्राह्मणम् ।।१८।।[7]

देवाश्च ह वा असुराश्चास्पर्धन्त । ते देवा इन्द्रमब्रुवन्—इमं नस्तावद् यज्ञं गोपाय, यावदसुरैः संयतामहा इति । स वै नस्तेन रूपेण गोपाय, येन नो रूपेण भूयिष्ठं छादयसि, येन शक्ष्यसि गोप्तुमिति । स ऋग्वेदो भूत्वा पुरस्तात् परीत्योपातिष्ठत् । तं देवा अब्रुवन्—

---

१. गास्ट्रसंशोधितः पाठः । 'तेनाश्वमभिष्टूयति' 'तेनाश्वमभिष्टूयेति' इत्यादयः पाठाः कोशेषु ।

२. गास्ट्रसंशोधितः पाठः । 'अप्यविसृप्ताय' 'अथ विसृप्ताय' इति कोशेषु ।

३. गास्ट्रसंशोधितः पाठः । 'गच्छथेति' इति पाठः कोशेषु ।

४. सन्दिग्धः पाठः ।

५. ऋ० १।१६३।१।।

६. द्र०—वैतान० २।२।१ (=६।१)।। ७. तु०—शत० ब्रा० १३।१।४।१६।।

अन्यत् तद् रूपं कुरुष्व, नैतेन नो रूपेण भूयिष्ठं छादयसि, नैतेन शक्ष्यसि गोप्तुमिति । स यजुर्वेदो भूत्वा पश्चात् परीत्योपातिष्ठत् । तं देवा अब्रुवन्—अन्यत् तद् रूपं कुरुष्व, नैतेन नो रूपेण भूयिष्ठं छादयसि, नैतेन शक्ष्यसि गोप्तुमिति । स सामवेदो भूत्वोत्तरतः परीत्योपातिष्ठत् । तं देवा अब्रुवन्—अन्यदेव तद् रूपं कुरुष्व, नैतेन नो रूपेण भूयिष्ठं छादयसि, नैतेन शक्ष्यसि गोप्तुमिति । स इन्द्र उष्णीषी ब्रह्मवेदो भूत्वा दक्षिणतः परीत्योपातिष्ठत् । तं देवा अब्रुवन्—एतत् तद् रूपं कुरुष्व, एतेन नो रूपेण भूयिष्ठं छादयसि, एतेन शक्ष्यसि गोप्तुमिति । तद् यदिन्द्र उष्णीषी ब्रह्मवेदो भूत्वा दक्षिणतः परीत्योपातिष्ठत्, तद् ब्रह्माभवत् । तद् ब्रह्मणो ब्रह्मत्वम् । तद् वा एतदथर्वणो रूपं यदुष्णीषी ब्रह्मा । तं दक्षिणतो विश्वे देवा उपासीदन् । तं यद् दक्षिणतो विश्वे देवा उपासीदन्, तत् सदस्यो ऽभवत् । तत् सदस्यस्य सदस्यत्वम् । बलेहं वा एतद् बलमुपजायते यत् सदस्यः । आमयतो वै व्रजस्य बहुलतरं तं विदन्ति[1] । घोरा वा एषा दिग् दक्षिणा, शान्ता इतराः । तद् यानि स्तुतानि ब्रह्मानुमन्त्रयते, मनसैव तानि सदस्यो जनदित्येतां व्याहृतिं जपति[2] । आत्मानं जनयति नजित्यात्मानमपित्वे[3] दधाति । तं देवा अब्रुवन्—वरं वृणीष्वेति । वृणा इति । स वरमवृणीत—अस्यामेव मां होत्रायामिन्द्रभूतं पुनन्त स्तुवन्तः शंसन्तस्तिष्ठेयुः[4] इति । तं तस्यामेव होत्रायामिन्द्रभूतं पुनन्त स्तुवन्तः शंसन्तो ऽतिष्ठन् । तं यत् तस्यामेव होत्रायामिन्द्रभूतं पुनन्त स्तुवन्तः शंसन्तो ऽतिष्ठन्, तद् ब्राह्मणाच्छंस्यभवत् । तद् ब्राह्मणाच्छंसिनो ब्राह्मणाच्छंसित्वम् । सैषैन्द्री होत्रा यद् ब्राह्मणाच्छंसीया । द्वितीयं वरं वृणीष्वेति । वृणा इति । स वरमवृणीत—

१. अस्फुटार्थकं वाक्यम् ।

२. गास्ट्रसंशोधितः पाठः । 'जपं चेति' 'जपं वेति' इति कोशेषु पाठः । (द्र० वैतान० ३।८।१७=१८।१७) ।

३. सन्दिग्धः पाठः ।

४. 'तिस्थेयुः' इति गास्ट्रपाठः ।

अस्यामेव मां होत्रायां वायुभूतं पुनन्त स्तुवन्तः शंसन्तस्तिष्ठेयुः[1] इति। तं तस्यामेव होत्रायां वायुभूतं पुनन्त स्तुवन्तः शंसन्तो ऽतिष्ठन्। तं यत् तस्यामेव होत्रायां वायुभूतं पुनन्त स्तुवन्तः शंसन्तो ऽतिष्ठन्, तत् पोताभवत्। तत् पोतुः पोतृत्वम्। सैषा वायव्या होत्रा यत् पोत्रीया। तृतीयं वरं वृणीष्वेति। वृणा इति। स वरमवृणीत—अस्यामेव मां होत्रायामग्निभूतमिन्धानाः पुनन्त स्तुवन्तः शंसन्तस्तिष्ठेयुरिति। तं तस्यामेव होत्रायामग्निभूतमिन्धानाः पुनन्त स्तुवन्तः शंसन्तो ऽतिष्ठन्[2]। तं यत् तस्यामेव होत्रायामग्निभूतमिन्धानाः पुनन्त स्तुवन्तः शंसन्तो ऽतिष्ठन्, तदाग्नीध्रो ऽभवत्। तदाग्नीध्रस्याग्नीध्रत्वम्। सैषाग्नेयी होत्रा यदाग्नीध्रीयेति ब्राह्मणम् ॥१९॥

ब्राह्मणो ह वा इममग्निं वैश्वानरं बभार। सो ऽयमग्निर्वैश्वानरो ब्राह्मणेन ध्रियमाण इमाँल्लोकाञ् जनयते। अथायमीक्षते—अग्निर्जातवेदा ब्राह्मणाद्वितीयो ह वा अबमिदमग्निर्वैश्वानरो ज्वलति, हन्ताहं यद् मयि तेज इन्द्रियं वीर्यं तद् दर्शयाम्युत वै मा बिभृयादिति। स आत्मानमाप्याय्यैतं[3] पयो ऽधोक्। तमिमं ब्राह्मणं दर्शयित्वात्मन्यजुहोत्। स द्वितीयमात्मानमाप्याय्यैतं[3] घृतमधोक्। तमिमं ब्राह्मणं दर्शयित्वात्मन्यजुहोत्। स तृतीयमात्मानमाप्याय्यैतदिदं[3] विश्वं विकृतमन्नाद्यमधोक्। तमिमं ब्राह्मणं दर्शयित्वात्मन्यजुहोत्। स चतुर्थमात्मानमाप्याय्यैतेन[3] ब्राह्मणस्य जायां विराजमपश्यत्। तामस्मै प्रायच्छत्। सात्मा अपित्वमभवत्। तत इममग्निं वैश्वानरं परास्युर्ब्राह्मणो[4] ऽग्निं जातवेदसमधत्त। सो ऽयमब्रवीत्—अग्ने जातवेदो ऽभिनिधेहि मेहीति। तस्य द्वैतं नामाधत्ताघोरं चाक्रूरं च। सो ऽश्वो ऽभवत्। तस्मादश्वो वहेन रथिनं

---

१. 'तिस्थेयुः' इति गास्ट्रपाठः।

२. 'अतिस्थन्' इति गास्ट्रपाठः।

३. गास्ट्रसंशोधितः पाठः। कोशेषु 'आप्याययेनं' 'आप्याययेतं' 'आप्यायेतं' इति पाठः।

४. 'परास्युर्' इति सन्दिग्धम्।

वहति[1] पृष्ठेन[2] सादिनम्। स देवानगच्छत्। स देवेभ्योऽन्वातिष्ठत्। तस्माद् देवा अबिभयुः। तं ब्रह्मणे प्रायच्छत्। तमेतयर्चाशमयत् ॥२०॥[3]

अग्निं त्वाहुर्वैश्वानरं सदनान् प्रदहन् न्वगाः।
स नो देवत्राधि ब्रूहि मा रिषामा वयं तव ॥[4] इति।

तमेताभिः पञ्चभिर्ऋग्भिरुपाकुरुते—यदक्रन्दः प्रथमं जायमान[5] इति सोऽशाम्यत्। तस्मादश्वः पशूनां जिघत्सुतमो[6] भवति। वैश्वानरो ह्येषः। तस्मादग्निपदमश्वं ब्रह्मणे ददाति। ब्रह्मणे हि प्रत्तम्। तस्य रसमपीडयत्। स रसोऽभवत्। रसो ह वा एषः। तं वा एतं रसं सन्तं रथ इत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः। स देवानागच्छत्। स देवेभ्योऽन्वातिष्ठत्। तस्माद् देवा अबिभयुः। तं ब्रह्मणे प्रायच्छत्। तमेतयर्चाज्याहुत्याभ्यजुहोत्—इन्द्रस्यौजो मरुतामनीकम्[7] इति। रथमभिहुत्य[8] तमेतयर्चातिष्ठत्—वनस्पते वीड्वङ्गो हि भूया[9] इति। तस्मादाग्न्याधेयिकं रथं ब्रह्मणे ददाति। ब्रह्मणे हि प्रत्तम्। तस्य तक्षाणस्तनू ज्येष्ठां दक्षिणां निरमिमत। तां पञ्चस्वपश्यदृचि यजुषि साम्नि शान्तेऽथ घोरे। तासां द्वे ब्रह्मणे प्रायच्छद् वाचं च ज्योतिश्च। वाग् वै धेनुर्ज्योतिर्हिरण्यम्। तस्मादाग्न्याधेयिकां चातुःप्राश्यां धेनुं ब्रह्मणे ददाति। ब्रह्मणे हि प्रत्ता। पशुषु शाम्यमानेषु चक्षुर्हापयन्ति। चक्षुरेव तदात्मनि धत्ते। यद् वै चक्षुस्तद्धिरण्यम्।

---

१. संशोधितः पाठः। 'वहेन रथं न भवति' इति गास्ट्रपाठः। 'वहेत रथं न भवति' इति रा० पाठः। 'वहेत रथिन भवति' इत्यपि कोशे।

२. 'पृस्थेन' इति गास्ट्र पाठः। ३. तु०—शत० ब्रा० १।४।१।१० इत्यादि।

४. अथर्व० (पै० सं०) १।९५।३॥

५. ऋ० १।१६३।१॥ अपि द्र०—वैतान० २।२।७,१ (=६।७,१)

६. गास्ट्रसंशोधितः पाठः। 'जिघत्सुरतमो' इति कोशेषु।

७. अथर्व० (शौ० सं०) ६।१२५।३॥ तु०—अथर्व० (पै० सं०) १५।११।७॥

८. गास्ट्रसंशोधितः पाठः। '—हुत्वा' इति रा० पाठः। '—हुत्या' इत्यन्यत्र कोशे।

९. अथर्व० (पै० सं०) १५।११।८॥ अथर्व० (शौ० सं०) ६।१२५।१॥

तस्मादाग्न्याधेयिकं हिरण्यं ब्रह्मणे ददाति । ब्रह्मणे हि प्रत्तम् । तस्यात्मन्नधत्त¹ । तेन प्राज्वलयत् । यद् नाधत्त तदाग्लाभवत् । तदाग्ला भूत्वा सा समुद्रं प्राविशत् । सा समुद्रमदहत् । तस्मात् समुद्रो दुर्गिरवपि² वैश्वानरेण हि दग्धः । सा पृथिवीमुदैत् । सा पृथिवीं व्यदहत् । सा देवानागच्छत् । सा देवानहेडत् । ते देवा ब्रह्माणमुपाधावन् । स नैवागायद्, नानृत्यत् । सैषाग्ला । एषा कारुविदा नाम । तं वा एतमाग्लाहतं सन्तमाग्लागृध इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः । य एष ब्राह्मणो गायनो नर्तनो वा भवति, तमाग्लागृध इत्याचक्षते । तस्माद् ब्राह्मणो नैव गायेद्, न नृत्येद्, माग्लागृधः स्यात् । तस्माद् ब्राह्मच³ पूर्वं हवि परं प्राजापत्यम् । प्राजापत्याद् ब्राह्मचमेवोत्तरमिति⁴ ब्राह्मणम् ॥२१॥

अथर्वाणश्च ह वा अङ्गिरसश्च भृगुचक्षुषी तद् ब्रह्माभिव्यपश्यन् । तदजानन्—वयं वा इदं सर्वं⁵ यद् भृग्वङ्गिरस इति । ते देवा ब्राह्मचं हविर्यत् सांतपने ऽग्नावजुहवुः, एतद् वै ब्राह्मचं हविर्यत् सांतपने ऽग्नौ हूयते । एष ह वै सांतपनो ऽग्निर्यद् ब्राह्मणः । तस्योर्जयोर्जां देवा अभजन्त सुमनस एव स्वधां पितरः श्रद्धया स्वर्गं लोकं ब्राह्मणाः । तेन सुन्वन्त्यृषयो ऽन्तत स्त्रियः केवल आत्मन्यवारुन्धत बाह्या उभयेन सुन्वन्ति । यद् वै यज्ञे ब्राह्मचं हविर्न निरुप्येतानृजवः प्राजापत्यहविषो मनुष्या जायेरन् । असौ याँल्लोकान्छृण्वति पिता ह्येष आहवनीयस्य गार्हपत्यस्य दक्षिणाग्नेर्यो ऽग्निहोत्रं जुहोतीति । देवाः प्रिये धामनि मदन्ति । तेषामेषो ऽग्निः सांतपनः श्रेष्ठो भवति । एतस्य वाचि तृप्ताया-

---

१. गा० सं० । 'तस्यात्मनि धत्त' 'तस्यात्मन्नं धत्त' इति कोशेषु पाठौ ।

२. सन्दिग्धम् ।

३. गास्ट्रसंशोधितः पाठः । 'ब्राह्मणमेवोत्तममिति' इति रा० पाठः ।

४. सन्दिग्धम् ।

५. रा० पाठः । '—यश्च' इति पाठः कोशेषु ।

मग्निस्तृप्यति । प्राणे तृप्ते वायुस्तृप्यति । चक्षुषि तृप्त आदित्यस्तृप्यति। मनसि तृप्ते चन्द्रमास्तृप्यति । श्रोत्रे तृप्ते दिशश्चान्तर्देशाश्च तृप्यन्ति । स्नेहेषु तृप्तेष्वापस्तृप्यन्ति । लोमेषु तृप्तेष्वोषधिवनस्पतयस्तृप्यन्ति । शरीरे तृप्ते पृथिवी तृप्यति । एवमेषो ऽग्निः सांतपनः श्रेष्ठस्तृप्तः सर्वांस्तृप्तांस्तर्पयतीति ब्राह्मणम् ॥२२॥

**सांतपना इदं हविः**[1] इति । एष ह वै सांतपनो ऽग्निर्यद् ब्राह्मणः । यस्य गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणनिष्क्रमणान्नप्राशन-गोदानचूडाकरणोपनयनाप्लवनाग्निहोत्रव्रतचर्यादीनि कृतानि भवन्ति स सांतपनः । अथ यो ऽयमनग्निकः स कुम्भे लोष्टः । तद् यथा कुम्भे लोष्टः प्रक्षिप्तो नैव शौचार्थाय कल्पते नैत्र शस्यं निर्वर्तयति, एवमेवायं ब्राह्मणो ऽनग्निकः । तस्य ब्राह्मणस्यानग्निकस्य नैव दैवं दद्याद् न पित्र्यं न चास्य स्वाध्यायाशिषो न यज्ञाशिषः स्वर्गंगमा भवन्ति । तदप्येतदृचोक्तम्—

**अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।**
**अस्य यज्ञस्य सुक्रतुम् ॥**[2] इति ब्राह्मणम् ॥ २३ ॥

अथ ह प्रजापतिः सोमेन यक्ष्यमाणो वेदानुवाच—कं वो होतारं वृणीय[4] कमध्वर्युं कमुद्गातारं कं ब्रह्माणमिति । त ऊचुः—ऋग्विदमेव होतारं वृणीष्व यजुर्विदमध्वर्युं सामविदमुद्गातारमथर्वाङ्गिरोविदं ब्रह्माणम् । तथा हास्य यज्ञश्चतुष्पु लोकेषु चतुर्षु देवेषु चतुर्षु वेदेषु चतसृषु होत्रासु चतुष्पाद् यज्ञः प्रतितिष्ठति[5] । प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद । तस्मादृग्विदमेव होतारं वृणीष्व, स हि हौत्रं वेद । अग्निर्वै होता । पृथिवी वा ऋचामायतनम्, अग्निर्देवता, गायत्रं छन्दो, भूरिति

१. यथाकोशं पाठः ।
२. अथर्व० (शौ० सं०) ७।७७।१॥
३. अथर्व० (शौ० सं०) २०।१०१।१॥
४. गास्ट्रसंशोधितः पाठः । कोशेषु 'वृणीयां' इति पाठः ।
५. गास्ट्रसंशोधितः पाठः । कोशेषु 'प्रतिष्ठति' इति पाठः ।

शुक्रम् । तस्मात् तमेव होतारं वृणीष्वेत्येतस्य लोकस्य जितये, एतस्य लोकस्य विजितये, एतस्य लोकस्य संजितये, एतस्य लोकस्यावरुद्धये, एतस्य लोकस्य विवृद्धये, एतस्य लोकस्य समृद्धये, एतस्य लोकस्योदात्तये[1], एतस्य लोकस्य व्याप्तये, एतस्य लोकस्य पर्याप्तये, एतस्य लोकस्य समाप्तये । अथ चेद् नैवंविदं होतारं वृणुते, पुरस्तादेवैषां यज्ञो रिच्यते । यजुर्विदमेवाध्वर्युं वृणीष्व, स ह्याध्वर्यवं वेद । वायुर्वा अध्वर्युः, अन्तरिक्षं वै यजुषामायतनं, वायुर्देवता, त्रैष्टुप् छन्दः, भुव इति शुक्रम् । तस्मात् तमेवाध्वर्युं वृणीष्वेत्येतस्य लोकस्येत्येव । अथ चेद् नैवंविदमध्वर्युं वृणुते, पश्चादेवैषां यज्ञो रिच्यते । सामविदमेवोद्गातारं वृणीष्व, स ह्यौद्गात्रं वेद । आदित्यो वा उद्गाता । द्यौर्वै साम्नामायतनम्, आदित्यो देवता, जागतं छन्दः, स्वरिति शुक्रम् । तस्मात् तमेवोद्गातारं वृणीष्वेत्येतस्य लोकस्येत्येव । अथ चेद् नैवंविदमुद्गातारं वृणुते, उत्तरत एवैषां यज्ञो रिच्यते । अथर्वाङ्गिरोविदमेव ब्रह्माणं वृणीष्व, स हि ब्रह्मत्वं वेद । चन्द्रमा वै ब्रह्मा । आपो वै भृग्वङ्गिरसामायतनं, चन्द्रमा देवता, वैद्युत-श्चोष्णिक्ककुभे छन्दसी, ओमित्यथर्वणां शुक्रं जनदित्यङ्गिरसाम् । तस्मात् तमेव ब्रह्माणं वृणीष्वेत्येतस्य लोकस्य जितये, एतस्य लोकस्य विजितये, एतस्य लोकस्य संजितये, एतस्य लोकस्यावरुद्धये, एतस्य लोकस्य विवृद्धये, एतस्य लोकस्य समृद्धये, एतस्य लोकस्योदात्तये[1], एतस्य लोकस्य व्याप्तये, एतस्य लोकस्य पर्याप्तये, एतस्य लोकस्य समाप्तये । अथ चेद् नैवंविदं ब्रह्माणं वृणुते, दक्षिणत एवैषां यज्ञो रिच्यते, दक्षिणत एवैषां यज्ञो रिच्यते[2] ।।२४।।

।। इत्यथर्ववेदे गोपथब्राह्मणपूर्वभागे द्वितीयः प्रपाठकः ।।

---

१. अत्र 'उदाप्तये' इति पाठः स्यादिति गास्त्रः ।

२. कोशेषु क्वचिदावृत्तिर्न दृश्यते ।

# तृतीयः प्रपाठकः

ओम् । दक्षिणाप्रवणा भूमिः, दक्षिणत आपो वहन्ति । तस्माद् यज्ञस्तद्भू मेरुन्नततरमिव भवति, यत्र भृग्वङ्गिरसो विष्ठाः[1] । तद् यथाप इमाँल्लोकानभिवहन्ति, एवमेव भृग्वङ्गिरसः सर्वान् देवानभिवहन्ति । एवमेवैषा व्याहृतिः सर्वान् वेदानभिवहत्योमिति हर्चामोमिति यजुषामोमिति साम्नामोमिति सर्वस्याहाभिवादः । तं ह स्मैतदुत्तरं यज्ञे विद्वांसः कुर्वन्ति । देवा ब्रह्माण आगच्छतागच्छत[2] इति । एते वै देवा ब्रह्माणो यद् भृग्वङ्गिरसः । तानेवैतद् गृणानास्तान् वृणाना[3] ह्वयन्तो मन्यन्ते । नान्यो ऽभृग्वङ्गिरोविदो वृतो यज्ञमागच्छेत्[4] । यज्ञस्य तेजसा तेज आप्नोत्यूर्जयोर्जा यशसा यशः । नान्यो ऽभृग्वङ्गिरोविदो वृतो यज्ञमागच्छेद्, नेद् यज्ञं परिमुष्णीयादिति । तद् यथा पूर्वं वत्सो ऽधीत्य[1] गां धयेदेवं ब्रह्मा भृग्वङ्गिरोविद् वृतो यज्ञमागच्छेद्, नेद् यज्ञं परिमुष्णीयादिति । तद् यथा गौर्वाश्वो वाश्वतरो वैकपाद् द्विपात् त्रिपादिति स्यात्, किमभिवहेत्, किमभ्यश्नुयादिति ? तस्मादृग्विदमेव होतारं वृणीष्व यजुर्विदमध्वर्युं सामविदमुद्गातारमथर्वाङ्गिरोविदं ब्रह्माणम् । तथा हास्य यज्ञश्चतुर्षु लोकेषु चतुर्षु देवेषु चतुर्षु वेदेषु चतसृषु होत्रासु चतुष्पाद् यज्ञः प्रतितिष्ठति[5] । प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद, यश्चैवमृत्विजामार्त्विज्यं वेद, यश्च यज्ञे यजनीयं वेदेति ब्राह्मणम् ॥१॥

---

१. यथाकोशं पाठः ।

२. तु०—शत० ब्रा० ३।३।४।२०॥ ला० सू० १।३।३

३. गास्ट्रसंशोधितः पाठः । 'गृणानांस्तान्वृणां' इति रा० पाठः ।

४. 'आगच्छेन्' इति गास्ट्रपाठः । 'आगच्छन्' इति रा० पाठः ।

५. गास्ट्रसंशोधितः पाठः । 'प्रतिष्ठति' इति कोशपाठः ।

प्रजापतिर्यज्ञमतनुत। स ऋचैव हौत्रमकरोद् यजुषाध्वर्यवं साम्नौद्गात्रमथर्वाङ्गिरोभिर्ब्रह्मत्वम्। तं वा एतं महावाद्यं[1] कुरुते, यदृचैव हौत्रमकरोद् यजुषाध्वर्यवं साम्नौद्गात्रमथर्वाङ्गिरोभिर्ब्रह्मत्वम्। स वा एष त्रिभिर्वेदैर्यज्ञस्यान्यतरः पक्षः संस्क्रियते। मनसैव ब्रह्मा यज्ञस्यान्यतरं पक्षं संस्करोति। अयमु वै यः पवते स यज्ञः। तस्य मनश्च वाक् च वर्तनी[2]। मनसा चैव हि वाचा च यज्ञो[3] वर्तते[3]। अद[3] एव मन इयमेव वाक्। स यद् वदन्नास्ते,[4] विद्यादर्धं मे ऽस्य यज्ञस्यान्तरगादिति। तद् यथैकपात् पुरुषो यन्नेकचक्रो वा रथो वर्तमानो भ्रेषं न्येति, एवमेवास्य यज्ञो भ्रेषं न्येति। यज्ञस्य भ्रेषमनु यजमानो भ्रेषं न्येति यजमानस्य भ्रेषमन्वृत्विजो भ्रेषं नियन्ति। ऋत्विजां भ्रेषमनु दक्षिणा भ्रेषं नियन्ति। दक्षिणानां भ्रेषमनु यजमानः पुत्रपशुभिर्भ्रेषं न्येति। पुत्रपशूनां भ्रेषमनु यजमानः स्वर्गेण लोकेन भ्रेषं न्येति। स्वर्गस्य लोकस्य भ्रेषमनु तस्यार्धस्य योगक्षेमो भ्रेषं न्येति, यस्मिन्नर्धे यजन्त इति ब्राह्मणम् ।।२।।[5]

तदु ह स्माह श्वेतकेतुरारुणेयो ब्राह्मणं दृष्ट्वा भाषमाणम्—अर्धं मे ऽस्य यज्ञस्यान्तरगादिति। तस्माद् ब्रह्मा स्तुते बहिःपवमाने वाचोयम्यम्[6] उपांश्वन्तर्यामाभ्याम्, अथ ये पवमाना ओदृचस्तेषु, अथ यानि[7] स्तोत्राणि सशस्त्राण्या वषट्कारात् तेषु। स यदृक्तो भ्रेषं न्यृच्छेद्[8]

---

१. यथाकोशं पाठ.। तु०—'महावदाः' इति ऐतरेयब्राह्मणे (५।३३।१)।

२. गास्ट्रसंशोधित पाठः। 'वर्त्तनिः' इति कोशेषु।

३. गास्ट्रसंशोधितः पाठः। द्र०—ऐ०ब्रा० ५।३३।३। यथाकोशं तु 'यज्ञे वहत्यत' इति पाठः।

४. संशोधितः पाठः। द्र०—ऐ० ब्रा० ५।३३।७। कोशेषु'—वदन्नास्ति' इति पाठः।

५. तु०—ऐ० ब्रा० ५।३२,३३।।

६. ऐ० ब्रा० (५।३३।८) अनुसारमत्र 'वाचंयमः' इति पाठः समीचीनः स्यात्। अतोऽग्रे च 'ओपां०' इति पाठेन 'आङ्'-निर्देशसहितेन भाव्यम्।

७. ऐतरेयपाठोऽत्रानुसृतः। यथाकोशं तु 'यानि च स्तोत्राणि च शास्त्रा०' इति पाठः।

८. गास्ट्रसंशोधितः पाठः। 'नियच्छेद्' इति कोशेषु।

ओं भूर्जनदिति गार्हपत्ये जुहुयात् । यदि यजुष्ट ओं भुवो जनदिति दक्षिणाग्नौ जुहुयात् । यदि सामत ओं स्वर्जनदित्याहवनीये जुहुयात् । यद्यनाज्ञाताद् ब्रह्मतो वों भूर्भुवः स्वर्जनदोमित्याहवनीय एव जुहुयात् । तद् वाकोवाक्यस्यर्चां यजुषां साम्नामथर्वाङ्गिरसाम् । अथापि वेदानां रसेन यज्ञस्य विरिष्टं संधीयते । तद् यथा लवणेनेत्युक्तम्[1] । तद् यथोभयपात् पुरुषो यन्नुभयचक्रो वा रथो वर्तमानो ऽभ्रेषं न्येति, एवमेवास्य यज्ञो ऽभ्रेषं न्येति । यज्ञस्याभ्रेषमनु यजमानो ऽभ्रेषं न्येति । यजमानस्याभ्रेषमन्वृत्विजो ऽभ्रेषं नियन्ति । ऋत्विजामभ्रेषमनु दक्षिणा अभ्रेषं नियन्ति । दक्षिणानामभ्रेषमनु यजमानः पुत्त्रपशुभिरभ्रेषं न्येति । पुत्त्रपशूनामभ्रेषमनु यजमानः स्वर्गेण लोकेनाभ्रेषं न्येति । स्वर्गस्य लोकस्याभ्रेषमनु तस्यार्धस्य योगक्षेमो ऽभ्रेषं न्येति, यस्मिन्नर्धे यजन्त इति ब्राह्मणम् ॥३॥[2]

तद् यदौदुम्बर्यां[3] म आसिष्ट हिङ्ङ्कार्षीद्[4] मे प्रास्तावीद् म उदगासीद् मे सुब्रह्मण्यामाह्वासीदित्युद्गात्रे दक्षिणा नीयन्ते, ग्रहान् मे ऽग्रहीत् प्राचारीद् मे ऽशुश्रुवद् मे समनसस्कार्षीदयाक्षीद्[5] मे ऽवषट्कार्षीद् मे इत्यध्वर्यवे; होतृषदन आसिष्टायाक्षीद् मे ऽशंसीद्[6] मे ऽवषट्कार्षीद् म इति होत्रे, देवयजनं मे ऽचीक्लृपद् ब्रह्मासादं मे ऽसीसृपद् ब्रह्मजपान् मे ऽजपीत् पुरस्ताद्धोमसंस्थितहोमान् मे ऽहौषीदयाक्षीद् मे ऽशंसीद् मे ऽवषट्कार्षीद् म इति ब्रह्मणे । भूयिष्ठेन मा[7] ब्रह्मणाकार्षीदिति । एतद् वै भूयिष्ठं ब्रह्म, यद् भृग्वङ्गिरसः । ये ऽङ्गिरसः स रसः ।

---

१. द०—गो० ब्रा० १।१।१४॥
२. तु०—ऐ० ब्रा० ५।३३,३४॥
३. गास्ट्रसंशोधितः पाठः । 'औदुम्बर्यान्' 'औदुम्बर्यं' इति कोशेषु पाठः ।
४. गास्ट्रसंशोधितः पाठः । 'हिङ्क्रणोत्' इति कोशेषु पाठः ।
५. 'समनसस्कार्षीत्' इति सन्दिग्धम् ।
६. 'ऽशांसीन्' इति रा० गास्ट्रपाठः ।
७. अस्य स्थाने 'मे' इति पाठेन भाव्यम् ।

यें ऽथर्वाणो ये ऽथर्वाणस्तद् भेषजम्। यद् भेषजं तदमृतम्। यदमृतं तद् ब्रह्म। स वा एष पूर्वेषामृत्विजामर्धभागस्यार्धमितरेषामर्धं ब्रह्मण इति ब्राह्मणम् ।।४।।[२]

देवाश्च ह वा असुराश्च संग्रामं समयतन्त। तत्रैतास्तिस्रो होत्रा[३] जिह्मं प्रतिपेदिरे। तासामिन्द्र उक्थानि सामानि लुलोप। तानि होत्रे प्रायच्छत्। आज्यं ह वै होतुर्बभूव, प्रउगं पोतुः। वैश्वदेवं ह वै होतुर्बभूव, निष्केवल्यं नेष्टुः। मरुत्वतीयं ह वै होतुर्बभूव, आग्निमारुतमाग्नीध्रस्य। तस्मादेतदभ्यस्ततरमिव शस्यते यदाग्निमारुतम्। तस्मादेते संशंसुका इव भवन्ति यद् धोता पोता नेष्टा। आग्नीध्रो मुमुहे[४] वसीत[५]। तद् ब्रह्मे-यसामिवास। तासामर्धं प्रतिलुलोप प्रथमार्हणं च प्रथमपदं चैतद् दक्षिणां चेतत् परिशिषेदेद्[६] इति ब्राह्मणम् ।।५।।

उद्दालको ह वा आरुणिरुदीच्यान् वृतो धावयांचकार। तस्य ह निष्क उपाहितो बभूवोपवादाद् बिभ्यतः—यो मा ब्राह्मणो ऽनूचान उपवदिष्यति, तस्मा एतं प्रदास्यामीति। तद्धोदीच्यान् ब्राह्मणान् भयं विवेद—उद्दालको ह वा अयमायाति कौरुपञ्चालो ब्रह्मा ब्रह्मपुत्रः। स[७] ऊर्ध्वं वृतो न पर्यादधीत। केनेमं वीरेण प्रतिसंयतामहा इति। तं यत एव प्रपन्नं दध्रे, तत एवमनुप्रतिपेदिरे। ते ह स्वैदायनं शौनकमूचुः—स्वैदायन त्वं वै नो ब्रह्मिष्ठो ऽसीति, त्वयेमं वीरेण प्रतिसंयतामहा इति। तं यत एव प्रपन्नं दध्रे, तत एवमनुप्रतिपेदिरे।

---

१. आवृत्तिः चिन्त्या।
२. तु०—ऐ० ब्रा० ५।३४।।
३. गास्ट्रसंशोधितः। 'होत्रका' इति कोशेषु पाठः
४. 'मुमोहे वसीत' इति रा० पाठः। 'मोह एवासीत्' इति पाठोऽत्र सम्भवेदिति गास्ट्रः।
५. यथाकोशं पाठः ॥
६. पाठोऽत्र भ्रष्टः प्रतीयते (द्र०—शत० ब्रा० ११।४।१)।
७. गास्ट्रसंशोधितः पाठः। 'तं' इति रा० पाठः।

तं ह स्वैदायन३ इत्यामन्त्रयामाम। स हो[1] गौतमस्य पुत्रेति हास्मा असूया-प्रतिश्रुतं प्रतिशुश्राव। स वै गौतमस्य पुत्र ऊर्ध्वं वृतो धावेत्[2] ॥६॥[3]

यस्तद् दर्शपूर्णमासयो रूपं विद्यात् कस्माद्[4] इमाः प्रजाः शिरस्तः प्रथमं लोमशा जायन्ते, कस्मादासामपरमिव श्मश्रूण्युपकक्षाण्यन्यानि लोमानि जायन्ते ? यस्तद् दर्शपूर्णमासयो रूपं विद्यात् कस्मादिमाः प्रजाः शिरस्तः प्रथमं पलिता भवन्ति, कस्मादन्ततः सर्वा एव पलिता भवन्ति ? यस्तद् दर्शपूर्णमासयो रूपं विद्यात् कस्मादिमाः प्रजा अदन्तिका जायन्ते, कस्मादासामपरमिव जायन्ते ? यस्तद् दर्शपूर्णमासयो रूपं विद्यात् कस्मादासां सप्तवर्षाष्टवर्षाणां प्रभिद्यन्ते, कस्मादासां पुनरेव जायन्ते, कस्मादन्ततः सर्व एव प्रभिद्यन्ते ? यस्तद् दर्शपूर्णमासयो रूपं विद्यात् कस्मादधरे दन्ताः पूर्वे जायन्ते, पर उत्तरे ? यस्तद् दर्शपूर्णमासयो रूपं विद्यात् कस्मादधरे दन्ता अणीयांसो ह्रसीयांसः, प्रथीयांसो वर्षीयांस उत्तरे ? यस्तद् दर्शपूर्णमासयो रूपं विद्यात् कस्मादिमौ दंष्ट्रौ दीर्घतरौ, कस्मात् समे इव जंभे ? यस्तद् दर्शपूर्णमासयो रूपं विद्यात् कस्मादिमे श्रोत्रे अन्तरतः समे इव दीर्णे ? यस्तद् दर्शपूर्णमासयो रूपं विद्यात् कस्मात् पुमांसः श्मश्रुवन्तो ऽश्मश्रुकाः[5] स्त्रियः ? यस्तद् दर्शपूर्णमासयो रूपं विद्यात् कस्मादासां संततमिव शरीरं भवति, कस्मादासामस्थीनि दृढतराणीव भवन्ति। यस्तद् दर्शपूर्णमासयो रूपं विद्यात् कस्मादासां प्रथमे वयसि रेतः सिक्तं न संभवति, कस्मादासां मध्यमे वयसि रेतः सिक्तं संभवति, कस्मादासामुत्तमे वयसि रेतः सिक्तं न संभवति ? यस्तद् दर्शपूर्णमासयो रूपं विद्यात् कस्मादिदं शिश्नमुच्चश[5] एति नीचो[5] पद्यते ? कस्मात् सकृदपानम् ? ॥७॥[6]

---

१. 'भो' इति गास्ट्रसंशोधितः पाठः। 'हो' इति कोशेषु शतपथब्राह्मणे च पाठः।

२. गास्ट्रसंशोधितः पाठः। 'धावीत्' 'धावीत' इति कोशेषु पाठः।

३. तु०—शत० ब्रा० ११।४।१-४॥

४. यथाकोशमयं पाठः। 'यस्माद्' इति शत० ब्रा० ११।४।१।६॥

५. सन्दिग्धं रूपम्।

६. तु०—शत० ब्रा० ११।४।१,५,६,७॥

अथ यः पुरस्तादष्टावाज्यभागान् विद्याद्, मध्यतः पञ्च हविर्भागाः षट् प्राजापत्याः, उपरिष्टादष्टावाज्यभागान विद्याद्, अथ यो गायत्रीं हरिणीं ज्योतिष्पक्षां सर्वैर्यज्ञैर्यजमानं स्वर्गं लोकमभिवहन्तीं विद्याद्, अथ यः पङ्क्तिं पञ्चपदां सप्तदशाक्षरां सर्वैर्यज्ञैर्यजमानं स्वर्गं लोकमभिवहन्तीं विद्यात्। तस्मै ह निष्कं प्रयच्छन्नुवाच—अनूचानो ह वै स्वैदायनासि[1] सुवर्णं वै सुवर्णविदे ददामीति। तदुपयम्य निश्चक्राम। तत्रापवव्राज[2] यत्रेतरो बभूव। तं ह पप्रच्छ—किमेष गौतमस्य पुत्र इति। एष ब्रह्मा ब्रह्मपुत्र इति होवाच, यदेनं कश्चिदुपवदेतोत मीमांसेत ह[3] वा[3] मूर्धा वा अस्य विपतेत् प्राणा वैनं जह्युरिति। तें[4] मिथ एव चिक्रन्देयुर्वि-प्रापवव्रज[4] यत्रेतरो बभूव[4]। ते प्रातः समित्पाणय उपोदेयुः—उपायामो भवन्तमिति। किमर्थमिति ? यानेव नो भवांस्तान् ह्यः प्रश्नानपृच्छत, तानेव[5] नो भवान् व्याचक्षीतेति[5]। तथेति। तेभ्य एतान् प्रश्नान् व्याचचष्टे ॥८॥[6]

यत् पुरस्ताद् वेदेः प्रथमं बर्हि स्तृणाति, तस्मादिमाः प्रजाः शिरस्तः प्रथमं लोमशा जायन्ते। यदपरमिव प्रस्तरमनुप्रस्तृणाति, तस्मा-दासामपरमिव श्मश्रूण्युपकक्षाण्यन्यानि लोमानि जायन्ते। यत् प्राग् बर्हिषः प्रस्तरमनुप्रहरति, तस्मादिमाः प्रजाः शिरस्तः प्रथमं पलिता भवन्ति। यदन्ततः सर्वमेवानुप्रहरति, तस्मादन्ततः सर्व एव पलिता भवन्ति। यत् प्रयाजा अपुरोऽनुवाक्यावन्तो भवन्ति, तस्मादिमाः प्रजा अदन्तिका जायन्ते। यद्धवींषि पुरोऽनुवाक्यावन्ति भवन्ति, तस्मा-

१. गास्ट्रसंशोधितः पाठः। 'स्वैदायना स' इति प्राथिकः पाठः।
२. गास्ट्रसंशोधितः पाठः। 'तत्रापव्राज' 'तत्रपव्रज' 'तत्रापव्रज' इति पाठभेदाः कोशेषु।
३. अनपेक्षितः पाठः।
४. यथाकोशमयं सन्दर्भः। स च भ्रष्टः। 'ते ह तत एव विप्रेयुः' इति त्वत्र शातपथी (११।४।१।९) श्रुतिरनुसन्धेया।
५. द्र०—पृ० ३१ टि० २,३॥
६. तु०—शत० ब्रा० ११।४।१।८,९॥

दासामपरमिव जायन्ते । यदनुयाजा अपुरोऽनुवाक्यावन्तो भवन्ति, तस्मादासां सप्तवर्षाष्टवर्षाणां प्रभिद्यन्ते । यत् पत्नीसंयाजाः पुरोऽनुवाक्यावन्तो भवन्ति, तस्मादासां पुनरेव जायन्ते । यत् समिष्टयजुरपुरोऽनुवाक्यावद् भवति, तस्मादन्ततः सर्वं एव प्रभिद्यन्ते । यद् गायत्र्यानूच्य त्रिष्टुभा यजति, तस्मादधरे दन्ताः पूर्वे जायन्ते, पर उत्तरे । यदृचानूच्य यजुषा यजति, तस्मादधरे दन्ता अणीयांसो ह्रसीयांसः, प्रथीयांसो वर्षीयांस उत्तरे । यदाघारौ दीर्घतरौ प्राञ्चावाघारयति, तस्मादिमौ दंष्ट्रौ दीर्घतरौ । यत् संयाज्ये सच्छन्दसी, तस्मात् समे इव जम्भे । यच्चतुर्थे प्रयाजे समानयति, तस्मादिमे श्रोत्रे अन्तरतः समे इव दीर्णे । यज्जपं जपित्वाभिहिंकृणोति, तस्मात् पुमांसः श्मश्रुवन्तो ऽश्मश्रुव स्त्रियः । यत् सामिधेनीः संतन्वन्नन्वाह[1] तस्मादासां संततमिव शरीरं भवति । यत् सामिधेन्यः काष्ठहविषो भवन्ति, तस्मादासामस्थीनि दृढतराणीव भवन्ति । यत् प्रयाजा आज्यहविषो भवन्ति । तस्मादासां प्रथमे वयसि रेतः सिक्तं न संभवति । यद् मध्ये हविषां दध्ना च पुरोडाशेन च प्रचरन्ति, तस्मादासां मध्यमे वयसि रेतः सिक्तं संभवति । यदनुयाजा आज्यहविषो भवन्ति, तस्मादासामुत्तमे वयसि रेतः सिक्तं न संभवति । यदुत्तमे ऽनुयाजे सकृदपानिति, तस्मादिदं शिश्नमुच्चश[2] एति नीचो[2] पद्यते । यद् नापानेत् सकृच्छूनं स्यात् । यद् मुहुरपानेत् सकृत् पन्नं स्यात् । तस्मात् सकृदपानिति, नेत् सकृच्छूनं स्यात् सकृत् पन्नं वेति ॥९॥[3]

अथ ये पुरस्तादष्टावाज्यभागाः पञ्च प्रयाजा द्वावाघारौ द्वावाज्यभागावाग्नेय आज्यभागानां प्रथमः सौम्यो द्वितीयो हविर्भागानाम् । हविर्ह्येव सौम्यम्, आग्नेयः पुरोडाशः, अग्नीषोमीय उपांशुयाजः, अग्नीषोमीयः पुरोडाशः, अग्निः स्विष्टकृदित्येते मध्यतः पञ्च हविर्भागाः । अथ ये षट् प्राजापत्या

१. गास्ट्रसंशोधितः पाठः । 'संतन्वन्नाह' 'संतन्वन्ता ह' इति कोशेषु पाठः ।
२. द्र०—पृ० ४६ टि० ५॥
३. तु०—शत० ब्रा० ११।४।१।१२-१५॥

इड़ा च प्राशित्रं च यच्चाग्नीध्रायावद्यति ब्रह्मभागो यजमानभागो ऽन्वाहार्य एव षष्ठः । अथ य उपरिष्टादष्टावाज्यभागास्त्रयो ऽनुयाजाश्चत्वारः पत्नीसंयाजाः समिष्टयजुरष्टमम् । अथ या गायत्री हरिणी ज्योतिष्पक्षा सर्वैर्यज्ञैर्यजमानं स्वर्गं लोकमभिवहति, वेदिरेव सा । तस्य ये पुरस्तादष्टावाज्यभागाः, स दक्षिणः पक्षः, अथ य उपरिष्टादष्टावाज्यभागाः, स उत्तरः पक्षः, हवींष्यात्मा, गार्हपत्यो जघनम्, आहवनीयः शिरः, सौवर्णराजतौ पक्षौ । तद् यदादित्यं पुरस्तात् पर्यन्तं न पश्यन्ति, तस्मादज्योतिष्क उत्करो भवति । अथ या पङ्क्तिः पञ्चपदा सप्तदशाक्षरा सर्वैर्यज्ञैर्यजमानं स्वर्गं लोकमभिवहति, याज्यैव सा । तस्या ओं श्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरं, यजेति द्व्यक्षरं, ये यजामह इति पञ्चाक्षरं, द्व्यक्षरो वै वषट्कारः। सैषा पङ्क्तिः पञ्चपदा सप्तदशाक्षरा सर्वैर्यज्ञैर्यजमानं स्वर्गं लोकमभिवहति । तद् यत्राम्यैश्वर्यं स्याद् यत्र वैनमभिवहेयुः, एवंविदमेव तत्र ब्रह्माणं वृणीयाद् नानेवंविदमिति ब्राह्मणम् ॥ १० ॥[1]

अथ ह प्राचीनयोग्य आजगाम—अग्निहोत्रं भवन्तं पृच्छामि[2] गौतमेति । पृच्छ प्राचीनयोग्येति । किंदेवत्यं ते गवीडायाम् ? किंदेवत्यमुपहूतायाम् ? किंदेवत्यमुपसृष्टायाम् ? किंदेवत्यं वत्समुन्नीयमानम्[3] ? किंदेवत्यं वत्समुन्नीतम्[3] ? किंदेवत्यं दुह्यमानम् ? किंदेवत्यं दुग्धम् ? किंदेवत्यं प्रक्रम्यमाणम् ? किंदेवत्यं ह्रियमाणम् ? किंदेवत्यमधिश्रीयमाणम्? किंदेवत्यमधिश्रितम् ? किंदेवत्यमभ्यवज्वाल्यमानम् ? किंदेवत्यमभ्यवज्वालितम् ? किंदेवत्यं समुद्वान्तम् ? किंदेवत्यं विष्यन्नम् ? किंदेवत्यमद्भिः प्रत्यानीतम्? किंदेवत्यमुद्वास्यमानम्? किंदेवत्यमुद्वासितम् ? किंदेवत्यमुन्नीयमानम् ? किंदेवत्यमुन्नीतम् ? किंदेवत्यं प्रक्रम्यमाणम् ? किंदेवत्यं ह्रियमाणम्? किंदेवत्यमुपसाद्यमानम् ? किंदेवत्यमुपसादितम् ? किंदेवत्या

१. तु०— शत० ब्रा० ११।४।१।१०; १२।३।३।३।।

२. गास्ट्रसंशोधितः पाठः । 'पृच्छेद्' इति कोशेषु पाठः ।

३. भ्रष्टोऽयं पाठ इति गास्ट्रः ।

समित् ? किंदेवत्यां प्रथमामाहुतिमहौषीः ? किंदेवत्यं गार्हपत्यमवेक्षिष्ठाः? किंदेवत्योत्तराहुतिः ? किंदेवत्यं हुत्वा स्रुचं त्रिरुदश्वमुदनैषीः[1] ? किंदेवत्यं बर्हिषि स्रुचं निधायोन्मृज्योत्तरतः पाणी निरमार्क्षीः?[2] किंदेवत्यं द्वितीयमुन्मृज्य पित्र्युपवीतं कृत्वा दक्षिणतः पितृभ्यः स्वधामकार्षीः ? किंदेवत्यं प्रथमं प्राशीः ? किंदेवत्यं द्वितीयम् ? किंदेवत्यमन्ततः सर्वमेव प्राशीः ? किंदेवत्यमप्रक्षालितयोदकं स्रुचा न्यनैषीः ? किंदेवत्यं प्रक्षालितया? किंदेवत्यमपरेणाहवनीयमुदकं स्रुचा न्यनैषीः ? किंदेवत्यं स्रुवं स्रुचं च प्रत्यताप्सीः ? किंदेवत्यं रात्रौ स्रुग्दण्डमवामार्क्षीः ? किंदेवत्यं प्रातरुदमार्क्षीरिति[3] ? एतच्चेद् वेत्थ गौतम हुतं ते,[4] यद्यु न वेत्थाहुतं त इति ब्राह्मणम् ॥ ११ ॥[5]

स होवाच—रौद्रं मे गवीडायां, मानव्यमुपहूतायां, वायव्यमुपसृष्टायां, वैराजं वत्समुन्नीयमानं, जागतमुन्नीतम्, आश्विनं दुह्यमानं, सौम्यं दुग्धं, बार्हस्पत्यं प्रक्रम्यमाणं, द्यावापृथिव्यं ह्रियमाणम्, आग्नेयमधिश्रीयमाणं, वैश्वानरीयमधिश्रितं, वैष्णवमभ्यवज्वाल्यमानं, मारुतमभ्यवज्वालितं, पौष्णं समुद्वान्तं, वारुणं विष्यन्नं,[6] सारस्वतमद्भिः प्रत्यानीतं, त्वाष्ट्रमुद्वास्यमानं, धात्रमुद्वासितं, वैश्वदेवमुन्नीयमानं, सावित्रमुन्नीतं, बार्हस्पत्यं प्रक्रम्यमाणं, द्यावापृथिव्यं ह्रियमाणम्, ऐन्द्रमुपसाद्यमानं, बलायोपसन्नम्, आग्नेयी समित् । यां प्रथमामाहुतिमहौषं मामेव तत् स्वर्गे लोकेऽधाम् । यद् गार्हपत्यमवेक्षिषमस्य लोकस्य संतत्यै । प्राजापत्योत्तराहुतिः, तस्मात् पूर्णतरा मनसैव सा । यद्धुत्वा स्रुचं त्रिरुदश्वमुदनैषं[7] रुद्रांस्तेनाप्रैषम् ।

१. गास्ट्रसंशोधितः पाठः । 'उन्नैषीः' इति कोशेषु पाठः ।
२. गास्ट्रसंशोधितः पाठः । 'निर्मार्क्षीः' इति कोशेषु पाठः ।
३. गास्ट्रसंशोधितः पाठः । 'उन्मार्क्षीः' इति कोशेषु पाठः ।
४. गास्ट्रसंशोधितः पाठः । 'चेद्' इति कोशेषु पाठः ।
५. तु०—शत० ब्रा० ११।५।३।१-४।।
६. 'विष्यणं' इति गा० पाठः ।
७. गास्ट्रसंशोधितः पाठः । कोशेषु 'उन्ननैषं' इति पाठः ।

यद् बर्हिषि स्रुचं निधायोन्मृज्योत्तरतः पाणी निरमार्क्षम्[1] ओषधिवनस्पतींस्तेनाप्रैषम् । यद् द्वितीयमुन्मृज्य पित्र्युपवीतं[2] कृत्वा दक्षिणतः पितृभ्यः स्वधामकार्षं पितॄंस्तेनाप्रैषम् । यत् प्रथमं प्राशिषं प्राणांस्तेनाप्रैषं, यद् द्वितीयं गर्भांस्तेन । तस्मादनश्नन्तो गर्भा जीवन्ति । यदन्ततः सर्वमेव प्राशिषं विश्वान् देवांस्तेनाप्रैषम् । यदप्रक्षालितयोदकं स्रुचा न्यनैषं सर्पेतरजनांस्तेनाप्रैषं, यत् प्रक्षालितया सर्पपुण्यजनांस्तेन । यदपरेणाहवनीयमुदकं स्रुचा न्यनैषं गन्धर्वाप्सरसस्तेनाप्रैषम् । यत् स्रुवं स्रुचं च प्रत्यताप्सं सप्तर्षींस्तेनाप्रैषम् । यद् रात्रौ स्रुग्दण्डमवामार्क्षं[3] ये रात्रौ संविशन्ति दक्षिणांस्तानुदनैषम् । यत् प्रातरुदमार्क्षं[5] ये प्रातः प्रव्रजन्ति दक्षिणांस्तानुदनैषमिति[4] ब्राह्मणम् ।। १२ ।।[6]

एवमेवैतद् भो यथा भवानाह । पृच्छामि त्वेव भवन्तमिति । पृच्छ प्राचीनयोग्येति । यस्य सायमग्नय उपसमाहिताः स्युः, सर्वे ज्वलयेयुः, प्रक्षालितानि यज्ञपात्राण्युपसन्नानि स्युः, अथ चेद् दक्षिणाग्निरुद्वायात् किं वा ततो भयमागच्छेदिति ? क्षिप्रमस्य पत्नी प्रैति यो ऽविद्वान् जुहोति, विद्यया त्वेवाहमभिजुहोमीति । का ते विद्या, का प्रायश्चित्तिरिति ? गार्हपत्यादधि दक्षिणाग्निं प्रणीय प्राचो ऽङ्गारानुद्धृत्य प्राणापानाभ्यां स्वाहेति जुहुयात् । अथ प्रातर्यथास्थानमग्नीनुपसमाधाय यथापुरं जुहुयात् । सा मे विद्या, सा प्रायश्चित्तिरिति । अथ चेदाहवनीय उद्वायात् किं वा ततो भयमागच्छेदिति ? क्षिप्रमस्य पुत्रः प्रैति यो ऽविद्वान् जुहोति । विद्यया त्वेवाहमभिजुहोमीति । का ते विद्या, का प्रायश्चित्तिरिति ? गार्हपत्यादध्याहवनीयं प्रणीय प्रतीचो ऽङ्गारानुद्धृत्य समानव्यानाभ्यां

---

१. गास्ट्रसंशोधितः पाठः । कोशेषु प्रायः 'निर्मार्क्ष्यम्' इति पाठः ।
२. द्र०—कौ० सूत्र ८७।२६; वैतान० २।३।१५ (=७।१५) ।।
३. गास्ट्रसंशोधितः पाठः । कोशेषु 'अवमार्क्ष्यं' 'अवमार्क्षं' इति पाठौ ।
४. गास्ट्रसंशोधितः पाठः । 'उन्नैषं' इति कोशेषु ।
५. गास्ट्रसंशोधितः पाठः । 'उन्मार्क्ष्यं' 'उन्मार्क्षं' इति कोशेषु पाठौ ।
६. तु०—शत० ब्रा० ११।५।३।५; मै० सं० १।८।१०; तै० ब्रा० २।६।८।।

स्वाहेति जुहुयात्। अथ प्रातर्यथास्थानमग्नीनुपसमाधाय यथापुरं जुहुयात्। सा मे विद्या, सा प्रायश्चित्तिरिति। अथ चेद् गार्हपत्य उद्वायात् किं वा ततो भयमागच्छेदिति ? क्षिप्रं गृहपतिः प्रैति यो ऽविद्वान् जुहोति। विद्यया त्वेवाहमभिजुहोमीति। का ते विद्या, का प्रायश्चित्तिरिति ? सभस्मकमाहवनीयं दक्षिणेन दक्षिणाग्निं परिहृत्य गार्हपत्यस्यायतने प्रतिष्ठाप्य तत आहवनीयं प्रणीय उदीचो ऽङ्गारानुद्धृत्योदानरूपाभ्यां स्वाहेति जुहुयात्। अथ प्रातर्यथास्थानमग्नीनुपसमाधाय यथापुरं जुहुयात्। सा मे विद्या, सा प्रायश्चित्तिरिति। अथ चेत् सर्वे ऽग्नय उद्वायेयुः किं वा ततो भयमागच्छेदिति ? क्षिप्रं गृहपतिः सर्वज्यानिं जीयते यो ऽविद्वान् जुहोति। विद्यया त्वेवाहमभिजुहोमीति। का ते विद्या, का प्रायश्चित्तिरिति ? आनडुहेन शकृत्पिण्डेनाग्न्यायतनानि परिलिप्य होम्यमुपसाद्याग्निं निर्मथ्य प्राणापानाभ्यां स्वाहा समानव्यानाभ्यां स्वाहोदानरूपाभ्यां स्वाहेति जुहुयात्[1]। अथ प्रातर्यथास्थानमग्नीनुपसमाधाय यथापुरं जुहुयात्। सा मे विद्या, सा प्रायश्चित्तिरिति। अथ चेद् नाग्निं जनयितुं शक्नुयुः, न कुतश्चन वातो वायात्, किं वा ततो भयमागच्छेदिति ? मोघमस्येष्टं च हुतं च भवति, यो ऽविद्वान् जुहोति। विद्यया त्वेवाहमभिजुहोमीति। का ते विद्या, का प्रायश्चित्तिरिति ? आनडुहेनैव शकृत्पिण्डेनाग्न्यायतनानि परिलिप्य होम्यमुपसाद्य वात आ वातु भेषजम्[2] इति सूक्तेनात्मन्येव जुहुयात्[3]। अथ प्रातरग्निं निर्मथ्य यथास्थानमग्नीनुपसमाधाय यथापुरं जुहुयात्। सा मे विद्या, सा प्रायश्चित्तिरिति ब्राह्मणम् ॥१३॥[4]

एवमेवैतद् भो भगवन् यथा भवानाह, उपयामि त्वेव भवन्तमिति। एवं चेद् नावक्ष्यो मूर्धा ते व्यपतिष्यदिति। हन्त तु ते तद् वक्ष्यामि यथा

---

१. द्र०—कौ० सू० ७२.४२॥
२. अथर्व० (पैं० सं०) १६।४६।७; ऋ० १०।१८६।१॥
३. द्र०—कौ० सू० ११७।३॥
४. तु०—शत० ब्रा० ११।५।३।८॥

ते न विपतिष्यतीति । यो ह वा एवंविद्वानश्नाति च पिबति च वाक् तेन तृप्यति । वाचि तृप्तायामग्निस्तृप्यति । अग्नौ तृप्ते पृथिवी तृप्यति । पृथिव्यां तृप्तायां यानि पृथिव्यां भूतान्यन्वायत्तानि तानि तृप्यन्ति । यो ह वा एवंविद्वानश्नाति च पिबति च प्राणस्तेन तृप्यति । प्राणे तृप्ते, वायुस्तृप्यति । वायौ तृप्ते ऽन्तरिक्षं तृप्यति । अन्तरिक्षे तृप्ते यान्यन्तरिक्षे भूतान्यन्वायत्तानि तानि तृप्यन्ति । यो ह वा एवंविद्वानश्नाति च पिबति च चक्षुस्तेन तृप्यति । चक्षुषि तृप्त आदित्यस्तृप्यति । आदित्ये तृप्ते द्यौस्तृप्यति । दिवि तृप्तायां यानि दिवि भूतान्यन्वायत्तानि तानि तृप्यन्ति । यो ह वा एवंविद्वानश्नाति च पिबति च मनस्तेन तृप्यति । मनसि तृप्ते चन्द्रमास्तृप्यति । चन्द्रमसि तृप्त आपस्तृप्यन्ति । अप्सु तृप्तासु यान्यप्सु भूतान्यन्वायत्तानि तानि तृप्यन्ति । यो ह वा एवंविद्वानश्नाति च पिबति च श्रोत्रं तेन तृप्यति । श्रोत्रे तृप्ते दिशश्चान्तर्देशाश्च तृप्यन्ति । दिक्षु चान्तर्देशेषु च तृप्तेषु यानि दिक्षु चान्तर्देशेषु च भूतान्यन्वायत्तानि तानि तृप्यन्ति । यो ह वा एवंविद्वानश्नाति च पिबति च तस्यायमेव दक्षिणः पाणिर्जुहूः सव्य उपभृत्, कण्ठो ध्रुवा, अन्नं हविः, प्राणा ज्योतींषि । सदेष्टं सदा हुतं सदाशितं पायितमग्निहोत्रं भवति य एवं वेद, यश्चैवं विद्वानग्निहोत्रं जुहोतीति ब्राह्मणम् ॥१४॥

प्रियमेधा ह वै भरद्वाजा यज्ञविदो मन्यमानाः । ते ह स्म न कञ्चन[1] वेदविदमुपयन्ति । ते सर्वमविदुः । ते सहैवाविदुः । ते ऽग्निहोत्र[2] एव न समवदन्त[3] । तेषामेकः सकृदग्निहोत्रमजुहोद् द्विरेकस्त्रिरेकः । तेषां यः सकृदग्निहोत्रमजुहोत्, तमितरावपृच्छताम्—कस्मै त्वं जुहोषीति ? एकधा वा इदं सर्वं प्रजापतिः। प्रजापतय एवाहं सायं जुहोमीति, प्रजापतये प्रातरिति । तेषां यो द्विरजुहोत्, तमितरावपृच्छताम्—काभ्यां त्वं जुहोषीति ?

१. गास्ट्रसंशोधितः पाठः । कोशेषु 'कञ्चना' इति पाठः ।

२. गास्ट्रसंशोधितः पाठः । कोशेषु । 'ऽग्निहोत्रम्' इति पाठः ।

३. गास्ट्रसंशोधितः पाठः । कोशेषु 'समवदयन्त' इति पाठः । 'समवादयन्त' इति पुणे-कोशयोः पाठः ।

अग्नये प्रजापतय इति सायं, सूर्याय प्रजापतय इति प्रातः। तेषां यस्त्रिरजुहोत्, तमितरावपृच्छताम्—केभ्यस्त्वं जुहोषीति ? अग्नये प्रजापतयेऽनुमतय इति सायं, सूर्याय प्रजापतयेऽग्नये स्विष्टकृत इति प्रातः। तेषां यो द्विरजुहोत्, स आर्ध्नोत्। स भूयिष्ठोऽभवत्। प्रजया चेतरौ[1] श्रिया चेतरावत्याक्रामत्। तस्य ह प्रजामितरयोः प्रजे[2] सजातत्वमुपैताम्[2]। तस्माद् द्विर्होतव्यं यजुषा चैव मनसा च। यामेव स ऋद्धिमार्ध्नोत्,[3] तामृध्नोति य एवं वेद, यश्चैवं विद्वानग्निहोत्रं जुहोतीति ब्राह्मणम्॥१५॥[4]

स्वाहा वै कुतः संभूता ? केन प्रकृता ? किं वास्या गोत्रम् ? कत्यक्षरा ? कतिपदा ? कतिवर्णा ? किंपूर्वावसाना ? क्व चित्स्थिता ? किमधिष्ठाना ? ब्रूहि स्वाहाया यद् दैवतं रूपं च। स्वाहा वै सत्यसंभूता। ब्रह्मणा प्रकृता। लामगायनसगोत्रा। द्वे अक्षरे। एकं पदम्। त्रयश्च वर्णाः—शुक्लः पद्मः सुवर्ण इति। सर्वच्छन्दसां वेदेषु समासभूतैकोच्छ्वासा वर्णान्ते। चत्वारो वेदाः शरीरम्[5]। षडङ्गान्यङ्गानि[6]। ओषधिवनस्पतयो लोमानि। चक्षुषी सूर्याचन्द्रमसौ। सा स्वाहा सा स्वधा सैषा यज्ञेषु वषट्कारभूता प्रयुज्यते। तस्या अग्निर्दैवतं, ब्राह्मणो रूपमिति ब्राह्मणम्॥१६॥[7]

अथापि कारवो ह नाम ऋषयोऽल्पस्वा आसन्। त इममेकगुमग्निष्टोमं ददृशुः। तमाहरन्। तेनायजन्त। ते स्वर्ययुः। स य इच्छेत् स्वर्यायामिति[8], स एतेनैकगुनाग्निष्टोमेन यजेतेति ब्राह्मणम्॥१७॥

१. 'चेतरौ' इति पाठोऽनावश्यकः।

२. अयं पाठः काठकसंहितामनुसृत्य संशोधितो गास्ट्रेण। 'प्रजासु यातत्वमुपेयातां' इति कोशेषु पाठः।

३. गास्ट्रसंशोधितः पाठः। 'आर्ध्नोति' इति पाठः कोशेषु।

४. तु०—मै० सं० १।८।७; काठ० सं० ६।६॥

५. षड्विंश ब्राह्मणमनुसृत्य संशोधितः पाठः। 'शरीरे' इति कोशेषु पाठः।

६. षड्विंश ब्राह्मणमनुसृत्य संशोधित पाठः। द्वितीयम् 'अङ्गानि' इति पदं कोशेषु नोपलभ्यते।

७. तु०—षड्० ब्रा० ४।७ (५।७)।

८. संशोधितः पाठः। 'स्वरियामिति' इति गा० सं०, 'स्वर्य्यायीति' रा० पाठः। 'स्यर्यामीति' 'स्वर्यायीति' 'स्वर्यामिति' इति कोशेषु पाठाः।

अथातः सवनीयस्य पशोर्विभागं व्याख्यास्यामः। उद्धृत्यावदानानि—हनू सजिह्वे प्रस्तोतुः, कण्ठः सकाकुद्रः प्रतिहर्तुः, श्येनं वक्ष[1] उद्गातुः, दक्षिणं पार्श्वं सांसमध्वर्योः, सव्यमुपगातॄणाम्, सव्योंऽसः प्रतिप्रस्थातुः, दक्षिणा श्रोणिरथ्यास्त्री[2] ब्रह्मणः, अवरसक्थं ब्राह्मणाच्छंसिनः, ऊरुः पोतुः, सव्या श्रोणिर्होतुः, अवरसक्थं मैत्रावरुणस्य, ऊरुरच्छावाकस्य, दक्षिणा दोर्नेष्टुः, सव्या सदस्यस्य, सदं चानूकं च गृहपतेः, जाघनी पत्न्याः, तां सा ब्राह्मणेन प्रतिग्राहयति, वनिष्ठुर्हृदयं वृक्कौ चाङ्गुल्यानि दक्षिणो बाहुराग्नीध्रस्य, सव्य आत्रेयस्य, दक्षिणौ पादौ गृहपतेर्व्रतप्रदस्य, सव्यौ पादौ गृहपत्न्या व्रतप्रदायाः, सहैवैनयोरोष्ठः। तं गृहपतिरेवानुशिनष्टि[3], मणिकाश्च स्कन्ध्यास्तिस्रश्च कीकसा ग्रावस्तुतः, तिस्रश्चैव कीकसा अर्धं चापानस्योन्नेतुः, अत ऊर्ध्वं चमसाध्वर्यूणाम्, क्लोमा शमयितुः, शिरः सुब्रह्मण्यस्य। यः श्वःसुत्यामाह्वयते तस्य चर्म। तथा खलु षट्त्रिंशत् संपद्यन्ते। षट्त्रिंशदवदाना गौः। षट्त्रिंशदक्षरा बृहती। बार्हतो वै स्वर्गो लोकः। बृहत्या वै देवाः स्वर्गे लोके यजन्ते। बृहत्या स्वर्गे लोके प्रतितिष्ठन्ति[4]। प्रतितिष्ठन्ति[5] प्रजया पशुभिर्य एवं विभजन्ते। अथ यदतो ऽन्यथाशीलिको वा पापकृतो वा हुतादो वान्यजना वा विमथ्नीरन्[6] एवमेवैषां पशुर्विमथितो भवत्यस्वर्ग्यः। देवभाजो ह वा इमं[7] श्रुतऋषिः पशोर्विभागं विदांचकार। तमु[8] गिरि-

---

१. गास्ट्रसंशोधितः पाठः। पुणे-ख-कोशे 'वक्ष' इत्येव पाठः। 'पक्ष' इति पाठः कोशेषु।

२. यथाकोशं पाठः।

३. गास्ट्रसंशोधितः पाठः। 'अनुशास्तिः' इति कोशेषु पाठः।

४. गास्ट्रसंशोधितः पाठः। 'प्रतिष्ठति' इति कोशेषु पाठः।

५. गास्ट्रसंशोधितः पाठः। 'प्रतितिष्ठति' इति पाठः कोशेषु।

६. गास्ट्रसंशोधितः पाठः। 'वापिमथ्नीरन्' इति कोशेषु पाठः।

७. गास्ट्रसंशोधितः पाठः। 'इमां' इति पाठः कोशेषु। पुणे-ख-कोशे 'इमं' इति पाठः।

८. गास्ट्रसंशोधितः पाठः। 'तामु' इति पाठः कोशेषु।

जाय बाभ्रव्यायान्यो मनुष्येभ्यः प्रोवाच। ततो ऽयम्[1] अर्वाङ् मनुष्येष्वासीदिति ब्राह्मणम् ॥१८॥[2]

अथातो दीक्षा। कस्य स्विद्धेतोर्दीक्षित इत्याचक्षते? श्रेष्ठां धियं क्षियतीति। तं वा एतं धीक्षितं सन्तं दीक्षित इत्याचक्षते परोक्षेण[3]। परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः। कस्य स्विद्धेतोर्दीक्षितो ऽप्रत्युत्था येको[4] भवत्यनभिवादुकः प्रत्युत्थेयो ऽभिवाद्यः? ये प्रत्युत्थेया अभिवाद्यास्त एनमाविष्टा भवन्त्यथर्वाङ्गिरसः। तस्य किमाथर्वणमिति? यदात्मन्येव जुह्वति न परस्मिन्। एवं ह्याथर्वणानामदनसवानाम्[5] आत्मन्येव जुह्वति न परस्मिन्। अथास्य किमाङ्गिरसमिति? यदात्मनश्च परेषां च नामानि न गृह्णाति। एवं ह तस्मिन्नासाद्[6] आत्मनश्चैव परेषां च नामानि न गृह्यन्ते। विचक्षणवतीं वाचं भाषन्ते चनसितवतीम्[7]। विचक्षयन्ति ब्राह्मणं चनसयन्ति प्राजापत्यम्। सैषा व्रतधुगथर्वाङ्गिरसः। तां ह्यन्वायत्ताः। कस्य स्विद्धेतोर्दीक्षितो ऽनाश्यन्नो भवति नास्य नाम गृह्णन्ति। अन्नस्थो नामस्थो भवतीत्याहुः। तस्य ये ऽन्नमदन्ति ते ऽस्य पाप्मानमदन्ति। अथास्य ये नाम गृह्णन्ति ते ऽस्य नाम्नः पाप्मानमपाघ्नते। अथापि वेदानां गर्भभूतो भवतीत्याहुः। तस्याजातस्याविज्ञातस्याक्रीतसोमस्याभोजनीयं भवतीत्याहुः। स दीक्षाणां प्रातर्जायते, सोमं क्रीणन्ति, तस्य जातस्य विज्ञातस्य क्रीतसोमस्य भोजनीयं भवतीत्याहुः।

१. गास्त्रसंशोधितः पाठः। 'तत इयम्' इति कोशेषु पाठः।

२. तु०—ऐ० ब्रा० ७।१।१; आश्व० श्रौ० १२।९॥

३. तु०—शत० ब्रा० ३ २।२।३०॥

४. गास्त्रसंशोधितः पाठः। वैतानसूत्रे ३।१।१८ (=११।१८) चापि तथैव पाठः। कोशेषु '—युको' इति पाठः।

५. '—मोदनसमाना—' इति रा० पाठः। तत्रैव पादटिप्पण्यां '—मोदन समाना—' इत्यपि क्वाचित्कः पाठः प्रदर्शितः।

६. 'आसाद्' ('असाद्' रा० संस्करणे पादटि०) सन्दिग्धः पाठः।

७. तु०—गो० ब्रा० २।२।२३; ऐ० ब्रा० १।६।८॥

कस्य स्विद्धेतोः संसवाः परिजिहीर्षिता भवन्ति ? यतरो वीर्यवत्तरो भवति, स परस्य यज्ञं परिमुष्णाति। कस्य स्विद्धेतोर्दैवे न ध्यायेत्, संस्थिते नाधीयीतेति ? संसवस्यैव हेतोरिति। विद्योतमाने स्तनयत्यथो वर्षति वायव्यमभिषुण्वन्ति वै देवाः सोमं च भक्षयन्ति। तदभिषुण्वन्ति ब्राह्मणाः शुश्रुवांसो ऽनूचानाः। तेषां सर्वरसभक्षाः पितृपितामहा भवन्ति। स दैवे न ध्यायेत्, संस्थिते नाधीयीतेति ब्राह्मणम् ।।१९।।

समावृत्ता आचार्या निषेदुः। तान् ह यज्ञो दीक्षिष्यमाणान्[1] ब्राह्मणरूपं कृत्वोपोदेयाय। इत्थं चेद्व वो ऽपसमवत्सुः[2] हन्त वो ऽहं मध्ये दीक्षा इति। त ऊचुः—नैव त्वा विद्म न जानीमः। को हीद-विज्ञायमानेन सह दीक्षिष्यतीति ? यद् न्विदं दीक्षिष्यध्वे भूयो न दीक्षिष्यध्वे। अथ वा उ एकं दीक्षयिष्यथ, सं वै तर्हि मोहिष्यथ। मोहिष्यति वो यज्ञः। सर्वे ते दीक्षयिष्यथेति। अथ वा उ एकं दीक्षयिष्यथ, ते वा अहीनर्त्विजो गृहपतयो भविष्यथ। ते तूष्णीं ध्यायन्त आसां चक्रिरे। स होवाच—किं नु तूष्णीमाध्वे ? भूयो वः पृच्छामः। पृच्छतेति। यद्व न्विदं दीक्षिष्यध्वे, उपमये[3] एत-स्मिन् संवत्सरे मिथुनं चरिष्यथ, नोपैष्यथेति। धिगिति होचुः। कथं नु दीक्षिता उपैष्यामो, नोपैष्यामहा इति। ते वै ब्राह्मणानामभिमन्तारो भविष्यथ। रेतो ह वो य एतस्मिन् संवत्सरे ब्राह्मणास्तदभविष्यंस्ते बोधिमता भविष्यथेति। अथ वा उपैष्यामो, नोपैष्यामहा इति। ते वै दीक्षिता अवकीर्णिनो भविष्यथ। न ह वै देवयानः पन्थाः प्रादुर्भविष्य-तीति। तिरो वै देवयानः पन्था भविष्यतीति। ते वयं भगवन्तमेवोप-धावाम, यथा स्वस्ति संवत्सरस्योदृचं समश्नवामहा इति ब्राह्मणम् ।।२०।।

---

१. गास्त्रसंशोधितः पाठः। 'दीक्षिष्यमाणानां' इति कोशेषु पाठः।

२. सन्दिग्धः पाठः। 'ऽपसमवत्स्युः' इति पुणे-कोशयोः पाठः।

३. सन्दिग्धः पाठः। 'उपयेम' इति रा० पाठः। 'उपमयेतस्मिन्' इति पुणे-कोशपाठः।

स होवाच—द्वादश ह वै वसूनि दीक्षितादुत्क्रामन्ति। न ह वै दीक्षितो ऽग्निहोत्रं जुहुयात्। न पौर्णमासेन यज्ञेन यजेत, नामावास्येन। अस्मिन् वसीत, न पितृयज्ञेन यजेत। न तत्र गच्छेद् यत्र मनसा जिगमिषेत्। नेष्ठ्या यजेत। न वाचा यथाकथाचदिभिभाषेत। न मिथुनं चरेत्। नान्नस्य[1] यथाकाममुपयुञ्जीत। न पशुबन्धेन यज्ञेन यजेत। न तत्र गच्छेद् यत्र चक्षुषा परापश्येत्। कृष्णाजिनं वसीत। कुरीरं धारयेत्। मुष्टी कुर्यात्। अङ्गुष्ठप्रभृतयस्तिस्र उच्छ्रयेत्। मृगशृङ्गं गृह्णीयात्। तेन कषेत। अथ यस्य दीक्षितस्य वाग् वायता स्याद् मुष्टी वा विसृष्टौ स एतानि जपेत् ॥२१॥

अग्निहोत्रं च मा पौर्णमासश्च यज्ञः पुरस्तात् प्रत्यञ्चमुभौ कामप्रौ भूत्वा क्षित्या सहाविशताम्। वसतिश्च मामावास्यश्च यज्ञः पश्चात् प्राञ्चमुभाविति समानम्। मनश्च मा पितृयज्ञश्च यज्ञो दक्षिणत उदञ्चमुभाविति समानम्। वाक् च मेष्टिश्चोत्तरतो दक्षिणाञ्चमुभाविति समानम्। रेतश्च मान्नं चेत ऊर्ध्वमुभाविति समानम्। चक्षुश्च मा पशुबन्धश्च यज्ञो ऽमुतो ऽर्वाञ्चमुभौ कामप्रौ भूत्वा क्षित्या सहाविशतामिति[2]। खलु[3] ह वै दीक्षितो य आत्मनि वसूनि धत्ते, न चैवास्य काचनार्तिर्भवति, न च यज्ञविष्कन्धमुपयाति। अपहन्ति पुनर्मृत्युम्। अपात्येति पुनराजातिम्। कामचारो ऽस्य सर्वेषु लोकेषु भाति य एवं वेद, यश्चैवंविद्वान् दीक्षामुपैतीति ब्राह्मणम् ॥२२॥

अथ यस्य दीक्षितस्यर्तुमती जाया स्यात् प्रतिस्नावा[4] प्रतिस्नावा[4] सरूपवत्साया गोः पयसि स्थालीपाकं श्रपयित्वाभिघार्योद्वास्योद्धृत्याभि-

---

१. गास्ट्रसंशोधितः पाठः। कोशेषु 'नान्यस्य' इति पाठः।

२. द्र०—वैतान ३।२।१ (=१२।१)॥

३. 'खलु' शब्दात् पूर्वम् एवमादिना केनचिच्छब्देन भाव्यम्।

४. सन्दिग्धः पाठः।

हिङ्कृत्य गर्भवेदनपुंसवनैः संपातवन्तं कृत्वा तं परैव प्राश्नीयात् रेतो वा अन्नम् । वृषा हिंकारः । एवं हीश्वरा या[1] दीक्षिताय दीक्षिता[2] जाया पुत्रं लभेतेति । एतेनैव प्रक्रमेण यजेतेति ब्राह्मणम् ।।२३।।

।।इत्यथर्ववेदे गोपथब्राह्मणपूर्वभागे तृतीयः प्रपाठकः ।।

---

१. गास्ट्रसंशोधितः पाठः । 'हीश्वराय' इति कोशेषु पाठः ।
२. गास्ट्रसंशोधितः पाठः । 'दीक्षिती' इति कोशेषु पाठः ।

# चतुर्थः प्रपाठकः

ओम् । अयं वै यज्ञो यो ऽयं पवते । तमेत ईप्सन्ति ये संवत्सराय दीक्षन्ते । तेषां गृहपतिः प्रथमो दीक्षते । अयं वै लोको गृहपतिः । अस्मिन् वा इदं सर्वं लोके प्रतिष्ठितम् । गृहपता उ एव सर्वे सत्त्रिणः प्रतिष्ठिताः । प्रतिष्ठाया[1] एवैनं[1] तत्प्रतिष्ठित्यै[1] दीक्षन्ते[1] ॥१॥[2]

अथ ब्रह्माणं दीक्षयति । चन्द्रमा वै ब्रह्माधिदैवं मनो ऽध्यात्मम् । मनसैव तदोषधीः संदधाति । तद् या ओषधीर्वेद, स एव ब्रह्मौषधीस्तदनेन लोकेन संदधाति । तस्मादेतावन्तरेणान्यो न दीक्षेत । स यदेतावन्तरेणान्यो दीक्षेत, इमं तं लोकमोषधिभिर्व्यापादयेत् । उच्छोषुका ह स्युः । तस्मादेतावन्तरेणान्यो न दीक्षेत ॥२॥[3]

अथोदगातारं दीक्षयति । आदित्यो वा उद्गाताधिदैवं चक्षुरध्यात्मम् । पर्जन्य[4] आदित्यः[4] । पर्जन्यादधि वृष्टिर्जायते । वृष्टिरेव[5] तदोषधीः[5] संदधाति[5] ।[5] तस्मादेतावन्तरेणान्यो न दीक्षेत । स यदेतावन्तरेणान्यो दीक्षेत, इमं तं लोकं वर्षेण व्यापादयेत् । अवर्षुका ह स्युः । तस्मादेतावन्तरेणान्यो न दीक्षेत ॥३॥[6]

अथ होतारं दीक्षयति । अग्निर्वै होताधिदैवं वागध्यात्मम् । अन्नं

---

१. सन्दिग्धः पाठः ।

२. तु०—शत० ब्रा० १२।१।१।१॥

३. तु०—शत० ब्रा० १२।१।१।२॥

४. भ्रष्टः पाठ इति गास्ट्रः ।

५. 'वृष्टिमेव तदोषधिभिः (भ्यः) संदधाति' इति पाठोऽत्र स्यात् (तु०—शत० ब्रा० १२।१।१।३) ।

६. तु०—शत० ब्रा० १२।१।१।३॥

वृष्टिः । वाचं चैव तदग्निं चान्नेन संदधाति । तस्मादेतावन्तरेणान्यो न दीक्षेत । स यदेतावन्तरेणान्यो दीक्षेत, इमं तं लोकमन्नेन व्यापादयेत् । अशनायुका ह् स्युः । तस्मादेतावन्तरेणान्यो न दीक्षेत ॥४॥[1]

अथाध्वर्यु प्रतिप्रस्थाता दीक्षयति । वायुर्वा अध्वर्युरधिदैवं प्राणो ऽध्यात्मम् । अन्नं वृष्टिः । वायुं चैव तत् प्राणं चान्नेन संदधाति । तस्मादेतावन्तरेणान्यो न दीक्षेत । स यदेतावन्तरेणान्यो दीक्षेत, इमं तं लोकं प्राणेन व्यापादयेत् । प्रमायुका ह् स्युः । तस्मादेतावन्तरेणान्यो न दीक्षेत ॥५॥[2]

अथ ब्रह्मणे ब्राह्मणाच्छंसिनं दीक्षयति । अथोद्गात्रे प्रस्तोतारं दीक्षयति । अथ होत्रे मैत्रावरुणं दीक्षयति । अथाध्वर्यवे प्रतिप्रस्थातारं[3] नेष्टा दीक्षयति । स हैनमनु । एतेषां[4] वै नवानां क्लृप्तिमन्वितरे[5] कल्पन्ते । नव वै प्राणाः । प्राणैर्यज्ञस्तायते । अथ ब्रह्मणे पोतारं दीक्षयति । अथोद्गात्रे प्रतिहर्तारं दीक्षयति । अथ होत्रे ऽच्छावाकं दीक्षयति । अथाध्वर्यवे नेष्टारमुन्नेता दीक्षयति । स हैनमनु । अथ ब्रह्मण आग्नीध्रं दीक्षयति । अथोद्गात्रे सुब्रह्मण्यं दीक्षयति । अथ होत्रे ग्रावस्तुतं दीक्षयति । अथ तमन्यः स्नातको वा ब्रह्मचारी वा दीक्षयति । न पूतः पावयेदित्याहुः । सैषानुपूर्वं दीक्षा । तद् य एवं दीक्षन्ते, दीक्षिष्यमाणा एव ते सत्त्रिणां प्रायश्चित्तं न विन्दन्ते । सत्त्रिणां प्रायश्चित्तमनु तस्यार्धस्य योगक्षेमः कल्पते यस्मिन्नर्धे दीक्षन्त इति ब्राह्मणम् ॥६॥[6]

श्रद्धाया वै देवा दीक्षणीयां निरमिमत, अदितेः प्रायणीयां, सोमात् क्रयं, विष्णोरातिथ्यम्, आदित्यात् प्रवर्ग्यं, स्वधाया उपसदः, अग्नीषो-

१. तु०—शत० ब्रा० १२।१।१।४।।
२. तु०—शत० ब्रा० १२।१।१।५।।
३. पुणे-कोशयोः पाठः । 'प्रतिस्थातारं' इति प्रायिकः कोशस्थपाठः ।
४. गास्ट्रसंशोधितः पाठः । 'इतरेषां' इति कोशेषु पाठः ।
५. गास्ट्रसंशोधितः पाठः । 'क्लृप्तिरन्यतरे' इति कोशेषु पाठः ।
६. तु०—शत० ब्रा० १२।१।१।६–१०।।

माभ्यामौपवसथ्यमहः, प्रातर्यावभ्द्यो देवेभ्यः प्रातरनुवाकं, वसुभ्यः प्रातः सवनं, रुद्रेभ्यो माध्यंदिनं सवनम्, आदित्येभ्यस्तृतीयसवनं, वरुणादवभृथम्, अदितेरुदयनीयां, मित्रावरुणाभ्यामनूबन्ध्यां, त्वष्टुस्त्वाष्ट्रं, देवीभ्यो देविकाभ्यो देवताहवींषि[1], कामाद् दशातिरात्रं[2] स्वर्गाल्लोकादुदवसानीयाम् । तद् वा एतदग्निष्टोमस्य जन्म । स य एवमेतदग्निष्टोमस्य जन्म वेद, अग्निष्टोमेन सात्मा[3] सलोको भूत्वा देवानप्येतीति ब्राह्मणम् ॥७॥[4]

अथ यद् दीक्षणीयया यजन्ते, श्रद्धामेव तद् देवीं देवतां यजन्ते । श्रद्धा देवी देवता भवन्ति । श्रद्धाया देव्याः सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति । अथ यत् प्रायणीयया यजन्ते, अदितिमेव तद् देवीं देवतां यजन्ते । अदितिर्देवी देवता भवन्ति । अदित्या देव्याः सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति । अथ यत् क्रयमुपयन्ति, सोममेव तद् देवं देवतां यजन्ते । सोमो देवो देवता भवन्ति । सोमस्य देवस्य सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति । अथ यदातिथ्यया यजन्ते, विष्णुमेव तद् देवं देवतां यजन्ते । विष्णुर्देवो देवता भवन्ति । विष्णोर्देवस्य सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति । अथ यत् प्रवर्ग्यमुपयन्ति, आदित्यमेव तद् देवं देवतां यजन्ते । आदित्यो देवो देवता भवन्ति[5] । आदित्यस्य देवस्य सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति । अथ यदुपसदमुपयन्ति, स्वधामेव तद् देवीं देवतां यजन्ते । स्वधा देवी देवता भवन्ति । स्वधाया देव्याः सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति । अथ यदौपवसथ्यमहरुपयन्ति, अग्नीषोमावेव तद् देवौ देवते यजन्ते । ऽग्नीषोमौ देवौ देवते

---

१. 'यद् देविकाहविर्भिश्चरन्ति' (गो० ब्रा० १।४।८), 'देविकाभ्यो हवींषि' (कौ० ब्रा० १९।७) इति पाठतुलनयात्र 'देविकाहवींषि' इति पाठः स्यादिति गास्ट्रः ।

२. अत्र 'कामादतिरात्र'' इति पाठः स्यादिति गास्ट्रः ।

३. गास्ट्रपाठः । 'स आत्मा' इति कोशेषु पाठः ।

४. तु०— शत० ब्रा० १२।१।२।१॥

५. गास्ट्रपाठः । कोशेषु 'भवति' इत्येव पाठः ।

भवन्ति। अग्नीषोमयोर्देवतयोः सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। अथ यत् प्रातरनुवाकमुपयन्ति, प्रातर्याव्ण एव तद् देवान् देवता यजन्ते। प्रातर्यावाणो देवा देवता भवन्ति। प्रातर्याव्णां देवानां सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। अथ यत् प्रातःसवनमुपयन्ति, वसूनेव तद् देवान् देवता यजन्ते। वसवो देवा देवता भवन्ति। वसूनां देवानां सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। अथ यद् माध्यंदिनं सवनमुपयन्ति, रुद्रानेव तद् देवान् देवता यजन्ते। रुद्रा देवा देवता भवन्ति। रुद्राणां देवानां सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। अथ यत् तृतीयसवनमुपयन्ति, आदित्यानेव तद् देवान् देवता यजन्ते। आदित्या देवा देवता भवन्ति। आदित्यानां देवानां सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। अथ यदवभृथमुपयन्ति, वरुणमेव तद् देवं देवतां यजन्ते। वरुणो देवो देवता भवन्ति। वरुणस्य देवस्य सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। अथ यदुदयनीयया यजन्ते, अदितिमेव तद् देवीं देवता यजन्ते। अदितिर्देवी देवता भवन्ति। अदित्या देव्याः सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। अथ यदनूबन्ध्यया यजन्ते, मित्रावरुणावेव तद् देवौ देवते यजन्ते[1]। मित्रावरुणौ देवौ देवते भवन्ति[2]। मित्रावरुणयोर्देवयोः सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। अथ यत् त्वाष्ट्रेण पशुना यजन्ते, त्वष्टारमेव तद् देवं देवतां यजन्ते। त्वष्टा देवो देवता भवन्ति। त्वष्टुर्देवस्य सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। अथ यद् देविकाहविर्भिश्चरन्ति, या एता उपसत्सु[3] भवन्त्यग्निः सोमो विष्णुरिति[4] देव्यो देविका देवता भवन्ति। देवीनां देविकानां देवतानां सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। अथ यद् दशातिरात्रमुपयन्ति,[5] काममेव तद् देवं देवतां यजन्ते।

---

१. गास्ट्रसंशोधितः पाठः। 'यजतो' इति कोशेषु पाठः।

२. गास्ट्रसंशोधितः पाठः। 'भवतो' इति कोशेषु पाठः।

३. गास्ट्रसंशोधितः पाठः। 'उपसत्सुः' इति कोशेषु पाठः।

४. 'ता एव तद् देवं देवता यजन्ते' इति पाठोऽप्यत्र स्यात्?

५. 'यदतिरात्रमुपयन्ति' इति पाठोऽत्र सम्भाव्यते गास्ट्रेण (अपि द्र०-१।४।७)।

कामो देवो देवता भवन्ति । कामस्य देवस्य सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति । अथ यदुदवसानीयया यजन्ते, स्वर्गमेव तल्लोकं देवं देवतां यजन्ते । स्वर्गो लोको देवो देवता भवन्ति । स्वर्गस्य लोकस्य देवस्य सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति । तद् वा एतदग्निष्टोमस्य जन्म । स य एवमेतदग्निष्टोमस्य जन्म वेद, आप्त्वैव तदग्निष्टोमं स्वर्गे लोके प्रतितिष्ठति[1] । प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद । अग्निष्टोमेन सात्मा सलोको भूत्वा देवानप्येतीति ब्राह्मणम् ॥८॥[2]

अहोरात्राभ्यां वै देवाः प्रायणीयमतिरात्रं निरमिमत, अर्धमासेभ्य-श्चतुर्विंशमहः, ब्रह्मणो ऽभिप्लवं, क्षत्रात् पृष्ठ्यम्, अग्नेरभिजितम्, अद्भ्यः स्वरसाम्नः,[3] सूर्याद् विषुवन्तम्, उक्ता आवृत्ताः स्वरसामानः, इन्द्राद् विश्वजितम्, उक्तौ पृष्ठ्याभिप्लवौ, मित्रावरुणाभ्यां गवायुषी, विश्वेभ्यो देवेभ्यो दशरात्रं, दिग्भ्यो दाशरात्रिकं पृष्ठ्यं षडहम्, एभ्यो लोकेभ्य-श्छन्दोमं त्र्यहं, संवत्सराद् दशममहः, प्रजापतेर्महाव्रतं, स्वर्गाल्लोकादुद-यनीयमतिरात्रम् । तद् वा एतत् संवत्सरस्य जन्म । स य एवमेतत् संवत्सरस्य जन्म वेद, संवत्सरेण सात्मा सलोको भूत्वा देवानप्येतीति ब्राह्मणम् ॥९॥[4]

अथ यत् प्रायणीयमतिरात्रमुपयन्ति, अहोरात्रावेव तद् देवौ देवते यजन्ते[5] । अहोरात्रौ देवौ देवते भवन्ति[6] । अहोरात्रयोर्देवयोः सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति । अथ यच्चतुर्विंशमहरुपयन्ति, अर्धमा-सानेव तद् देवान् देवता यजन्ते । अर्धमासा देवा देवता भवन्ति । अर्ध-मासानां देवानां सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति । अथ यद-

---

१. गास्ट्रसंशोधितः पाठः । 'प्रतिष्ठति' इति कोशेषु पाठः ।

२. तु०—शत० ब्रा० १२।१।३।१-७॥

३. गास्ट्रसंशोधितः पाठः । 'स्वरसामानः' इति कोशेषु पाठः ।

४. तु०—शत० ब्रा० १२।१।२।२,३॥

५. 'यजतः' इति कोशेषु पाठः । ६. 'भवतः' इति कोशेषु पाठः ।

भिप्लवमुपयन्ति, ब्रह्माणमेव तद् देवं देवतां यजन्ते। ब्रह्मा देवो देवता भवन्ति। ब्रह्मणो देवस्य सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। अथ यत् पृष्ठ्यमुपयन्ति, क्षत्रमेव तद् देवं देवतां यजन्ते। क्षत्रं देवो देवता भवन्ति[१]। क्षत्रस्य देवस्य सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। अथ यदभिजितमुपयन्ति, अग्निमेव तद् देवं देवतां यजन्ते। अग्निर्देवो देवता भवन्ति[१]। अग्नेर्देवस्य सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। अथ यत् स्वरसाम्न उपयन्ति, अप एव तद् देवीर्देवता यजन्ते। आपो देव्यो देवता भवन्ति! अपां देवीनां सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। अथ यद् विषुवन्तमुपयन्ति, सूर्यमेव तद् देवं देवतां यजन्ते। सूर्यो देवो देवता भवन्ति[१]। सूर्यस्य देवस्य सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। उक्ता आवृत्ताः स्वरसामानः। अथ यद् विश्वजितमुपयन्ति, इन्द्रमेव तद् देवं देवतां यजन्ते। इन्द्रो देवो देवता भवन्ति। इन्द्रस्य देवस्य सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। उक्तौ पृष्ठ्याभिप्लवौ। अथ यद् गवायुषी उपयन्ति, मित्रावरुणावेव तद् देवौ देवते यजन्ते[२]। मित्रावरुणौ देवौ देवते भवन्ति[३]। मित्रावरुणयोर्देवयोः सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। अथ यद् दशरात्रमुपयन्ति, विश्वानेव तद् देवान् देवतां[४] यजन्ते। विश्वे देवा देवता भवन्ति। विश्वेषां देवानां सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। अथ यद् दाशरात्रिकं पृष्ठ्यं षडहमुपयन्ति, दिश एव तद् देवीर्देवता यजन्ते। दिशो देव्यौ देवता भवन्ति। दिशां देवीनां सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। अथ यच्छन्दोमं त्र्यहमुपयन्ति, इमानेव तल्लोकान् देवान् देवता यजन्ते। इमे लोका देवा देवता भवन्ति। एषां लोकानां देवानां सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। अथ यद् दशममहरुपयन्ति,

१. गास्ट्रसंशोधितः पाठः। कोशेषु 'भवति' इत्येव।
२. कोशेषु 'यजतः' इति पाठः।
३. कोशेषु 'भवतः' इति पाठः।
४. कोशेषु 'देवतां' इति पाठः।

संवत्सरमेव तद् देवं देवतां यजन्ते। संवत्सरो देवो देवता भवन्ति[1]। संवत्सरस्य देवस्य सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। अथ यद् महाव्रतमुपयन्ति, प्रजापतिमेव तद् देवं देवतां यजन्ते। प्रजापतिर्देवो देवता भवन्ति[1]। प्रजापतेर्देवस्य सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। अथ यदुदयनीयमतिरात्रमुपयन्ति, स्वर्गमेव तल्लोकं देवं देवतां यजन्ते। स्वर्गो लोको देवो देवता भवन्ति[1]। स्वर्गस्य लोकस्य देवस्य सायुज्यं सलोकतां यन्ति, य एतदुपयन्ति। तद् वा एतत् संवत्सरस्य जन्म। स य एवमेतत् संवत्सरस्य जन्म वेद, आप्त्वैव तत् संवत्सरं स्वर्गे लोके प्रतितिष्ठति[2]। प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद। संवत्सरेण सात्मा सलोको भूत्वा देवानप्येतीति ब्राह्मणम् ॥१०॥[3]

स वा एष संवत्सरो ऽधिदैवं चाध्यात्मं च प्रतिष्ठितः। स य एवमेतत् संवत्सरमधिदैवं चाध्यात्मं च प्रतिष्ठितं वेद, प्रतितिष्ठति[2]। प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद[4] ॥११॥[5]

स वा एष संवत्सरो बृहतीमभिसंपन्नः। द्वावक्षरावह्नां षडहौ द्वौ पृष्ठ्याभिप्लवौ। गवायुषी दशरात्रः। तथा खलु षट्त्रिंशत् संपद्यन्ते। षट्त्रिंशदवदाना गौः। षट्त्रिंशदक्षरा बृहती। बार्हतो वै स्वर्गो लोकः। बृहत्या वै देवाः स्वर्गे लोके यजन्ते। बृहत्या स्वर्गे लोके प्रतितिष्ठति[2]। प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद ॥१२॥[6]

स वा एष संवत्सरस्त्रिमहाव्रतः। चतुर्विंशे[7] महाव्रतं विषुवति महा-

१. कोशेषु 'भवति' इति पाठः।

२. गास्ट्रसंशोधितः पाठः। कोशेषु 'प्रतिष्ठति' इति पाठः।

३. तु०—शत० ब्रा० १२।१।३।८—२२।।

४. कोशेषु 'स वा एष संवत्सरः' इत्यधिकः पाठोऽत्राग्रिमासु च कण्डिकासूपलभ्यते।

५. तु०—शत० ब्रा० १२।१।४।३।।

६. तु०—शत० ब्रा० १२।२।३।१।।

७. गास्ट्रसंशोधितः पाठः। 'चतुर्विंशेन' इति कोशेषु पाठः।

व्रतं महाव्रत एव महाव्रतम् । तं ह स्मैतमेवं विद्वांसः पूर्वे त्रिमहाव्रतमुपयन्ति । ते तेजस्विन आसन् सत्यवादिनः संशितव्रताः । य एनमद्य तथोपेयुर्यथामपात्रमुदक आसिक्ते निर्मृत्येद्[1] एवं यजमाना निर्मृत्येरन्,[1] उपर्युपयन्ति । तथा हास्य सत्येन तपसा व्रतेन चाभिजितमवरुद्धं भवति य एवं वेद ॥१३॥[2]

अथ यच्चतुर्विंशमहरुपेत्यानुपेत्य विषुवन्तं महाव्रतमुपेयात्, कथमनागूर्त्यै[1] भवतीति ? यमेवामुं पुरस्ताद् विषुवतो ऽतिरात्रमुपयन्ति, तेनेति ब्रूयात् । अभिप्लवात् पृष्ठ्यो निर्मितः । पृष्ठ्यादभिजित् । अभिजितः स्वरसामानः । स्वरसामभ्यो विषुवान् । विषुवतः स्वरसामानः । स्वरसामभ्यो विश्वजित् । विश्वजितः पृष्ठ्याभिप्लवौ । पृष्ठ्याभिप्लवाभ्यां गवायुषी । गवायुर्भ्यां दशरात्रः । दशरात्राद्[4] महाव्रतम् । महाव्रताडुदयनीयो ऽतिरात्रः । उदयनीयो ऽतिरात्रः स्वर्गाय लोकायान्नाद्याय प्रतिष्ठित्यै ॥१४॥[5]

अथ यच्चतुर्विंशमहरुपेत्यानुपेत्य विषुवन्तं महाव्रतमुपेयात्, कथमनागूर्त्यै[3] भवतीति ? यमेवामुं पुरस्ताद् विषुवतो ऽतिरात्रमुपयन्ति, तेनेति ब्रूयात् । अभिप्लवात् पृष्ठ्यो निर्मितः । पृष्ठ्यादभिजित् । अभिजितः स्वरसामानः । स्वरसामभ्यो विषुवान् । विषुवतः स्वरसामानः । स्वरसामभ्यो विश्वजित् । विश्वजितः पृष्ठ्याभिप्लवौ । पृष्ठ्याभिप्लवाभ्यां गवायुषी । गवायुर्भ्यां दशरात्रः । अथ ह देवेभ्यो महाव्रतं न तस्थे कथमूर्ध्वं स्तोमैर्विषुवन्तमुपागातावृत्तैर्मामिति[6] ? ते देवा इहसामिवासुः[7] उप तं यज्ञक्रतुं

१. गास्ट्रसंशोधितः पाठः । 'निमृज्ये' इति कोशेषु । 'विम्रित्ये०' इति शतपथब्राह्मणे (१२ १।३।२३)। २. तु०—शत० ब्रा० १२.१।३।२३।।

३. गास्ट्रसंशोधितः पाठः । 'अनाकूत्यै' इति कोशेषु पाठः । तु०—शत० ब्र० १२।२।३।५।।

४. " " " । 'दशरात्राय' " " " । तु० —गो० ब्रा० १।४।२२

५. तु०—शत० ब्रा० १२।२।३।२—५।।

६. गास्ट्रसंशोधितः पाठः । 'पागातां वृत्तै—' इति कोशेषु पाठः ।।

७. सन्दिग्धः पाठः । तु०—'ते ह देवा ऊचुः' (शत० ब्रा० १२।२।३।६) ।

जानीमो, य ऊर्ध्वस्तोमो, येनैतदहरवाप्नुयामेति । तत एतं द्वादशरात्रमूर्ध्वस्तोमं ददृशुः । तमाहरन् । तेनायजन्त । तत एभ्यो ऽतिष्ठन् । तिष्ठति हास्मै महाव्रतम् । प्रतितिष्ठति[1] । प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद ।।१५।।[2]

अथ यच्चतुर्विंशमहरुपेत्यानुपेत्य विषुवन्तं महाव्रतमुपेयात्, कथमनागूर्त्यं[3] भवतीति ? यमेवामुं पुरस्ताद् विषुवतो ऽतिरात्रमुपयन्ति तेनेति, ब्रूयात् । तदाहुः—कति संवत्सरस्य पराञ्च्यहानि भवन्ति कत्यर्वाञ्चि ? तद् यानि सकृत् सकृदुपयन्ति, तानि पराञ्चि । अथ यानि पुनः पुनरुपयन्ति, तान्यर्वाञ्चीत्येव । एनान्युपासीरन् । षडहयोर्ह्यावृत्तिमन्वावर्तन्ते ।।१६।।

अथ यच्चतुर्विंशमहरुपेत्यानुपेत्य विषुवन्तं महाव्रतमुपेयात्, कथमनागूर्त्यं[3] भवतीति ? यमेवामुं पुरस्ताद् विषुवतो ऽतिरात्रमुपयन्ति, तेनेति ब्रूयात् । अभिप्लवं पुरस्ताद् विषुवतः पूर्वमुपयन्ति, पृष्ठ्यमुपरिष्टात् । पिता वा अभिप्लवः, पुत्रः पृष्ठ्यः । तस्मात् पूर्वे वयसि पुत्राः पितरमुपजीवन्ति । पृष्ठ्यं पश्चाद् विषुवतः पूर्वमुपयन्ति, अभिप्लवमुपरिष्टात् । पिता वा अभिप्लवः, पुत्रः पृष्ठ्यः । तस्मादुत्तमे वयसि पुत्रान् पितोपजीवति य एवं वेद । तदप्येतदृचोक्तम्—

शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ।
पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः[4] ॥ इति ।

उप ह वा एनं पूर्वे वयसि पुत्राः पितरमुपजीवन्ति, उपोत्तमे वयसि पुत्रान् पितोपजीवति य एवं वेद ।।१७।।[5]

---

१. गा० सं० । 'प्रतिष्ठति' इति कोशेषु पाठः ।

२. तु०—शत० ब्रा० १२।२।३।२,८,९।।

३. द्र० पृ० ६७, टि० ३ ।

४. ऋ० १।८९।९।।

५. तु०—शत० ब्रा० १२।२।३।४।।

अथ हृष महासुपर्णः। तस्य यान् पुरस्ताद् विषुवतः षण्मासानुपयन्ति, स दक्षिणः पक्षः। अथ यानावृत्तानुपरिष्टात् षडुपयन्ति, स उत्तरः पक्षः। आत्मा वै संवत्सरस्य विषुवानङ्गानि पक्षौ। यत्र वा आत्मा तत् पक्षौ। यत्र वै पक्षौ तदात्मा। न वा आत्मा पक्षावतिरिच्यते[1]। नो पक्षावात्मानमतिरिच्येते[1] इति। एवमु हैव तदपरेषां स्विदितमह्नां[1] परेषामिति। अपरेषां चैव परेषां चेति ब्रूयात् ॥१८॥[4]

तदाहुः—यद् द्वादश मासाः संवत्सरो ऽथ हैतदहरवाप्नुयामेति। यद् वैषुवतमपरेषां स्विदितमह्नां[3] परेषामिति। अपरेषां चैव परेषां चेति ब्रूयात्। आत्मा वै संवत्सरस्य विषुवानङ्गानि मासाः[5]। यत्र वा आत्मा तदङ्गानि, यत्राङ्गानि तदात्मा। न वा आत्माङ्गान्यतिरिच्यते, नो ऽङ्गान्यात्मानमतिरिच्यन्त इति। एवमु हैव तदपरेषां स्विदितमह्नां[3] परेषामिति। अपरेषां चैव परेषां चेति ब्रूयात्। स वा एष संवत्सरः ॥१९॥[6]

तदाहुः—कथमुभयतोज्योतिषो ऽभिप्लवा अन्यतरतोज्योतिः पृष्ठ्य इति? उभयतोज्योतिषो वा इमे लोका अग्निनेत आदित्येनामुत इति। एष ह वा एतेषां ज्योतिर्य एनं[7] प्रमृदीव[7] तपति। देवचक्रे ह वा एते पृष्ठ्यप्रतिष्ठिते पाप्मानं तृंहती परिप्लवेते। तद् य एवं विदुषां दीक्षितानां पापकं कीर्तयेद्, एते[8] एवास्य तद् देवचक्रे शिरश्छिन्तः[9]। दशरात्र[10] उद्धिः। पृष्ठ्याभिप्लवौ चक्रे दशरात्रमुद्धि पृष्ठ्याभिप्लवौ चक्रे तन्त्रं कुर्वीतेति ह स्माह वास्युः। तयो स्तोत्राणि च शस्त्राणि च संचारयेत्।

---

१. शास्त्रसंशोधितः पाठः। 'अतिरिच्येते' इति कोशेषु पाठः।
२. " " "। 'अतिरिच्यन्ते' इति " "।
३. भ्रष्टः पाठः? ४. तु०—शत० ब्रा०१२।२.३।७॥
५. शास्त्रसंशोधितः पाठः। 'मासौ' इति कोशेषु पाठः।
६. तु०—शत० ब्रा० २।२।३।६॥
७. सन्दिग्धः पाठः।
८. 'कीर्तयदेते' इति शास्त्रपाठः। 'कीर्तयेदेत' 'कीर्तयेदेव' इति कोशेषु।
९. संशोधितः पाठः। 'छिन्दतः' इति सार्वत्रिकः पाठः।
१०. संशोधितः पाठः। 'दशरात्रम्' इति सार्वत्रिकः पाठः।

यः संचारयेत्, तस्मादिमे पुरुषे प्राणा नाना सन्त एकोदयाच्छरीरमधिवसति, यद् न संचारयेत् प्रमायुको ह यजमानः स्यात् । एष ह वै प्रमायुकः, यो ऽन्धो वा बधिरो वा । नवाग्निष्टोमा मासि संपद्यन्ते । नव वै प्राणाः । प्राणैर्यज्ञस्तायते । एकविंशतिरुक्थ्याः । एक उक्थ्यः षोडशी । अन्नं वा उक्थ्यो, वीर्यं षोडश्येव । तथा[1] रूढ्वा स्वर्गं लोकमध्यारोहन्ति ॥२०॥[2]

अथातो ऽह्नामध्यारोहः । प्रायणीयेनातिरात्रेणोदयनीयमतिरात्रमध्यारोहन्ति, चतुर्विंशेन महाव्रतम्, अभिप्लवेन परमभिप्लवं, पृष्ठ्येन परं पृष्ठ्यम्, अभिजिताभिजितं, स्वरसामभिः परान्त्स्वरसामानः । अथैतदहरवाप्नुयामेति यद् वैषुवतमपरेषां स्विदितमह्नां[3] परेषामिति । अपरेषां चैव परेषां चेति ब्रूयात् । स वा एष संवत्सरः ॥२१॥[4]

अथातो ऽह्नां निवाहः । प्रायणीयो ऽतिरात्रश्चतुर्विंशायाह्ने निवहति, चतुर्विंशमहरभिप्लवाय, अभिप्लवः पृष्ठ्याय, पृष्ठ्यो ऽभिजिते, अभिजित् स्वरसामभ्यः, स्वरसामानो विषुवते, विषवान्त्स्वरसामभ्यः, स्वरसामानो विश्वजिते, विश्वजित् पृष्ठ्याभिप्लवाभ्यां, पृष्ठ्याभिप्लवौ गवायुर्भ्यां, गवायुषी दशरात्राय, दशरात्रो महाव्रताय, महाव्रतमुदयनीयायातिरात्राय, उदयनीयो ऽतिरात्रः स्वर्गाय लोकायान्नाद्याय प्रतिष्ठित्यै ॥२२॥[5]

आदित्याश्च ह वा अङ्गिरसश्च स्वर्गे लोके ऽस्पर्धन्त—वयं पूर्वे स्वरेष्यामो, वयं पूर्व इति । त आदित्या लघुभिः सामभिश्चतुर्भि स्तोमैर्द्वाभ्यां पृष्ठ्याभ्यां स्वर्गं लोकमभ्यप्लवन्त । यदभ्यप्लवन्त तस्मादभिप्लवः । अन्वञ्च एवाङ्गिरसो गुरुभिः सामभिः सर्वैं स्तोमैः सर्वैः पृष्ठ्यैः स्वर्गं लोकमभ्यस्पृशन्त । यदभ्यस्पृशन्त तस्मात् स्पृश्यः[6] । तं वा

१. गास्ट्रसंशोधितः पाठः । 'तया' इति कोशेषु पाठः ।

२. तु०—शत० ब्रा० १२।२।२।१—६।।शातपथीं श्रुतिमभिसमीक्ष्य, इहानेकः पाठो भ्रष्टः प्रतीयते । ३ द्र—पृ० ६६ टि० ३ ४. तु०—शत० ब्रा० १२।२।३।१०।।

५. तु०—शत० ब्रा० १२।२।३।११।।

६. गास्ट्रसंशोधितः पाठः । 'पृश्यः' इति प्रायेण कोशेषु पाठः ।

एतं स्पृश्यं सन्तं पृष्ठ्य इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः । अभिप्लवात् पृष्ठ्यो निर्मितः, पृष्ठ्याद-भिजित्, अभिजितः स्वरसामानः, स्वरसामभ्यो विषुवान्, विषुवतः स्वरसामानः, स्वरसामभ्यो विश्वजित्, विश्वजितः पृष्ठ्याभिप्लवौ, पृष्ठ्याभिप्लवाभ्यां गवायुषी, गवायुर्भ्यां दशरात्रः । तानि ह वा एतानि यज्ञारण्यानि यज्ञकृन्तत्राणि[1] । तेषां शतं शतं रथानान्यन्तरं[2] तद् यथारण्यान्यारूढा अशनापिपासे ते पाप्मानं तृंहती[3] परिप्लवेते, एवं हैवैते प्रप्लवन्ते ये ऽविद्वांस उपयन्ति । अथ ये विद्वांस उपयन्ति तद् यथा प्रवाहात् प्रवाहं स्थलात् स्थलं समात् समं सुखात् सुखमभयादभयमुप-संक्रामन्तीति, एवं हैवैते संवत्सरस्योदृचं समश्नवामहा इति ब्राह्मणम् ॥२३॥[4]

प्रोदिहं वै कौशाम्बेयः कौसुरुबिन्दुरुद्दालक आरुणौ ब्रह्मचर्यमुवास[5] । तमाचार्यः पप्रच्छ—कुमार कति ते पिता संवत्सरस्याहान्यमन्यतेति ? कति[6] त्वेवेति[6] ? दशेति होवाच । दश वा इति होवाच । दशाक्षरा वि-राड्, वैराजो यज्ञः । कति त्वेवेति ? नवेति होवाच । नव वा इति होवाच । नव वै प्राणाः, प्राणैर्यज्ञस्तायते । कति त्वेवेति ? अष्टेति होवाच । अष्टौ वा इति होवाच । अष्टाक्षरा गायत्री, गायत्रो यज्ञः । कति त्वेवेति ? सप्तेति होवाच । सप्त वा इति होवाच । सप्त छन्दांसि, छन्दोभिर्यज्ञस्तायते । कति त्वेवेति ? षडिति होवाच । षड् वा इति होवाच । षड् वा ऋतवः, ऋतूनामाप्त्यै । कति त्वेवेति ? पञ्चेति होवाच । पञ्च वा इति होवाच । पञ्चपदा पङ्क्तिः, पाङ्क्तो यज्ञः ।

१. 'यज्ञकृत्तन्त्राणि' इति रा० पाठः । 'यज्ञकृन्तत्राणि', 'यज्ञक्षत्राणि' इति पाठभेदौ शतपथ ब्राह्मणे (१२।२।३।१२) ।

२. 'रथानां न्यन्तरं' इति रा० पाठः । 'रथाह्न्यान्यन्तरेण' इति पाठः शतपथ-ब्राह्मणे (१२।२।३।१२)।

३. गास्त्रसंशोधितः पाठः । 'दृंहती' इति पाठः कोशेषु ।

४. तु०—शत० ब्रा० १२।२।२।६— ११॥१२।२।३।२, १२॥

५. गास्त्रसंशोधितः पाठः, (शत० ब्रा० १२।२।२।१३) । 'उवाच' इति पाठः कोशेषु ।

६. अयं पाठः शतपथब्राह्मणे (१२।२।२।१३) न श्रूयते।

कति त्वेवेति ? चत्वारीति होवाच । चत्वारि वा इति होवाच । चत्वारो वै वेदाः, वेदैर्यज्ञस्तायते । कति त्वेवेति ? त्रीणीति होवाच । त्रीणि वा इति होवाच । त्रिषवणो वै यज्ञः, सवनैर्यज्ञस्तायते । कति त्वेवेति ? द्वे इति होवाच । द्वे वा इति होवाच । द्विपाद् वै पुरुषः । द्विप्रतिष्ठः पुरुषः, पुरुषो वै यज्ञः । कति त्वेवेति ? एकमिति होवाच । एकं वा इति होवाच । अहरहरित्येव सर्वं संवत्सरम् ॥२४॥[1]

॥इत्यथर्ववेदे गोपथब्राह्मणपूर्ववागे चतुर्दः प्रपाठकः ॥

---

१. तु०—शत० ब्रा० १२।२।२।१३—२३

# पञ्चमः प्रपाठकः

ओम् । अभिप्लवः षडहः । षड्ध्यहानि भवन्ति—ज्योतिर्गौरायुर्गौरायुर्ज्योतिः । अभिप्लवः पञ्चाहः । पञ्च ह्येवाहानि भवन्ति । यद् ध्येव प्रथममहस्तदुत्तममहः । अभिप्लवश्चतुरहः । चत्वारो हि स्तोमा भवन्ति—त्रिवृत् पञ्चदशः सप्तदश एकविंश एव । अभिप्लवस्त्र्यहः, त्र्यावृत्तिः[1] —ज्योतिर्गौरायुः । अभिप्लवो द्व्यहः । द्वे ह्येव सामनी भवतो बृहद्रथंतरे एव । अभिप्लव एकाहः । एकाहस्य हि[2] स्तोमैस्तायते । चतुर्णामुक्थ्यानां द्वादश स्तोत्राण्यतिरिच्यन्ते । स सप्तमो ऽग्निष्टोमः । तथा खलु सप्ताग्निष्टोमा मासि संपद्यन्त इति ब्राह्मणम् ॥१॥[3]

अथातो गाधप्रतिष्ठा । समुद्रं वा एते प्रतरन्ति ये संवत्सराय दीक्षन्ते । तेषां तीर्थमेव प्रायणीयो ऽतिरात्रः । तीर्थेन हि प्रतरन्ति । तद् यथा समुद्रं तीर्थेन प्रतरेयुस्तादृक् तत् । गाधं प्रतिष्ठा चतुर्विंशमहः, यथोपकक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्य प्रस्नायेयुस्तादृक् तत् । प्रस्नेयो ऽभिप्लवः । प्रस्नेयः पृष्ठ्यः । गाधं प्रतिष्ठाभिजिद्, यथोपकक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्य प्रस्नायेयुस्तादृक् तत् । नीविदघ्न एव प्रथमः स्वरसामा, जानुदघ्नो द्वितीयः, कुल्फदघ्नस्तृतीयः । द्वीपः[4] प्रतिष्ठा विषुवान्, यथोपकक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्य प्रस्नायेयुस्तादृक् तत् । कुल्फदघ्न एव प्रथमो ऽर्वाक्स्वरसामा, जानुदघ्नो द्वितीयः, नीविदघ्नस्तृतीयः । गाधं प्रतिष्ठा विश्वजिद्, यथोपकक्षदघ्नं वा कण्ठदघ्नं वा

---

१. 'त्र्यावृद्धि' इति शातपथः पाठः (१२।२।२।१२) ।
२. गास्त्रुपरिवर्धितः पाठः ।
३. तु०—शत० ब्रा० १२।२।२।१२॥
४. गास्त्रसंशोधितः पाठः । 'दीपः' इति पाठः कोशेषु ।

यतो विश्रम्य प्रस्नायेयुस्तादृक् तत् । प्रस्नेयः पृष्ठ्यः, प्रस्नेयो ऽभिप्लवः, प्रस्नेये[1] गवायुषी, प्रस्नेयो दशरात्रः । गाधं प्रतिष्ठा महाव्रतं, यथोपकक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्य प्रस्नायेयुस्तादृक् तत् । तेषां तीर्थमेवोदयनीयो ऽतिरात्रः । तीर्थेन ह्युद्यन्ति । तद् यथा समुद्रं तीर्थेनोदेयुस्तादृक् तत् । अथ ह स्माह श्वेतकेतुरारुणेयः—संवत्सराय[2] न्वहं दीक्षा इति । तस्य ह पिता मुखमुदीक्ष्योवाच—वेत्थ[3] नु[3] त्वमायुष्मन्[3] संवत्सरस्य गाधप्रतिष्ठे इति । वेदेति । एतद्ध स्मैतद् विद्वानाहेति ब्राह्मणम् ॥२॥[4]

पुरुषो वाव संवत्सरः । तस्य पादावेव प्रायणीयो ऽतिरात्रः । पादाभ्यां हि प्रयन्ति । तयोर्यच्छुक्लं तदह्नो रूपं, यत् कृष्णं तद् रात्रेः । नखानि नक्षत्राणां रूपं, लोमान्योषधिवनस्पतीनाम् । ऊरू चतुर्विंशमहः, उरो ऽभिप्लवः, पृष्ठं[5] पृष्ठ्यः । शिर एव त्रिवृत्, त्रिवृतं ह्येव शिरो भवति त्वगस्थि मज्जा मस्तिष्कम्[6] । ग्रीवाः पञ्चदशः । चतुर्दश ह्येवैतस्यां करूकराणि भवन्ति । वीर्यं पञ्चदशम् । तस्मादाभिरण्वीभिः[7] सतीभिर्गुरुं भारं हरति । तस्माद् ग्रीवाः पञ्चदशः । उरः सप्तदशः । अष्टावन्ये जत्रवो ऽष्टावन्ये, उरः सप्तदशम् । तस्मादुरः सप्तदशः । उदरमेकविंशः । विंशतिर्ह्येवैतस्यान्तर उदरे कुन्तापानि भवन्त्युदरमेकविंशम् । तस्मादुदरमेकविंशः । पार्श्वे त्रिणवः । त्रयोदशान्याः पर्शवस्त्रयोदशान्याः, पार्श्वे त्रिणवे । तस्मात् पार्श्वे त्रिणवः । अनूकं त्रयस्त्रिंशः ।

---

१. गास्ट्रसंशोधितः पाठः । 'प्रस्नेयो' इति कोशेषु पाठः ।
२. गास्ट्रसंशोधितः पाठः । 'संवत्सरस्या', 'संवत्सरस्यां' इति पाठौ कोशेषु ।
३. गास्ट्रपाठः । 'सुत त्वमायुष्मान्' इति रा० पाठः ।
४. तु०—शत० ब्रा० १२।२।१।१ | ५,६ ॥
५. गास्ट्रपरिवर्धितः पाठः । 'पृष्ठ्य' इति पुणे-कोशयोः पाठः ।
६. तु०—शतपथः (१२।२।४।६) पाठः—'शिर एवास्य त्रिवृत् । तस्मात् तत् त्रिविधं भवति त्वगस्थि मस्तिष्कः' इति ।
७. गास्ट्रपाठः । 'तस्मादियमाभिरण्वीभिः' इति कोशेषु पाठः ।

द्वात्रिंशद् ध्येवैतस्य[1] पृष्टीकुण्डीलानि[2] भवन्ति, अनूकं त्रयस्त्रिंशम् । तस्मादनूकं त्रयस्त्रिंशः । तस्यायमेव दक्षिणो बाहुरभिजित् । तस्येमे दक्षिणे त्रयः प्राणाः स्वरसामानः । आत्मा विषुवान् । तस्येमे सव्ये त्रयः प्राणा अर्वाक्स्वरसामानः । तस्यायं सव्यो बाहुर्विश्वजित् । उक्तौ पृष्ठ्याभिप्लवौ । यावर्वाञ्चौ प्राणौ ते[3] गवायुषी । अङ्गानि दशरात्रः । मुखं महाव्रतम् । तस्य हस्तावेवोदयनीयो ऽतिरात्रः । हस्ताभ्यां ह्यु-द्यन्ति[4] ।।३।।[5]

पुरुषो वाव संवत्सरः । तस्य प्राण एव प्रायणीयो ऽतिरात्रः । प्राणेन हि प्रयन्ति । वागारम्भणीयमहः । यद् यदारभते, वागारभते । वाचैव तदारभते । तस्यायमेव दक्षिणः पाणिरभिप्लवः । तस्येदं प्रातः-सवनमिदं माध्यंदिनं सवनमिदं तृतीयसवनम् । गायत्र्या आयतने । तस्मादियमस्यै[6] ह्रसिष्ठा । तस्येदं प्रातःसवनमिदं माध्यंदिनं सवन-मिदं तृतीयसवनम् । त्रिष्टुभ आयतने । तस्मादियमस्यै[6] वरिष्ठा । तस्येदं प्रातःसवनमिदं माध्यंदिनं सवनमिदं तृतीयसवनम् । जगत्या आयतने । तस्मादियमनयोर्वरिष्ठा । तस्येदं प्रातःसवनमिदं माध्यंदिनं सवनमिदं तृतीयसवनम् । पङ्क्त्या आयतने । पृथुरिव वै पङ्क्तिः । तस्मा-दियमासां प्रथिष्ठा[7] । तस्येदं प्रातःसवनमिदं माध्यंदिनं सवनमिदं तृतीयसवनम् । विराज आयतने । अन्नं वै श्रीः, विराडन्नाद्यम्[8] । अन्ना-द्यस्य श्रियो ऽवरुद्धय[9] । तस्मादियमासां वरिष्ठा । तस्येदं प्रातःसवन-मिदं माध्यंदिनं सवनमिदं तृतीयसवनम् । अतिछन्दस आयतने । अति-

---

१. संशोधितः पाठः । 'द्वात्रिंशतिह्यवैतस्य' इति कोशेषु पाठः ।
२. सन्दिग्धः पाठः ! 'करूकराणि' इति शत० ब्रा० (१२।२।४।१४) पाठः ।
३. गास्ट्रसंशोधितः पाठः । 'तौ' इति कोशेषु पाठः ।
४. 'य एवं वेद स वा एष संवत्सरः' इत्यधिकः पाठो रा० संस्करणे पुणे-कोशयोश्च ।
५. तु०—शत० ब्रा० १२।१।४।१।। १२।२।४।६—१४।।१२।१।४।२—३।।
६. 'आसाम्' इति पाठोऽत्र युक्तः स्यात् ?
७. गास्ट्रपाठः । 'प्रतिष्ठा' इति कोशेषु पाठः ।
८. गास्ट्रपरिवर्धितः पाठः । 'विराडन्नाद्यस्य' इति कोशेषु पाठः ।

छन्दो वै छन्दसामायतनम् । तस्मादिदं प्रथिष्ठं[1] फलकम् । तस्येदं प्रातःसवनमिदं माध्यंदिनं सवनमिदं तृतीयसवनम् । स[2] इतः[2] स[2] इतो[2]ऽभिप्लवः स[3] इत[3] आत्मा पृष्ठ्यः । प्लवतीवाभिप्लवः । तिष्ठतीव पृष्ठ्यः । प्लवत इव ह्येवमङ्गैः । तिष्ठतीवात्मना । तस्यायमेव दक्षिणः कर्णो ऽभिजित् । तस्य यद् दक्षिणमक्ष्णः शुक्लं स प्रथमः स्वरसामा, यत् कृष्णं स द्वितीयः, यद् मण्डलं स तृतीयः । नासिके विषुवान् । मण्डलमेव प्रथमो ऽर्वाक्स्वरसामा, यत् कृष्णं स द्वितीयः, यच्छुक्लं स तृतीयः । तस्यायं सव्यः कर्णो विश्वजित् । उक्तौ पृष्ठ्याभिप्लवौ । यावञ्चौ प्राणौ ते गवायुषी । अङ्गानि दशरात्रः । मुखं महाव्रतम् । तस्योदान एवोदयनीयोऽतिरात्रः । उदानेन ह्युद्यन्ति[4] ॥४॥[5]

पुरुषो वाव संवत्सरः । पुरुष इत्येकम् । संवत्सर[6] इत्येकम्[6] । अत्र तत् समम् । द्वे अहोरात्रे संवत्सरस्य । द्वाविमौ पुरुषे प्राणाविति । अत्र तत् समम् । त्रयो वा ऋतवः संवत्सरस्य । त्रय इमे पुरुषे प्राणा इति । अत्र तत् समम् । षड् वा ऋतवः संवत्सरस्य । षडिमे पुरुषे प्राणा इति । अत्र तत् समम् । सप्त वा ऋतवः संवत्सरस्य । सप्तेमे पुरुषे प्राणा इति । अत्र तत् समम् । द्वादश मासाः संवत्सरस्य । द्वादशेमे पुरुषे प्राणा इति । अत्र तत् समम् । त्रयोदश मासाः संवत्सरस्य । त्रयोदशेमे पुरुषे प्राणा इति । अत्र तत् समम् । चतुर्विंशतिरर्धमासाः संवत्सरस्य । चतुर्विंशो ऽयं पुरुषः । विंशत्यङ्गुलिश्चतुरङ्ग इति । अत्र तत् समम् । षड्विंशतिरर्धमासाः संवत्सरस्य । षड्विंशो ऽयं पुरुषः, प्रतिष्ठे षड्विंशे इति । अत्र तत् समम् । त्रीणि च ह वै शतानि षष्टिश्च संवत्सरस्याहोरात्रा-

---

१. 'प्रतिष्ठं' इति कोशेषु पाठः ।
२. गास्ट्रसंशोधितः पाठः । 'सैतः सैतो' इति कोशेषु पाठः ।
३. ,, ,, ,, । 'सैत' इति कोशेषु पाठः ।
४. 'य एवं वेद स वा एष संवत्सरः' इत्यधिकः पाठो रा० संस्करणे पुणे-कोशयोश्च ।
५. तु०—शत० ब्रा० १२।२।४।१—८, १५-१६॥
६. गास्ट्रसंशोधितः पाठः । 'संवत्सरमित्येक इति' इति कोशेषु पाठः ।

णीति । एतावन्त एव पुरुषस्य प्राणा इति । अत्र तत् समम् । सप्त च ह वै शतानि विंशतिश्च संवत्सरस्याहानि च रात्रयश्चेति । एतावन्त एव पुरुषस्यास्थीनि च मज्जानश्चेति । अत्र तत् समम् । चतुर्दश च ह वै शतानि चत्वारिंशच्च संवत्सरस्यार्धाहाश्चार्धरात्रयश्चेति । एतावन्त एव पुरुषस्य स्थूरा मांसानीति । अत्र तत् समम् । अष्टाविंशतिश्च ह वै शतान्यशीतिश्च संवत्सरस्य पादाहाश्च पादरात्रयश्चेति । एतावन्त एव पुरुषस्य स्नावा बन्ध्या इति । अत्र तत् समम् । दश च ह वै सहस्राण्यष्टौ च शतानि संवत्सरस्य मुहूर्ता इति । एतावन्त एव पुरुषस्य पेशशमरा[1] इति । अत्र तत् समम् । यावन्तो मुहूर्ताः पञ्चदशकृत्वस्तावन्तः प्राणाः । यावन्तः प्राणाः पञ्चदशकृत्वस्तावन्तोऽपानाः । यावन्तोऽपानाः पञ्चदशकृत्वस्तावन्तो व्यानाः । यावन्तो व्यानाः पञ्चदशकृत्वस्तावन्तः समानाः । यावन्तः समानाः पञ्चदशकृत्वस्तावन्त उदानाः । यावन्त उदानाः पञ्चदशकृत्वस्तावन्त्येतादीनि । यावन्त्येतादीनि तावन्त्येतर्हीणि । यावन्त्येतर्हीणि तावन्ति स्वेदायनानि । यावन्ति स्वेदायनानि तावन्ति क्षिप्रायणानि । यावन्ति क्षिप्रायणानि तावन्तो रोमकूपाः । यावन्तो रोमकूपाः पञ्चदशकृत्वस्तावन्तो वर्षतो धाराः । तदेतत् क्रोशशतिकं परिमाणम् । तदप्येतदृचोक्तम्—

अमादन्यत्र परिवर्तमानश्चरन्नासीनो यदि वा स्वपन्नपि ।
अहोरात्राभ्यां पुरुषः क्षणेन[2] कतिकृत्वः प्राणिति चापानिति च ॥

शतं शतानि परिवत्सराणामष्टौ च शतानि संवत्सरस्य मुहूर्तान् यान् वदन्ति ।
अहोरात्राभ्यां पुरुषः समेन कतिकृत्वः[3] प्राणिति चापानिति च ॥[4]

इति ब्राह्मणम् ॥५॥[5]

---

१. अस्फुटम् !
२. 'समेन' इति पाठः शतपथब्राह्मणे (१२।३।२।७) ।
३. 'तावत्कृत्वः' इति पाठः शतपथब्राह्मणे (१२।३।२।८) ।
४. एतत् पद्यद्वयं स्वल्पभेदेन शत० ब्रा० (१२।३।२।७,८) उपलभ्यते ।
५. तु०—शत० ब्रा० १२।३।२।१—८।।

संवत्सरस्य समता वेदितव्येति ह स्माह वास्यु: । एकमेव पुरस्ताद् विषुवतोऽतिरात्रमुपयन्त्येकमुपरिष्टात् । त्रिपञ्चाशतमेव पुरस्ताद् विषुवतोऽग्निष्टोमानुपयन्ति त्रिपञ्चाशतमुपरिष्टात् । विंशतिशतमेव पुरस्ताद् विषुवत उक्थ्यानुपयन्ति विंशतिशतमुपरिष्टात् । षडेव पुरस्ताद् विषुवतः षोडशिन उपयन्ति षडुपरिष्टात् । त्रिंशदेव पुरस्ताद् विषुवतः षडहानुपयन्ति त्रिंशदुपरिष्टात् । सैषा संवत्सरस्य समता । स य एवमेतां संवत्सरस्य समतां वेद, संवत्सरेण सात्मा सलोको भूत्वा देवानप्येतीति ब्राह्मणम् ।।६।।[1]

अथातो यज्ञक्रमाः । अग्न्याधेयम् । अग्न्याधेयात् पूर्णाहुतिः । पूर्णाहुतेरग्निहोत्रम् । अग्निहोत्राद् दर्शपूर्णमासौ । दर्शपूर्णमासाभ्यामाग्रयणम् । आग्रयणाच्चातुर्मास्यानि । चातुर्मास्येभ्यः पशुबन्धः । पशुबन्धादग्निष्टोमः । अग्निष्टोमाद् राजसूयः । राजसूयाद् वाजपेयः । वाजपेयादश्वमेधः । अश्वमेधात् पुरुषमेधः । पुरुषमेधात् सर्वमेधः । सर्वमेधाद् दक्षिणावन्तः । दक्षिणावद्भ्यो ऽदक्षिणाः । अदक्षिणाः सहस्रदक्षिणे प्रत्यतिष्ठन् । ते वा एते यज्ञक्रमाः । स य एवमेतान् यज्ञक्रमान् वेद, यज्ञेन सात्मा सलोको भूत्वा देवानप्येतीति ब्राह्मणम् ।७।।

प्रजापतिरकामयत—अनन्त्यमश्नुवीयेति[2] । सोऽग्नीनाधाय पूर्णाहुत्यायजत[3] । सोऽन्तमेवापश्यत् । सोऽग्निहोत्रेणेष्ट्वान्तमेवापश्यत् । स दर्शपूर्णमासाभ्यामिष्ट्वान्तमेवापश्यत् । स आग्रयणेनेष्ट्वान्तमेवापश्यत् । स चातुर्मास्यैरिष्ट्वान्तमेवापश्यत् स पशुबन्धेनेष्ट्वान्तमेवापश्यत् । सोऽग्निष्टोमेनेष्ट्वान्तमेवापश्यत् । स राजसूयेनेष्ट्वा राजेति नामाधत्त । सोऽन्तमेवापश्यत् । स वाजपेयेनेष्ट्वा सम्राडिति नामाधत्त । सोऽन्तमेवा-

१. तु०—शत० ब्रा० १२।३।५।१२—१३।।

२. गास्ट्रसंशोधितः पाठः । 'अश्नूयेति' 'अश्नुयेति' 'अश्नुयेने' 'अश्नूयति' इति पाठाः कोशेषु ।

३. गास्ट्रसंशोधितः पाठः । 'यजेत' इति प्रायिकः पाठः कोशेषु ।

पश्यत् । सोऽश्वमेधेनेष्ट्वा स्वराडिति नामाधत्त । सोऽन्तमेवापश्यत् । स पुरुषमेधेनेष्ट्वा विराडिति नामाधत्त । सोऽन्तमेवापश्यत् । स सर्वमेधेनेष्ट्वा सर्वराडिति नामाधत्त । सोऽन्तमेवापश्यत् । सोऽहीनैर्दक्षिणावद्भिरिष्ट्वान्तमेवापश्यत् । सोऽहीनैरदक्षिणावद्भिरिष्ट्वान्तमेवापश्यत् । स सत्रेणोभयतोऽतिरात्रेणान्ततोऽयजत[1] । वाचं ह वै होत्रे प्रायच्छत्, प्राणमध्वर्यवे, चक्षुरुद्गात्रे, मनो ब्रह्मणे, अङ्गानि होत्रकेभ्यः, आत्मानं सदस्येभ्यः। एवमानन्त्यमात्मानं दत्वानन्त्यमाश्नुत[2] । तद् या दक्षिणा आनयत्, ताभिरात्मानं निष्क्रीणीय[3] । तस्मादेतेन ज्योतिष्टोमेनाग्निष्टोमेनात्मनिष्क्रयणेन सहस्रदक्षिणेन पृष्ठशमनीयेन त्वरेत । यो ह्यनिष्ट्वा पृष्ठशमनीयेन प्रैति, आत्मानं सोऽनिष्क्रीय[4] प्रैतीति ब्राह्मणम् ।।८।।

यद् वै संवत्सराय संवत्सरसदो दीक्षन्ते कथमेषामग्निहोत्रमनन्तरितं भवति ? व्रतेनेति ब्रूयात् । कथमेषां दर्शो ऽनन्तरितो भवति । दध्ना च पुरोडाशेन चेति ब्रूयात् । कथमेषां पौर्णमासमनन्तरितं भवति ? आज्येन च पुरोडाशेन चेति ब्रूयात् । कथमेषामाग्रयणमनन्तरितं भवति ? सौम्येन चरुणेति ब्रूयात् । कथमेषां चातुर्मास्यान्यनन्तरितानि भवन्ति? पयस्ययेति ब्रूयात् । कथमेषां पशुबन्धो ऽनन्तरितो भवति? पशुना च पुरोडाशेन चेति ब्रूयात् । कथमेषां सौम्यो ऽध्वरो ऽनन्तरितो भवति ? ग्रहैरिति ब्रूयात् । कथमेषां गृहमेधो ऽनन्तरितो भवति ? धानाकरम्भैरिति ब्रूयात् । कथमेषां पितृयज्ञो ऽनन्तरितो भवति ? औपासनैरिति ब्रूयात् । कथमेषां मिथुनमनन्तरितं भवति? हिंकारेणेति ब्रूयात् । सैषा संवत्सरे यज्ञक्रतूनामपीतिः[5] ।

---

१. गास्ट्रसंशोधितः पाठः । 'यजेत' इति प्रायेण कोशेषु पाठः ।

२. " " " । 'अश्नुयेति' 'अश्नूयति' 'अश्नुयते' इति कोशेषु पाठाः ।

३. दुरन्वितोऽयं पाठः प्रतीयते । कदाचिदत्र 'निरक्रीणीत' इति पाठः स्यात् ? 'निष्क्रीणीयत' इति पुणे-कोशयोः पाठः ।

४. गा० सं० । निष्क्रीणीय' 'निष्क्रुणीयतीं' इति कोशेषु पाठौ ।

५. गास्ट्रसंशोधितः पाठः । 'उपैति' इति कोशेषु पाठः ।

स य एवमेतां संवत्सरे यज्ञक्रतूनामपीतिं[1] वेद, यज्ञेन सात्मा सलोको भूत्वा देवानप्येतीति ब्राह्मणम्॥९॥[2]

देवा ह वै सहस्रसंवत्सराय दिदीक्षिरे। तेषां पञ्च शतानि संवत्सराणां पर्युपेतान्यासन्। अथेदं सर्वं शश्राम,[3] ये स्तोमा यानि पृष्ठानि यानि शस्त्राणि। ते देवा इहसामिवासुः[4]—उप तं यज्ञक्रतुं जानीमः, यः सहस्रसंवत्सरस्य प्रतिमा। को हि तस्मै मनुष्यो यः सहस्रसंवत्सरेण यजेतेति? तदयातयाम मध्ये यज्ञस्यापश्यन्। तेनायातयाम्ना[5] या[5] वेदे[5] व्यष्टिरासीत्, तां पञ्चस्वपश्यन्[6]—ऋचि यजुषि साम्नि शान्ते ऽथ घोरे। ता वा एताः पञ्च व्याहृतयो भवन्ति—ओ श्रावय, अस्तु श्रौषड्, यज, ये यजामहे, वौ षड् इति। ते देवा इहसामिवासुः[4]—उप तं यज्ञक्रतुं जानीमः, यः सहस्रसंवत्सरस्य प्रतिमा। को हि तस्मै मनुष्यो यः सहस्रसंवत्सरेण यजेतेति? तत एतं तापश्चितं सहस्रसंवत्सरस्याञ्जस्यमपश्यन्। ते ह्येव स्तोमा भवन्ति, तानि पृष्ठानि, तानि शस्त्राणि। स खलु द्वादश मासान् दीक्षाभिरेति द्वादशमासानुपसद्भिर्द्वादशमासान् सुत्याभिः। अथ यद् द्वादशमासान् दीक्षाभिरेति द्वादशमासानुपसद्भिः, तेनैतावग्न्यर्कावाप्नोति। अथ यद् द्वादशमासान् सुत्याभिः, तेनेदं महदुक्थमवाप्नोति। ते देवा इहसामिवासुः[4]—उप तं यज्ञक्रतुं जानीमः, यः सहस्रसंवत्सरस्य प्रतिमा। को हि तस्मै मनुष्यो यः सहस्रसंवत्सरेण यजेतेति? तत एतं संवत्सरं तापश्चितस्याञ्जस्यमपश्यन्। ते ह्येव स्तोमा भवन्ति, तानि पृष्ठानि, तानि शस्त्राणि। ते देवा इहसामिवासुः[4]—उप तं यज्ञक्रतुं जानीमः, यः सहस्रसंवत्सरस्य प्रतिमा। को हि तस्मै मनुष्यो यः सहस्रसंवत्सरेण

---

१. गास्ट्रसंशोधितः पाठः। 'उपैतिं' इति प्रायः कोशेषु पाठः।
२. तु०—शत० ब्रा० १२।३।५।३—११॥
३. गास्ट्रसंशोधितः पाठः (शत ब्रा० १२।३।३।१)। 'सुश्रुवुः' इति कोशेषु पाठः।
४. सन्दिग्धः पाठः! तु०—'ते ह देवा ऊचुः' (शत० ब्रा० १२।३।३।५)।
५. गा० सं० (शत० ब्रा० (१२।३।३।२)।
६. गास्ट्रसंशोधितः पाठः। 'अपश्यद्' इति कोशेषु पाठः।

यजेतेति ? तत एतं द्वादशाहं संवत्सरस्याञ्जस्यमपश्यन् । ते ह्येव स्तोमा भवन्ति, तानि पृष्ठानि, तानि शस्त्राणि । स खलु द्वादशाहं दीक्षाभिरेति द्वादशाहमुपसद्भिर्द्वादशाहं सुत्याभिः । अथ यद् द्वादशाहं दीक्षाभिरेति द्वादशाहमुपसद्भिः, तेनैतावग्न्यर्कावाप्नोति । अथ यद् द्वादशाहं सुत्याभिः, तेनेदं महदुक्थमवाप्नोति । ते देवा इहसामिवासुः[1]—उप तं यज्ञक्रतुं जानीमो यः सहस्रसंवत्सरस्य प्रतिमा । को हि तस्मै मनुष्यो यः सहस्रसंवत्सरेण यजेतेति ? तत एतं पृष्ठ्यं षडहं द्वादशाहस्याञ्जस्यमपश्यन् । ते ह्येव स्तोमा भवन्ति, तानि पृष्ठानि, तानि शस्त्राणि । ते देवा इहसामिवासुः[1]—उप तं यज्ञक्रतुं जानीमः, यः सहस्रसंवत्सरस्य प्रतिमा । को हि तस्मै मनुष्यो यः सहस्रसंवत्सरेण यजेतेति ? तत एतं विश्वजितं पृष्ठ्यषडहस्याञ्जस्यमपश्यन् । ते ह्येव स्तोमा भवन्ति, तानि पृष्ठानि, तानि शस्त्राणि । ते देवा इहसामिवासुः[1] —उप तं यज्ञक्रतुं जानीमः, यः सहस्रसंवत्सरस्य प्रतिमा । को हि तस्मै मनुष्यो यः सहस्रसंवत्सरेण यजेतेति ? स वा एष विश्वजिद् यः सहस्रसंवत्सरस्य प्रतिमा । एष ह प्रजानां प्रजापतिर्यद् विश्वजिदिति ब्राह्मणम् ॥१०॥[2]

पुरुषं ह वै नारायणं प्रजापतिरुवाच—यजस्व यजस्वेति । स होवाच यजस्व यजस्वेत्येवं हात्थ मा । त्रिरयक्षतेमे[3] वसवः प्रातःसवनेनागू रुद्रा माध्यंदिनसवनेनादित्यास्तृतीयसवनेन[4] । यज्ञवास्तुन्येव पर्यंशिषो यज्ञवास्तुमित्येवमाशिषो ऽहं वा एतद् वेद यज्ञे वसवः प्रातःसवनेनागू रुद्रा माध्यंदिनसवनेनादित्यास्तृतीयसवनेन[4] यज्ञवास्तुन्येव पर्यंशिषो यज्ञवास्तुमित्येवमाशिषो विद्वांसो नूनं त्वा याजयेयुः । एते ह वा अविद्वांसो यत्रानृग्विद्धोता भवत्ययजुर्विदध्वर्युरसामविदुद्गाताभृग्वङ्गिरोविद्

---

१. द्र०—पृ० ८० टि० ४ ।।

२. तु०—शत० ब्रा० १२।३।३।१—१४।।

३. 'त्रिरपि क्षत मे' इति गास्ट्रपाठः । 'त्रिरयक्षि' इति शत० ब्रा० (१२।३।४।१) ।

४. गास्ट्रसंशोधितः पाठः । 'माध्यंदिने सवने आदित्यास्तृतीयसवने' इति कोशेषु पाठः ।

ब्रह्मा । यजस्वैव हन्त तु ते तद् वक्ष्यामि, यथा सूत्रे मणिरिव सूतान्युकथाहानि[1] भवन्ति सूत्रमिव वा मणाविति । तस्माद् य एव सर्ववित् स्यात्, तं ब्रह्माणं कुर्वीत । एष ह वै विद्वान् सर्वविद् ब्रह्मा यद् भृग्वङ्गिरोवित् । एते ह वा अस्य सर्वस्य शमयितारः पालयितारः । तस्माद् ब्रह्मा स्तुते बहिःपवमाने वाचयति ॥११॥[2]

**श्येनो ऽसि गायत्रच्छन्दा अनु त्वारभे ।**
**स्वस्ति मा संपारय ॥**[3] इति ।

स यदाह श्येनो ऽसीति, सोमं वा एतदाह । एष ह वा अग्निर्भूत्वाऽस्मिँल्लोके संशाययति[4] । तद् यत् संशाययति तस्माच्छ्येनः । तच्छ्येनस्य श्येनत्वम् । स यदाह गायत्रच्छन्दा अनुत्वारभ इति, गायत्रेण छन्दसा वसुभिर्देवैः प्रातःसवने ऽस्मिँल्लोके ऽग्निं सन्तमन्वारभते । स यदाह स्वस्ति मा संपारयेति, गायत्रेणैव छन्दसा वसुभिर्देवैः प्रातःसवने ऽस्मिँल्लोके ऽग्निना देवेन स्वस्ति मा संपारयेति । गायत्रेणैवेनं तच्छन्दसा वसुभिर्देवैः प्रातःसवने ऽस्मिँल्लोके ऽग्निना देवेन स्वस्ति संपद्यते य एवं वेद ॥१२॥[5]

अथ माध्यंदिने पवमाने वाचयति—

**सम्राडसि त्रिष्टुप्छन्दा अनु त्वारभे ।**
**स्वस्ति मा संपारय ॥**[6] इति ।

स यदाह सम्राडसीति, सोमं वा एतदाह । एष ह वै वायुर्भूत्वान्तरिक्षलोके सम्राजति । तद् यत् सम्राजति तस्मात् सम्राट् । तत् सम्रा-

---

१. संशोधितः पाठः । 'सूत्रमेतान्युक्थाहानि' इति कोशेषु पाठः ।
२. तु०—शत० ब्रा० १२।३।४।१,२॥
३. अथर्व० (पै० सं०) १९।४४।४॥ अथर्व० (शौ० सं०) ६।४८।१॥
४. गास्ट्रसंशोधितः पाठः । 'संश्याययति' इति कोशेषु पाठः ।
५. तु०—शत० ब्रा० १२।३।४।३॥
६. अथर्व० (पै० सं०) १९।४४।५॥ अथर्व० (शौ० सं०) ६।४८।३॥

जस्य सम्राट्त्वम्। स यदाह त्रिष्टुप्छन्दा अनु त्वारभ इति, त्रैष्टुभेन छन्दसा रुद्रैर्देवैर्माध्यंदिने सवने ऽन्तरिक्षलोके वायुं सन्तमन्वारभते। स यदाह स्वस्ति मा संपारयेति, त्रैष्टुभेनैव छन्दसा रुद्रैर्देवैर्माध्यंदिने सवने ऽन्तरिक्षलोके वायुना देवेन स्वस्ति मा संपारयेति। त्रैष्टुभेनैवैनं तच्छन्दसा रुद्रैर्देवैर्माध्यंदिने सवने ऽन्तरिक्षलोके वायुना देवेन स्वस्ति संपद्यते य एवं वेद ॥१३॥[1]

अथार्भवे पवमाने वाचयति—

स्वरो ऽसि गयो ऽसि जगच्छन्दा अनु त्वारभे।
स्वस्ति मा संपारय[2] ॥ इति।

स यदाह स्वरो ऽसीति, सोमं वा एतदाह। एष ह वै सूर्यो भूत्वा-मुष्मिँल्लोके स्वरति। तद् यत् स्वरति तस्मात् स्वरः। तत् स्वरस्य स्वरत्वम्। स यदाह गयो ऽसीति, सोमं वा एतदाह। एष ह वै चन्द्रमा भूत्वा सर्वाँल्लोकान् गच्छति। तद् यद् गच्छति तस्माद् गयः। तद् गयस्य गयत्वम्। स यदाह जगच्छन्दा अनु त्वारभ इति, जागतेन छन्दसादित्यै-र्देवैस्तृतीयसवने ऽमुष्मिँल्लोके सूर्यं सन्तमन्वारभते। स यदाह स्वस्ति मा संपारयेति, जागतेनैव छन्दसादित्यैर्देवैस्तृतीयसवने ऽमुष्मिँल्लोके सूर्येण देवेन स्वस्ति मा संपारयेति। जागतेनैवैनं तच्छन्दसादित्यैर्देवैस्तृ-तीयसवने ऽमुष्मिँल्लोके सूर्येण देवेन स्वस्ति संपद्यते य एवं वेद ॥१४॥[3]

अथ संस्थिते संस्थिते सवने वाचयति—मयि भर्गो मयि महो मयि यशो मयि सर्वम् इति। पृथिव्येव भर्गो ऽन्तरिक्ष एव महो द्यौरेव यशो ऽप एव सर्वम्। अग्निरेव भर्गो वायुरेव मह आदित्या एव यश-

१. तु०—शत० ब्रा० १२।३।४।४॥
२. अथर्व० (पं० सं०) १९।४४।६॥ अथर्व० (शौ० सं०) ६।४८।२॥
३. तु०—शत० ब्रा० १२।३।४।५॥

श्चन्द्रमा एवं सर्वम् । वसव एव भर्गो रुद्रा एव मह आदित्या एव यशो विश्वेदेवा एव सर्वम् । गायत्र्येव भर्गस्त्रिष्टुबेव महो जगत्येव यशो ऽनुष्टुबेव सर्वम् । प्राच्येव भर्गः प्रतीच्येव मह उदीच्येव यशो दक्षिणैव सर्वम् । वसन्त एव भर्गो ग्रीष्म एव महो वर्षा एव यशः शरदेव सर्वम् । त्रिवृदेव भर्गः पञ्चदश एव महः सप्तदश एव यश एकविंश एव सर्वम् । ऋग्वेद एव भर्गो यजुर्वेद एव महः सामवेद एव यशो ब्रह्मवेद एव सर्वम् । होतैव भर्गो ऽध्वर्युरेव मह उद्गातैव यशो ब्रह्मैव सर्वम् । वागेव भर्गः प्राण एव महश्चक्षुरेव यशो मन एव सर्वम् ॥१५॥[1]

स यदाह **मयि भर्ग** इति, पृथिवीमेवैतल्लोकानामाह, अग्निं देवानां, वसून् देवान् देवगणानां, गायत्रं छन्दसां, प्राचीं दिशां, वसन्तमृतूनां, त्रिवृतं स्तोमानाम्, ऋग्वेदं वेदानां, हौत्रं होत्रकाणां, वाचमिन्द्रियाणाम् ॥१६॥

स यदाह **मयि मह** इति, अन्तरिक्षमेवैतल्लोकानामाह, वायुं देवानां, रुद्रान् देवान् देवगणानां, त्रैष्टुभं छन्दसां, प्रतीचीं दिशां, ग्रीष्ममृतूनां, पञ्चदशं स्तोमानां, यजुर्वेदं वेदानाम्, आध्वर्यवं होत्रकाणां, प्राणमिन्द्रियाणाम् ॥१७॥

स यदाह **मयि यश** इति, दिवमेवैतल्लोकानामाह, आदित्यं देवानाम्, आदित्यान् देवान् देवगणानां, जागतं छन्दसाम्, उदीचीं दिशां, वर्षा ऋतूनां, सप्तदशं स्तोमानां, सामवेदं वेदानाम्, औद्गात्रं होत्रकाणां, चक्षुरिन्द्रियाणाम् ॥१८॥

स यदाह **मयि सर्वमिति**, अप एवैतल्लोकानामाह, चन्द्रमसं देवानां, विश्वान् देवान् देवगणानाम्, आनुष्टुभं छन्दसां, दक्षिणां दिशां, शरदमृतूनाम्, एकविंशं स्तोमानां, ब्रह्मवेदं वेदानां, ब्रह्मत्वं होत्रकाणां, मन इन्द्रियाणाम् ॥१९॥

---

१. तु०—शत० ब्रा० १२।३।४।६-१०॥

स वा एष दशधा चतुः संपद्यते। दश च ह वै चतुर्विराजो ऽक्षराणि। तं गर्भा उपजीवन्ति। श्रीर्वै विराड्, यशो ऽन्नाद्यम्। श्रियमेव तद् विराजं यशस्यन्नाद्ये प्रतिष्ठापयति। प्रतिष्ठन्तीरिदं[1] सर्वमनुप्रतिष्ठति[1] प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद ॥२०॥

अनर्वाणं ह वै देवं दध्यङ्ङाङ्गिरस[2] उपसीदं[3] ह यज्ञस्य श्नुष्टिं[4] समश्नवामहा इति। स दध्यङ्ङाङ्गिरसो ऽब्रवीत्—यो वै सप्तदशं प्रजापतिं यज्ञे ऽन्वितं वेद, नास्य यज्ञो रिष्यते, न यज्ञपतिं[5] रिष्यन्त[5] इति। ता वा एताः पञ्च व्याहृतयो भवन्ति—ओ श्रावय, अस्तु श्रौषड्, यज, ये यजामहे, वौषड् इति। स दध्यङ्ङाङ्गिरसो ऽब्रवीत्—न वयं विद्मो यदि ब्राह्मणाः स्मो यद्यब्राह्मणाः स्मः, यदि तस्यर्षेः स्मो वान्यस्येति। अनर्वाणश्च ह वा ऋतावन्तश्च पितरः स्वधायामावृषायन्त—वयं वदामहै वयं वदामहा इति। सो ऽयात् स्वायंभुवो वा ऋतावन्तो मदेयातां न वयं वदामहा इति[6]। तस्मात् प्रवरे प्रव्रियमाणे वाचयेत्—देवाः पितर[7] इति तिस्रः। य एति संयजति स भवति यश्च न ब्रूते, यश्च न ब्रूत इति ब्राह्मणम् ॥२१॥[8]

सावित्रं ह स्मैतं पूर्वे पुरस्तात् पशुमालभन्त इत्येतर्हि[9] प्राजापत्यं, यो ह्येव सविता स प्रजापतिरिरिति वदन्तः। तस्मादु समुप्याग्नींस्तेन[10]

---

१. सन्दिग्धः पाठः !
२. गास्ट्रसंशोधितः पाठः। 'आङ्गिरसम्' इति कोशेषु पाठः।
३. भ्रष्टः पाठः !
४. 'श्रुष्टिं' इति रा० पाठः।
५. सन्दिग्धः पाठः ! 'यज्ञपती रिष्यते' इति पाठमत्र गास्ट्रः कल्पयति।
६. अस्पष्टमिदं वाक्यम् !
७. अथर्व० (पै० सं०) १६।५१।८—१०॥ अथर्व० (शौ० सं०) ६।१२३।३-५॥
८. तु०—शत० ब्रा० १२।३।३।३॥ मै० सं० १।४।११॥
९. गास्ट्रसंशोधितः पाठः। 'इति मे तर्हि' इति कोशेषु पाठः।
१०. " " " । 'समोप्या०' " " "।

यजेरन्। ते समानधिष्ण्या एव स्युरोखासंभरणीयायाः। उखासंभरणीयायां विन्युप्याग्नींस्तया यजेरन्। ते नानाधिष्ण्या एव स्युरा दीक्षणीयायाः। दीक्षणीयायां संन्युप्याग्नींस्तया यजेरन्। ते समानधिष्ण्या एव स्युरोदवसानीयायाः। उदवसानीयायां विन्युप्याग्नींस्तया यजेरन्। नानाधिष्ण्या एव स्युः। अथ यदि यजमानस्योपतपेत्, पार्श्वतो ऽग्नीनाधाय तावदासीत यावदगदः[1] स्यात्। यदि प्रेयात्, स्वैरेव तमग्निभिर्दहेत्। अशवाग्निभिरितरे यजमाना आसत इति वदन्तः। तस्य तदेव ब्राह्मणं, यददः पुरःसवने। पितृमेध आशिषो व्याख्याताः ॥२२॥[2]

सायंप्रातर्होमौ स्थालीपाको नवश्च यः।
बलिश्च पितृयज्ञश्चाष्टका सप्तमः पशुः॥
इत्येते पाकयज्ञाः।

अग्न्याधेयमग्निहोत्रं पौर्णमास्यमावास्ये।
नवेष्टिश्चातुर्मास्यानि पशुबन्धो ऽत्र सप्तमः॥
इत्येते हविर्यज्ञाः।

अग्निष्टोमो ऽत्यग्निष्टोम उक्थ्यः षोडशिमांस्ततः।
वाजपेयो ऽतिरात्रश्चाप्तोर्यामात्र सप्तमः॥
इत्येते सुत्याः।

के स्विद् देवाः प्रवोवाजाः के स्विद् देवा अभिद्यवः।
के स्विद् देवा हविष्मन्तः किं स्विज्जिगाति सुम्नयुः॥

ऋतव एव प्रवोवाजा मासा देवा अभिद्यवः।
अर्धमासा हविष्मन्तस्तज्जिगाति[3] सुम्नयुः॥

---

१. गास्ट्रसंशोधितः पाठः। 'यावदगः' इति कोशेषु पाठः।

२. तु०—शत० ब्रा० १२।३।५।१,२॥

३. रा० गास्ट्राभ्यां संशोधितः पाठः। '—तांस्विज्०' '—तां स्वं०' '—ता स्वि०' '—तांजि०' इति पाठाः कोशेषु।

कति स्विद् रात्रयः कत्यहानि कति स्तोत्राणि कति शस्त्राण्यस्य ।
कति स्वित् सवनाः संवत्सरस्य स्तोत्रियाः पदाक्षराणि कत्यस्य ॥

द्वावतिरात्रौ षट्शतमग्निष्टोमा द्वे विंशतिशते उक्थ्यानाम् ।
द्वादश षोडशिनः षष्टिः षडहा वैषुवतं च ॥

अहान्यस्य विंशतिशतानि त्रीण्यहश्चैकं तावदस्य ।
संवत्सरस्य सवनाः सहस्रमशीति त्रीणि च संस्तुतस्य ॥

षट्षष्टिश्च द्वे च शते भवत स्तुतशस्त्राणामयुतं चैकमस्य ।
स्तोत्रियाश्च नवतिसहस्रा द्वे नियुते नवतिश्चाति षट् च ॥

अष्टौ शतान्ययुतानि त्रिंशच्चतुर्नवतिश्च पदान्यस्य ।
संवत्सरस्य कविभिर्मितस्यैतावती मध्यमा देवमात्रा ॥

अयुतमेकं प्रयुतानि त्रिंशद् द्वे नियुते तथा ह्यनुसृष्टाः ।
अष्टौ शतानि नव चाक्षराण्येतावानात्मा परमः प्रजापतेः ॥

आद्य वषट्कारः प्रदानान्तमेतमग्निष्टोमे पर्वशः साधु-क्लृप्तम् ।
सौभेषजं छन्द ईप्सन् यदग्नौ चतुः शतं बहुधा हूयते यत् ॥

प्रातःसवन स्तुत एकविंशो गायत्रस्तोममित एक एव ।
माध्यंदिनः सप्तदशेन क्लृप्तस्त्रयस्त्रिंशेन सवनं तृतीयम् ॥

॥ २३ ॥

श्रद्धायां रेतस्तपसा तपस्वी वैश्वानरः सिषिचेऽपत्यमीप्सन् ।
ततो जज्ञे लोकजित् सोमजम्भा ऋषेर्ऋषिरङ्गिराः संबभूव ॥

ऋषेर्यज्ञस्य चतुर्विधस्य श्रद्धां यः श्रेयसीं लोकममुं जिगाय ।
यस्मै वेदाः प्रसृताः सोमबिन्दु युक्ता वहन्ति सुकृतामु लोकम् ॥

ऋचो ऽस्य भागांश्चतुरो वहन्त्युक्थशस्त्रैः प्रमुदो मोदमानाः ।
ग्रहैर्हविर्भिश्च कृताकृतश्च यजूंषि भागांश्चतुरो वहन्ति ॥

औदुम्बर्यां सामघोषेण तावत् सविष्टुतिभिश्च स्तोमैः छन्दसा ।
सामानि भागांश्चतुरो वहन्ति गीत्या स्तोमेन सह प्रस्तावेन च ॥

प्रायश्चित्तैर्भेषजैः[1] संस्तुवन्तो ऽथर्वाणो ऽङ्गिरसश्च शान्ताः ।
ह्मा ब्रह्मत्वेन प्रमुदो मोदमाना असंसृष्टान भागांश्चतुरो वहन्ति ॥

यो ब्रह्मवित् सो ऽभिकरो ऽस्तु वः शिवो धिया धीरो रक्षतु धर्ममेतम् ।
मा वः प्रमत्तामसृताच्च यज्ञात् कर्माच्च[2] येनानङ्गिरसो ऽपियासीत् ॥

मायुं दर्शं मारुशस्ताः प्रमेष्ठा मा मे भूर्युक्ता[3] विदहाथ लोकान् ।
दिव्यं भयं रक्षत धर्ममुद्यतं यज्ञं कालाश स्तुतिगौपनायनम् ॥

होता च मैत्रावरुणश्च पादमच्छावाकः सह ग्रावस्तुतैकम् ।
ऋग्भि स्तुवन्तो ऽहरहः पृथिव्या अग्नि पादं ब्रह्मणा धारयन्ति ॥

अध्वर्युः प्रतिप्रस्थाता नेष्टोन्नेता निहितं पादमेकम् ।
समन्तरिक्षं यजुषा स्तुवन्तो वायुं पादं ब्रह्मणा धारयन्ति ॥

साम्नोद्गाता छादयन्नप्रमत्त औदुम्बर्यां स्तोभदेयः सगद्गदः ।
विद्वान् प्रस्तोता विदहाथ[4] सुष्टुतिं सुब्रह्मण्यः प्रतिहर्ताथ यज्ञे ॥

साम्ना दिव्येकं निहितं स्तुवन्तः सूर्यं पादं ब्रह्मणा धारयन्ति ।
ब्रह्मा हैकं ब्राह्मणाच्छंसिनः सह पोताग्नीध्रो[5] निहितं पादमेकम् ॥

अथर्वभिरङ्गिरोभिश्च गुप्तो ऽप्सु चन्द्रं पादं ब्रह्मणा धारयन्ति ।
षोडशिकं होत्रका अभिष्टुवन्ति वेदेषु युक्ताः प्रपृथक् चतुर्धा ॥

मनीषिणो दीक्षिताः श्रद्दधाना होतारो गुप्ता अभिवहन्ति यज्ञम् ।
दक्षिणतो ब्रह्मणस्यों[6] जनदित्येतां व्याहृतिं जपन् ॥

---

१. 'भैषजैः संस्तवन्तः' इति रा० पाठः ।
२. सन्दिग्धम् ! (धर्माच्च ?) ।
३. गास्ट्रसंशोधितः पाठः । 'मुक्ता' इति कोशेषु पाठः ।
४. यथाकोशं पाठः ! ५. 'पोत्र'ग्नीध्रो' इति रा० पाठः ।
६. ब्लूमफील्डप्रस्तुतं संशोधनम् । 'ब्रह्मणस्या' 'ब्रह्मणेस्यां' 'ब्रह्मस्याज्' इति पाठाः कोशेषु ।

सप्तदशं सदस्यं तं कीर्तयन्ति पुरा विदुः ।
अष्टादशी दीक्षिता दीक्षितानां यज्ञे पत्नी श्रद्दधानेह युक्ता ॥

एकोनविंशः शमिता बभूव विंशो यज्ञे गृहपतिरेव सुन्वन् ।
एकविंशतिरेवैषां संस्थायामङ्गिरो वह ।
वेदैरभिष्टुतो लोको नानावेशापराजितः ॥

॥ २४ ॥

सप्त सुत्याः सप्त च पाकयज्ञाः हविर्यज्ञाः सप्त तथैकविंशतिः ।
सर्वे ते यज्ञा अङ्गिरसो ऽपियन्ति नूतना यानृषयो[1] सृजन्ति
ये च सृष्टाः पुराणैः ॥

एतेषु वेदेष्वपि चैकमेवापव्रजमृत्विजां संभरन्ति ।
कूटस्तृपात्[2] सचते तामशस्ति विष्कन्धमेनं विसृतं प्रजासु ॥

निवर्तन्ते दक्षिणा नीयमानाः सुते सोमे वितते यज्ञतन्त्रे ।
मोघाशिषो यन्त्यनिवर्तमाना अनिष्टयज्ञा न तरन्ति लोकान् ॥

द्वादशवर्षं ब्रह्मचर्यं पृथग् वेदेषु तत् स्मृतम् ।
एवं व्यवस्थिता वेदाः सर्व एव स्वकर्मसु ॥

सन्ति चैषां समानाः मन्त्राः कल्पाश्च ब्राह्मणानि च ।
व्यवस्थानं तु तत् सर्वं पृथग् वेदेषु तत् स्मृतम् ॥

ऋग्वेदस्य पृथिवी स्थानमन्तरिक्षस्थानो ऽध्वरः ।
द्यौ स्थानं सामवेदस्यापो भृग्वङ्गिरसां स्मृतम् ॥

अग्निर्देवत ऋग्वेदस्य यजुर्वेदो वायुदेवतः ।
आदित्यः सामवेदस्य चन्द्रमा वैद्युतश्च भृग्वङ्गिरसाम् ॥

त्रिवृत् स्तोम ऋग्वेदस्य यजूंषि पञ्चदशेन सह जज्ञिरे ।
सप्तदशेन सामवेद एकविंशो ब्रह्मसंमितः ॥

---

१. यथाकोशं पाठः ! २. भ्रष्टः पाठः !

वागध्यात्ममृग्वेदस्य यजुषां प्राण उच्यते ।
चक्षुषी सामवेदस्य मनो भृग्वङ्गिरसां स्मृतम् ॥

ऋग्भिः सह गायत्रं जागतमाहुर्यजूंषि त्रैष्टुभेन सह जज्ञिरे ।
उष्णिक्ककुब्भ्यां भृग्वङ्गिरसो जगत्या सामानि कवयो वदन्ति ॥

ऋग्भिः पृथिवीं यजुषान्तरिक्षं साम्ना दिवं लोकजित् सोमजम्भाः ।
अथर्वभिरङ्गिरोभिश्च गुप्तो यज्ञश्चतुष्पाद् दिवमुद्वहेत[1] ॥

ऋग्भिः सुशस्तो यजुषा परिष्कृतः सविष्टुतः सामजित् सोमजम्भाः ।
अथर्वभिरङ्गिरोभिश्च गुप्तो यज्ञश्चतुष्पाद् दिवमारुरोह ॥

ऋचो विद्वान् पृथिवीं वेद संप्रति, यजूंषि विद्वान् बृहदन्तरिक्षम् ।
दिवं वेद सामगो यो विपश्चित्, सर्वान् लोकान् यद् भृग्वङ्गिरोवित् ॥

यांश्च ग्रामे यांश्चारण्ये जपन्ति मन्त्रान् नानार्थान् बहुधा जनासः ।
सर्वे ते यज्ञा अङ्गिरसो ऽपियन्ति नूतनां सा हि गतिर्ब्रह्मणो यावराध्या ॥

त्रिविष्टपं त्रिदिवं नाकमुत्तमं तमेतया त्रय्या विद्ययैति[2] ।
अत उत्तरे ब्रह्मलोका महान्तो ऽथर्वणामङ्गिरसां च सा गतिः ॥

अथर्वणामङ्गिरसां च सा गतिरिति ब्राह्मणम् ॥ २५ ॥

॥ इत्यथर्ववेदे गोपथब्राह्मणपूर्वभागे पञ्चमः प्रपाठकः ॥

॥ इति पूर्वब्राह्मणं समाप्तम् ॥

१. शास्त्रसंशोधितः पाठः । 'उद्वदेह' इति कोशेषु पाठः ।
२. शास्त्रसंशोधितः पाठः । 'विद्ययेति' इति कोशेषु पाठः ।

# गोपथ-ब्राह्मणम्

## उत्तरभागः

## प्रथमः प्रपाठकः

अथ यद् ब्रह्मसदनात् तृणं निरस्यति शोधयत्येवैनं तत्। अथोपविशति—इदमहमर्वाग्वसोः सदने सीदामि[1] इति। अर्वाग्वसुर्ह वै देवानां ब्रह्मा पराग्वसुरसुराणाम्। तमेवैतत् पूर्वं सादयति—अरिष्टं यज्ञं तनुताद्[1] इति। अथोपविश्य जपति—बृहस्पतिर्ब्रह्म[1] इति। बृहस्पतिर्वा आङ्गिरसो देवानां ब्रह्मा। तस्मिन्नेवैतदनुज्ञामिच्छति। प्रणीतासु प्रणीयमानासु वाचं यच्छत्या हविष्कृत उद्वादनात्। एतद् वै यज्ञस्य द्वारम्, तदेतदशून्यं करोति। इष्टे च स्विष्टकृत्यानुयाजानां प्रसवादिति। एतद् वै यज्ञस्य द्वितीयं द्वारम्, तदेवैतदशून्यं करोति। यत् परिधयः परिधीयन्ते यज्ञस्य गोपीथाय। परिधीन् परिधत्ते यज्ञस्य सात्मत्वाय। परिधीन् संमार्ष्टि। पुनात्येवैनान्। त्रिर्मध्यमम्। त्रय इमे प्राणाः। प्राणानेवाभिजयति। त्रिर्दक्षिणार्ध्यम्। त्रयो वै लोकाः। लोकानेवाभिजयति। त्रिरुत्तरार्ध्यम्। त्रयो वै देवलोकाः। देवलोकानेवाभिजयति। त्रिरुपवाजयति। त्रयो वै देवयाना पन्थानः, तानेवाभिजयति। ते वै द्वादश भवन्ति। द्वादश ह वै मासाः संवत्सरः। संवत्सरमेव तेन प्रीणाति। अथो संवत्सरमेवास्मा उपदधाति स्वर्गस्य लोकस्य समष्टचै ॥१॥[2]

---

१. तु०—कौषी० ब्रा० ६।१३॥

२. तु०—कौषी० ब्रा० ६।१३॥ शत० ब्रा० १।५।१।२४॥ तै० सं० २।५।११।५,६॥

प्रजापतिर्वै रुद्रं यज्ञाद् निरभजत् सो ऽकामयत—मेयमस्मा आकूतिः समर्धि,[1] यो मा यज्ञाद् निरभाक्षीदिति। स यज्ञमभ्यायम्याविध्यत्। तदाविद्धं निरकृन्तत्। तत् प्राशित्रमभवत्। तदुदयच्छत्। तद् भगाय पर्यहरन्। तत् प्रत्यैक्षत[2]। तस्य चक्षुः परापतत्। तस्मादाहुरन्धो वै भग इति। अपि ह तं नेच्छेद् यमिच्छति। तत् सवित्रे पर्यहरन्। तत् प्रत्यगृह्णात्। तस्य पाणी प्रचिच्छेद[3]। तस्मै हिरण्मयौ प्रत्यदधुः। तस्माद्धिरण्यपाणिरिति स्तुतः। तत् पूष्णे पर्यहरन्। तत् प्राश्नात्। तस्य दन्ताः परोप्यन्त। तस्मादाहुरदन्तकः पूषा पिष्टभाजन इति। तदिध्मायाङ्गिरसाय पर्यहरन्। तत् प्राश्नात्। तस्य शिरो व्यपतत्। तं यज्ञ एवाकल्पयत्। स एष इध्मः। समिधो ह पुरातनः। तद् बर्हय आङ्गिरसाय पर्यहरन्। तत् प्राश्नात्। तस्याङ्गा पर्वाणि व्यस्रंसन्त[4]। तं यज्ञ एवाकल्पयत्। तदेतद् बर्हिः। प्रस्तरो ह पुरातनः। तद् बृहस्पतय आङ्गिरसाय पर्यहरन्। सो ऽबिभेद् बृहस्पतिरित्थं वाव[5] स्य[6] आर्तिमारिष्यतीति[7]। स एतं मन्त्रमपश्यत्। सूर्यस्य त्वा चक्षुषा प्रतीक्ष[8] इत्यब्रवीत्। न हि सूर्यस्य चक्षुः किं चन हिनस्ति। सो ऽबिभेत् प्रतिगृह्णन्तं मा हिंसिष्यतीति। देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रसूतः प्रशिषा प्रतिगृह्णामि[9] इत्यब्रवीत्। सवितृप्रसूत एवैनं तद् देवताभिः प्रत्यगृह्णात् तद् व्यूह्य तृणानि प्राग्दण्डं स्थण्डिले निदधाति—पृथिव्यास्त्वा नाभौ सादयामि[10] इति। पृथिवी वा अन्नानां शमयित्री। तयैवैनच्छमयां चकार। सो ऽबिभेत्

---

१. गा० सं०। 'समृध्यियों' 'समृद्धियों' इति कोशेषु पाठौ।
२. गा० सं०। 'प्रतीक्षेत', 'प्रतीक्ष्यत', 'प्रतीक्षत', 'प्रतीक्षित' इति कोशेषु पाठाः।
३. गा० सं०। 'प्रतिच्छेद' इति कोशेषु पाठः।
४. गा० सं०। 'व्यश्रंसन्त' इति कोशेषु पाठः।
५. गा० सं० (द्र०—तै० सं० २।६।८।५)। 'वामार्ति०' 'वावार्ति०' इति कोशेषु पाठौ।
६. तु०—तै० सं० २।६।८।५॥ अथर्व० (पै० सं०) २०।५३।८॥
७. तु०—अथर्व० (पै० सं०) २०।५३।१०॥ अथर्व० (शौ० सं०) १९।५१।२॥ मा० सं० २।११॥
८. तु०—मा० सं० १।११॥

प्राश्नन्तं मा हिंसिष्यतीति । अग्नेष्ट्वास्येन प्राश्नामि[1] इत्यब्रवीत् । न ह्यग्नेरास्यं किं चन हिनस्ति । सो ऽबिभेत् प्राशितं मा हिंसिष्यतीति । इन्द्रस्य त्वा जठरे सादयामि[1] इत्यब्रवीत् । न ह्योन्द्रस्य जठरं किं चन हिनस्ति । वरुणस्योदरे[2] इति । न हि वरुणस्योदरं किं चन हिनस्तीति ।।२।।[3]

अथो आहुः—ब्राह्मणस्योदर इति । आत्मास्यात्मन्नात्मानं मे मा हिंसीः स्वाहा[4] इति । अन्नं वै सर्वेषां भूतानामात्मा । तेनैवैनच्छमयां चकार । प्राशितमनुमन्त्रयते—

यो ऽग्निर्नृमणा नाम ब्राह्मणेषु प्रविष्टः ।
तस्मिन् म एतत् सुहुतमस्तु प्राशित्रं तन्मा मा हिंसीत् परमे व्योमन् ।।[5] इति।

तत् सर्वेण ब्रह्मणा प्राश्नात् । तत एनं नाहिनत् । तस्माद् यो ब्रह्मिष्ठः स्यात्, तं ब्रह्माणं कुर्वीत । बृहस्पतिर्वै सर्वं ब्रह्म । सर्वेण ह वा एतद् ब्रह्मणा यज्ञं दक्षिणत उद्यच्छते । अप वा एतस्मात् प्राणाः क्रामन्ति, य आविद्धं प्राश्नाति । अद्भिर्मार्जयित्वा प्राणान् संस्पृशते—वाङ्म आस्यन्[6] इति । अमृतं वै प्राणाः । अमृतमापः । प्राणानेव यथास्थानमुपाह्वयते । तदु हैक आहुः—इन्द्राय पर्यहरन्निति[7] । ते देवा अब्रुवन्—इन्द्रो वै देवानामोजिष्ठो बलिष्ठः । तस्मा एनत् परिहरतेति[8] । तत् तस्मै पर्यहरन् । तत् स ब्रह्मणा शमयां चकार । तस्मादाहुः—इन्द्रो ब्रह्मेति । यवमात्रं भवति ।

---

१. तु०—मा० सं० ८।११।।
२. तु०—अथर्वं० (पै० सं०) २०।५३।१०।। का० सं० २।३।७।।
३. तु०—तै० सं० २।६।८।५,६।। कौषी० ब्रा० ६।१३,१४।।
४. द्र०—वैतान० १।३।११ (=३।११) ।।
५. तु० —अथर्वं० (पै० सं०) २०।५३।११।।
६. तु०—अथर्वं० (शौ० सं०) १९।६०।१।।
७. तु०—कौषी० ब्रा० ६।१४ (प्रारम्भे) ।।
८. गा० सं० (कौषी० ब्रा० ६।१४) । 'परिहरन्तीति' इति कोशेषु पाठः ।

यवमात्रं वै विषस्य[1] न हिनस्ति । यदधस्तादभिघारयति, तस्मादधस्तात् प्रक्षरणं प्रजा अरुर्न हिनस्ति । यदुपरिष्टादभिघारयति, तस्मादुपरिष्टात् प्रक्षरणं प्रजा अरुर्न हिनस्ति । यदुभयतो ऽभिघारयति, उभयतो ऽभिघारि[2] प्रजा अरुर्घातुकं स्यात् । यत् समयाभिहरेदनभिविद्धं यज्ञस्याभिविध्येत्[3] ॥३॥[4]

अग्रेण परिहरति । तीर्थेनैव परिहरति । वि वा एतद् यज्ञश्छिद्यते, यत् प्राशित्रं परिहरति । यदाह—ब्रह्मन् प्रस्थास्यामि[5] इति, बृहस्पतिर्वै सर्वं ब्रह्म । सर्वेण ह वा एतद् ब्रह्मणा यज्ञं दक्षिणतः संदधाति । अथो अत्र वा एतर्हि यज्ञः श्रितः, यत्र ब्रह्मा तत्रैव यज्ञः श्रितः । तत एवैनमालभते । यद्धस्तेन प्रमीवेद्[6] वेपनः स्यात्, यच्छीर्ष्णा शीर्षक्तिमान् स्यात्, यत् तूष्णीमासीतासंप्रत्तो[7] यज्ञः स्यात् । प्रतिष्ठ[8] इत्येव ब्रूयात् । वाचि वै यज्ञः श्रितः । यत्र ब्रह्मा यत्रैव[9] यज्ञः श्रितस्तत एवैनं संप्रयच्छति । अग्नीध[10] आदधाति । अग्निमुखानेवर्तून् प्रीणाति । अथोत्तरासामाहुतीनां प्रतिष्ठित्यै । अथो समिद्वत्येव जुहोति । परिधीन् संमार्ष्टि । पुनात्येवैनान् । सकृत् सकृत् संमार्ष्टि । पराङेव ह्येतर्हि यज्ञः । चतुः संपद्यते । अथो चतुष्पादः पशवः । पशूनामाप्त्यै । देव सवितरेतत् ते प्राहेत्याह प्रसूत्यै । बृहस्पतिर्ब्रह्मेत्याह । स हि ब्रह्मिष्ठः । स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहि स मां कर्मण्यं पाहीत्याह । यज्ञाय च यजमानाय च पशूनामाप्त्यै ॥४॥[11]

---

१. एतादृक् पाठः सार्वत्रिकः !   २. सन्दिग्धः पाठः !

३. गा० सं० । 'अभिविद्धेत्' इति कोशेषु पाठः । पुणे-खकोशे 'अभिविध्येत्' इत्येव पाठः ।

४. तु०—तै० सं० २।६।६।४॥ कौषी ब्रा० ६।१४॥

५. तु—तै० सं० २।६।६।१॥ शत० ब्रा० १।७।४।१६॥

६. गा० सं० । 'प्रमीयेद्' इति कोशेषु पाठः ।

७. गा० सं० । '-दासंप्रतो' '-दासंप्रतो' इति कोशेषु पाठौ ।

८. तु०—तै० सं० २।६।६।२॥ शत० ब्रा० १।७।४।२२॥

९. गा० सं० । 'तत्रैव' इति कोशेषु पाठः ।

१०. गा० सं० । 'आग्नीध' 'अग्नीध्र' इति कोशेषु पाठौ ।

११. तु०—तै० सं० २।६।६।१–३॥

न वै पौर्णमास्यां नामावास्यायां दक्षिणा दीयन्ते । य एष ओदनः पच्यते, दक्षिणैषा दीयते यज्ञस्यर्द्ध्यै । इष्टी वा एतेन यद् यजते, अथो वा एतेन पूर्ती य एष ओदनः पच्यते । एष ह वा इष्टापूर्ती य एनं पचति ।।५।।[1]

द्वया वै देवा यजमानस्य गृहमागच्छन्ति सोमपा अन्ये ऽसोमपा अन्ये, हुतादो ऽन्ये ऽहुतादो ऽन्ये । एते वै देवा अहुतादो यद् ब्राह्मणाः । एतद्दे-वत्य एष यः पुरानीजानः । एते ह वा एतस्य प्रजायाः पशूनामीशते । ते ऽस्याप्रीता इषमूर्जमादायापक्रामन्ति । यदन्वाहार्यमन्वाहरति, तानेव तेन प्रीणाति । दक्षिणतः सद्भ्यः परिहर्तवा आह । दक्षिणावतैव[2] यज्ञेन यजते । आहुतिभिरेव देवान् हुतादः प्रीणाति दक्षिणाभिर्मनुष्यदेवान् । ते ऽस्मै प्रीता इषमूर्जं नियच्छन्ति ।।६।।[3]

देवाश्च ह वा असुराश्चास्पर्धन्त । ते देवाः प्रजापतिमेवाभ्ययजन्त । अन्यो ऽन्यस्यासन्नसुरा अजुहवुः । ते देवा एतमोदनमपश्यन् । तं प्रजापतये भागमनुनिरवपन् । तं भागं पश्यन् प्रजापतिर्देवानुपावर्तत । ततो देवा अभवन् परासुराः । स य एवं विद्वानेतमोदनं पचति, भवत्यात्मना, परास्याप्रियो भ्रातृव्यो भवति । प्रजापतिर्वै देवेभ्यो भागधेयानि व्यकल्प-यत् । सो ऽमन्यतात्मानमन्तरगामिति[4] । स एतमोदनमभक्तमपश्यत् । तमात्मने भागं निरवपत् । प्रजापतेर्वा एष भागः । अपरिमितः स्यात् । अपरिमितो हि प्रजापतिः । प्रजापतेर्भागो ऽस्यूर्जस्वान् पयस्वान् । अक्षितो ऽस्यक्षित्यै त्वा । मा मे क्षेष्ठा अमुत्रामुष्मिँल्लोक इह च । प्राणापानौ मे पाहि, समानव्यानौ मे पाह्युदानरूपे मे पाहि । ऊर्गस्यूर्जं मे धेहि । कुर्वतो मे मा क्षेष्ठाः, ददतो मे मोपदसः । प्रजापतिमहं त्वया समक्षमृध्यासम् इति । प्रजापतिमेव समक्षमृध्नोति य एवं वेद, य एवं वेद ।। ७ ।।[5]

---

१. तु०—काठ० सं० ८।१३।।
२. गा० सं० । 'दक्षिणावृतैव' इति कोशेषु पाठः । ३. तु०—मै० सं० १।४।६।।
४. गा० सं० । 'सोमं मन्यत आत्मानमन्तरगादिति' इति प्रायः कोशेषु पाठः ।
५. तु०—वै० सं० १।७।३।४।। काठ० सं० ८।१३।।

ये वा इह यज्ञैरार्ध्नुवन्, तेषामेतानि ज्योतींषि यान्यमूनि नक्षत्राणि। तद् नक्षत्राणां नक्षत्रत्वं यद् न क्षियन्ति[1]। दर्शपूर्णमासौ वै यज्ञस्यावसानदर्शौ। ये वा अनिष्ट्वा दर्शपूर्णमासाभ्यां सोमेन यजन्ते, तेषामेतानि ज्योतींषि यान्यमूनि नक्षत्राणि पतन्तीव। तद् यथा ह वा इदमस्पष्टावसाने[2] नेहावसास्यसि नेहावसास्यसीति नोनुद्यन्ते, एवं हैवैते ऽमुष्माल्लोकाद्[3] नोनुद्यन्ते। त एते प्रच्यवन्ते। ८॥

यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात्, तांस्त्रेधा तण्डुलान्[4] विभजेत्। ये मध्यमास्तानग्नये दात्रे ऽष्टाकपालं निर्वपेत्। ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधनि चरुम्। ये क्षोदिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम्। पशवो वा एते ऽतिरिच्यन्ते। तानेवाप्नोति। तानवरुन्द्धे। अग्निर्वै मध्यमस्य दाता। इन्द्रो वै ज्येष्ठस्य प्रदाता। यदेवेदं क्षुद्रं पशूनां तद् विष्णोः शिपिविष्टम्। तदेवाप्नोति। पशूनेवावरुन्द्धे॥९॥[5]

या पूर्वा पौर्णमासी सानुमतिः, योत्तरा सा राका। या पूर्वामावास्या सा सिनीवाली, योत्तरा सा कुहूः। चन्द्रमा एव धाता च विधाता च। यत् पूर्णो ऽन्यां वसत्यपूर्णो ऽन्यां, तद् मिथुनम्। यत् पश्यत्यन्यां नान्यां, तद् मिथुनम्। यदमावास्यायाश्चन्द्रमा अधि प्रजायते, तद् मिथुनम्। तस्मादेवास्मै मिथुनात् पशून् प्रजनयति। १०॥[6]

न द्वे यजेत। यत् पूर्वया संप्रति यजेत, उत्तरया छम्बट्[7] कुर्यात्। यदुत्तरया संप्रति यजेत, पूर्वया छम्बट्[7] कुर्यात्। नेष्टिर्भवति न यज्ञः।

---

१. सार्वत्रिकोऽयं पाठः। गा० सं० पाठस्तु 'क्षीयन्ति' इति।

२. गा०सं० पुणे-कोशयोस्तादृश एव पाठः। 'इदमस्पष्टा०' 'इदमस्याष्टा०' इति कोशेषु।

३. पुणे-कोशयोः पाठः। 'ऽमुष्मान् लो०' इति रा० पाठः। 'ऽमुष्माल्लो०' इति गा० पाठः।

४. 'ताण्डुलान्' इति गास्ट्रसंस्करणे ऽपपाठः।

५. तु०—तै० सं० २।५।५।१,२॥

६. तु०—मै० सं० ४।३।५॥

७. गा० सं०। 'छंवषट्' इति कोशेषु पाठः।

तदनु ह्रीतमुख्यपगल्भो जायते । एकामेव यजेत । प्रगल्भो हैव जायते । अनाहृत्य[1] तद् द्वे यजेत । यज्ञमुखमेव पूर्वयालभते, यजत उत्तरया । देवता एवं पूर्वयाप्नोति, इन्द्रियमुत्तरया । देवलोकमेव पूर्वयावरुन्द्धे, मनुष्यलोकमुत्तरया । भूयसो यज्ञक्रतूनुपैति[2] । एषा ह वै सुमना नामेष्टिः । यमद्येजानं[3] पश्चाच्चन्द्रमा अभ्युदियाद्, अस्मा अस्मिँल्लोक आर्धुकं भवति ।११॥[4]

आग्नावैष्णवमेकादशकपालं निर्वपेद् दर्शपूर्णमासावारिप्समाणः । अग्निर्वै सर्वा देवता विष्णुर्यज्ञः । देवताश्चैव यज्ञं चारभत ऋद्ध्यै । ऋध्नोत्येव । उभौ सहारम्भावित्याहुः । उदिन्नु श्रृङ्गे सितो मुच्यत इति । दर्शो वा एतयोः पूर्वः पौर्णमास उत्तरः । अथ यत् परस्तात् पौर्णमास आरभ्यते, तद् यथापूर्वं क्रियते । तद् यत् पौर्णमासमारभमाणः सरस्वत्यै चरुं निर्वपेत् सरस्वते द्वादशकपालम्, अमावास्या वै सरस्वती पौर्णमासः सरस्वानिति । उभावेवैनौ सहारभत ऋद्ध्यै । ऋध्नोत्येव ॥१२॥[5]

अग्नये पथिकृते ऽष्टाकपालं निर्वपेद्, यस्य प्रज्ञातेष्टिरतिपद्यते[6] । बहिष्पथं वा एष एति यस्य प्रज्ञातेष्टिरतिपद्यते[6] । अग्निर्वै देवानां पथिकृत् । तमेव भागधेयेनोपासरत् । स एनं पन्थानमपिनयति । अनड्वान् दक्षिणा । स हि पन्थानमभिवहति ॥१३॥[7]

अग्नये व्रतपतये ऽष्टाकपालं निर्वपेद्, य आहिताग्निः सन् प्रवसेत् । बहु वा एष व्रतमतिपातयति य आहिताग्निः सन् प्रवसति, व्रत्ये ऽहनि

१. गा० सं० । 'अनाहुत्यं' 'अनादृत्यं' इति कोशेषु पाठौ ।
२. ,, ,, । 'यज्ञक्रतूनामुपैति' इति कोशेषु पाठः ।
३. गा० सं० । 'ये मध्ये याने' इति' इति रा० पाठः । 'यमध्येयानं' इति कोशेषु पाठः ।
४. तु०—तै० सं० २।५।५।२-४॥
५. तु०—मै० सं० १।४।१४-१५ ॥ ऐ० ब्रा० १।१॥ शत० ब्रा० ३।१।३।१॥
६. गा० सं० । 'प्रज्ञातेष्टिरितिपद्यते' इति कोशेषु पाठः ।
७. तु०—मै० सं० ६।१।१०॥

स्त्रियं वोपैति मांसं वाश्नाति । अग्निर्वै देवानां व्रतपतिः । अग्निमेतस्य व्रतमगात् । तस्मादेतस्य व्रतमालम्भयते ।।१४।।[1]

अग्नये व्रतभृते ऽष्टाकपालं निर्वपेद् य आहिताग्निरार्तिजमश्रु कुर्यात् । आनीतो वा एष देवानां य आहिताग्निः । तस्मादेतेनाश्रु न कर्त्तव्यम् । न हि देवा अश्रु कुर्वन्ति । अग्निर्वै देवानां व्रतभृत् । अग्निमेतस्य व्रतमगात् तस्मादेतस्य व्रतमालम्भयते ।।१५।।[1]

ऐन्द्राग्नमुस्रम्[2] अनुसृष्टमालभेत, यस्य पिता पितामहः सोमं न पिबेत् । इन्द्रियेण वा एष वीर्येण व्यृध्यते,[3] यस्य पिता पितामहः सोमं न पिबति । यदैन्द्रः, इन्द्रियेणैवैनं तद् वीर्येण समर्धयति । देवताभिर्वा एष वीर्येण व्यृध्यते[3] यस्य पिता पितामहः सोमं न पिबति । यदाग्नेयः, अग्निर्वै सर्वा देवताः, सर्वाभिरेवैनं तद् देवताभिः समर्धयति । अनुसृष्टो भवति । अनुसृष्ट इव ह्येतस्य सोमपीथो, यस्य पिता पितामहः सोमं न पिबति । तस्मादेष एव तस्या देवतायाः पशूनां समृद्धः ।।१६।।[4]

देवा वा ओषधीषु पक्वास्वाजिमयुः । स इन्द्रो ऽवेद्—अग्निर्वाविमाः प्रथम उज्जेष्यतीति । सो ऽब्रवीद्—यतरो नौ पूर्व उज्जयात्, तद् नौ सहेति । ता अग्निरुदजयत् । तदिन्द्रो ऽनूदजयत् । स एष ऐन्द्राग्नः सन्नाग्नेन्द्रः । एका वै तर्हि यवस्य श्नुष्टिरासीदेका व्रीहेरेका माषस्यैका तिलस्य । तद् विश्वे देवा अब्रुवन्—वयं वा एतत् प्रथयिष्यामो भागो नोऽस्त्विति । तद् भूम एव वैश्वदेवः । अथो प्रथयत्येतेनैव । पयसि स्याद् वैश्वदेवत्वाय । वैश्वदेवं हि पयः । अथेमावब्रूताम्[5]—न वा ऋत

---

१. तु०—मै० सं० २।१।१०।।
२. गा० सं० । 'उत्स्नम्' इति कोशेषु पाठः । पुणे-ख कोशे 'उस्रम्' इत्येव पाठः ।
३. गा० सं० । 'व्यध्यते' इति रा० पाठः । 'विवृध्यते' इति कोशेषु पाठः ।
४. तु०—मै० सं० २।५।५।।
५. गा० सं० । 'अथेमे अब्रूतां' इति कोशेषु पाठः ।

आवाभ्यामेवैतद् यूयं प्रथयत, मयि प्रतिष्ठितमसौ वृष्टया पचति, नैतदितो ऽभ्युज्जेष्यतीति । भागो नावस्त्विति । ताभ्यां वा एष भागः क्रियत उज्जित्या एव, अथो प्रतिष्ठित्या एव यो[1] द्यावापृथिवीयः । सौमीर्वा ओषधीः । सोम ओषधीनामधिराजः । याश्च ग्राम्या याश्चारण्यास्तासामेष उद्धारो यच्छ्यामाकः । यच्छ्यामाकः सौम्यस्तमेव भागिनं कृणुते । यदकृत्वाग्रयणं नवस्याश्नीयाद् देवानां भागं प्रतिक्लृप्तमद्यात् । संवत्सराद् वा एतदधिप्रजायते यदाग्रयणम् । संवत्सरं वै ब्रह्मा । तस्माद् ब्रह्मा पुरस्ताद्धोमसंस्थितहोमेष्वावपेत् । एकहायनी दक्षिणा । स[2] हि संवत्सरस्य प्रतिमा । रेत एव ह्येषो ऽप्रजातः प्रजात्यै ॥१७॥[3]

अथ हैतदप्रतिरथम्—इन्द्रस्य बाहू स्थविरौ वृषाणौ[4] इति । एतेन ह वा इन्द्रो ऽसुरानप्रत्यजयत् अप्रति ह भवत्येतेन यजमानो भ्रातृव्यं जयति । संग्रामे जुहुयादप्रति ह भवति[5] । एतेन ह वै भरद्वाजः प्रतर्दनं समनह्यत् । स राष्ट्र्यभवत् । यं कामयेत राष्ट्री स्यादिति, तमेतेन संनह्येत्[6] । राष्ट्री ह भवति । एतेन ह वा इन्द्रो विराजमभ्यजयत् । दशैवान्वाह[7] । दशाक्षरा विराट् । वैराजं वा एतेन यजमानो भ्रातृव्यं वृङ्क्ते । तदु हैक एकादशान्वाहुः एकादशाक्षरा वै त्रिष्टुप् । त्रैष्टुभो वज्रः । वज्रेणैवैतद् रक्षांस्यपसेधति । दक्षिणतो वै देवानां यज्ञं रक्षांस्यजिघांसन् । तान्यप्रतिरथेनापाघ्नत । तस्माद् ब्रह्माप्रतिरथं जपन्नेति । यद् ब्रह्माप्रतिरथं जपन्नेति यज्ञस्याभिजित्यै रक्षसामपहत्यै, रक्षासामपहत्यै ॥१८॥[8]

---

१. गा० सं० । 'ये' इति रा० पाठः । 'य' इति कोशेषु पाठः ।

२. 'सा' इति पाठोऽत्र साधीयान् स्यात् । काठ० सं० (१२।७) तु वत्सो दक्षिणात्वेन निर्दिष्ट इति पुंल्लिङ्गेन निर्देशस्तत्र युक्त एव ।

३. तु०—काठ० सं० १२।७॥

४. अथर्व० (पै० सं०) ७।४।१॥ अथर्व० (शौ० सं०) १९।१३।१॥

५. 'भवति' इति पदमत्र व्यतिरिच्यते । प्रक्षिप्तमेतद् इति गास्त्रः ।

६. सन्दिग्धम् !

७. गा० सं० । 'दशैतान्वाह' इति कोशेषु पाठः ।

८. तु०—मै० सं० ३।३।७॥

अथातश्चातुर्मास्यानां प्रयोगः। फाल्गुन्यां पौर्णमास्यां चातुर्मास्यानि प्रयुञ्जीत। मुखं वा एतत् संवत्सरस्य यत् फाल्गुनी पौर्णमासी, मुखमुत्तरे फाल्गुन्यौ पुच्छं पूर्वे। तद् यथा प्रवृत्तस्यान्तौ समेतौ स्याताम्, एवमेवैतत् संवत्सरस्यान्तौ समेतौ भवतः। तद् यत् फाल्गुन्यां पौर्णमास्यां चातुर्मास्यैर्यजते, मुखत एवैतत् संवत्सरं प्रयुङ्क्ते। अथो भैषज्ययज्ञा वा एते यच्चातुर्मास्यानि। तस्मादृतुसंधिषु प्रयुज्यन्ते। ऋतुसंधिषु वै व्याधिर्जायते। तान्येतान्यष्टौ हवींषि भवन्ति। अष्टौ वै चतसृणां पौर्णमासीनां हवींषि भवन्ति। चतसृणां वै पौर्णमासीनां वैश्वदेवं समासः। अथ यदग्निं मन्थन्ति, प्रजापतिर्वै वैश्वदेवम्, प्रजात्या एव। अथैतं दैवं गर्भं प्रजनयति। अथ यत् सप्तदश सामिधेन्यः, सप्तदशो वै प्रजापतिः, प्रजापतेराप्त्यै। अथ यत् सद्वन्तावाज्यभागावसिसंतीति[1] वै सद्वन्तौ भवतः। अथ यद् विराजौ संयाज्ये, अन्नं वै श्रीर्विराट्, अन्नाद्यस्य श्रियो ऽवरुद्ध्यै। अथ यद् नव प्रयाजा नवानुयाजा अष्टौ हवींषि वाजिनं नवमं तद् नक्षत्रीयां[2] विराजमाप्नोति। अथो आहुर्दशिनीं[3] विराजमिति, प्रयाजानुयाजा हवींष्याघारावाज्यभागाविति ॥१९॥[4]

अथ यदग्नीषोमौ प्रथमं देवतानां यजति, अग्नीषोमौ वै देवानां मुखम्, मुखत एव तद् देवान् प्रीणाति। अथ यत् सवितारं यजति, असौ वै सविता यो ऽसौ तपति, एतमेव तेन प्रीणाति। अथ यत् सरस्वतीं यजति, वाग् वै सरस्वती, वाचमेव तेन प्रीणाति। अथ यत् पूषणं यजति, असौ वै पूषा यो ऽसौ तपति, एतमेव तेन प्रीणाति। अथ यद् मरुतः स्वतवसो यजति, घोरा वै मरुतः स्वतवसः, तानेव तेन प्रीणाति। अथ यद् विश्वान् देवान् यजति, एते वै विश्वे देवा यत् सर्वे देवाः, तानेव तेन प्रीणाति। अथ यद् द्यावापृथिव्यौ यजति, प्रतिष्ठे वै द्यावापृथिव्यौ, प्रतिष्ठित्या

---

१. सन्दिग्धम् !

२. गा० सं०। 'तन्नाक्षरीयां' 'तग्नाक्षश्रीयां' इति कोशेषु पाठौ। 'नवाक्षरीयां' पाठः संभवति।

३. संशोधितः पाठः। '–दशनीं' इति कोशेषु पाठः।

४. तु०—कौषी० ब्रा० ५।१॥

एव । अथ यद् वाजिनो यजति, पशवो वै वाजिनः, पशूनेव तेन प्रीणाति । अथो ऋतवो वै वाजिनः, ऋतूनेव तेन प्रीणाति । अथो छन्दांसि वै वाजिनः, छन्दांस्येव तेन प्रीणाति । अथो देवाश्वा वै वाजिनः, अत्र देवाः साश्वा अभीष्टाः प्रीता भवन्ति । अथ यत् परस्तात् पौर्णमासेन यजते तथा हास्य पूर्वपक्षे वैश्वदेवेनेष्टं भवति ॥२०॥[1]

वैश्वदेवेन वै प्रजापतिः प्रजा असृजत । ताः सृष्टा अप्रसूता वरुणस्य यवान् जक्षुः । ता वरुणो वरुणपाशैः प्रत्यबध्नात् । ताः प्रजाः प्रजापतिं पितरमेत्योपावदन्—उप तं यज्ञक्रतुं जानीहि, येनेष्ट्वा वरुणमप्रीणात् । स प्रीतो वरुणः[2] । वरुणपाशेभ्यः सर्वस्माच्च पाप्मनः संप्रमुच्यन्त इति । तत एतं प्रजापतिर्यज्ञक्रतुमपश्यद् वरुणप्रघासान्[3] । तमाहरत् । तेनायजत । तेनेष्ट्वा वरुणमप्रीणात् । स प्रीतो वरुणो वरुणपाशेभ्यः सर्वस्माच्च पाप्मनः प्रजाः प्रामुञ्चत् । प्र ह वा एतस्य प्रजा वरुणपाशेभ्यः सर्वस्माच्च पाप्मनो मुच्यन्ते, य एवं वेद । अथ यदग्निं प्रणयन्ति, यमेवामुं वैश्वदेवे मन्थन्ति, तमेव तत् प्रणयन्ति । यन् मथ्यते तस्योक्तं ब्राह्मणम् । अथ यत् सप्तदश सामिधेन्यः सद्वन्तावाज्यभागौ विराजौ संयाज्ये, तेषामुक्तं ब्राह्मणम् । अथ यद् नव प्रयाजा नवानुयाजा नवैतानि हवींषि, समानानि त्वेव पञ्च संचराणि हवींषि भवन्ति पौष्णान्तानि, तेषामुक्तं ब्राह्मणम् ॥२१॥[4]

अथ यदैन्द्राग्नो द्वादशकपालो भवति, बलं वै तेज इन्द्राग्नी, बलमेव तत् तेजसि प्रतिष्ठापयति । अथ यद् वारुण्यामिक्षा, इन्द्रो वै वरुणः, स उ वै पयोभाजनः, तस्माद् वारुण्यामिक्षा । अथ यद् मारुती पयस्या, अप्सु वै मरुतः श्रिताः[5], आपो हि पयः । अथेन्द्रस्य वै मरुतः श्रितः[6] ।

१. तु०—कौषी० ब्रा० ५।२॥

२. 'वरुणमप्रीणात् स प्रीतो वरुणः' इति पाठोऽत्र प्रक्षिप्तः(तु०—कौषी० ब्रा० ५।३)।

३. गा० सं० । 'प्रजापतिं यज्ञक्रतुमपश्यद् वरुणप्रघासं' इति कोशेषु पाठः ।

४. तु०—कौषी० ब्रा० ५।३॥ ५. पुणे-क-कोशेऽयं पाठः । अन्यत्र 'श्रितः' इत्यपपाठः ।

६. अन्तः क्षिप्तमिति गास्ट्रः (कौषी० ब्रा० ५।४) ।

ऐन्द्रं पयः, तस्माद् मारुती पयस्या। अथ यत् काय एककपालः, प्रजापतिर्वै कः, प्रजापतेराप्त्यै। अथो सुखस्य वा एतद् नामधेयं कमिति। सुखमेव तदध्यात्मन् धत्ते। अथ यद् मिथुनौ गावौ ददाति, तत् प्रजात्यै रूपम्। उक्थ्या[1] वाजिनः। अथ यदप्सु वरुणं यजति, स्व एवैनं तदायतने प्रीणाति। अथ यत् परस्तात् पौर्णमासेन यजते, तथा हास्य पूर्वपक्षे वरुणप्रघासैरिष्टं भवति ॥२२॥[2]

ऐन्द्रो वा एष यज्ञक्रतुर्यत् साकमेधाः। तद् यथा महाराजः पुरस्तात् सैनानीकानि[3] व्युह्याभयं पन्थानमन्वियाद्, एवमेवैतत् पुरस्ताद् देवता यजति[4]। तद् यथैवादः सोमस्य महाव्रतम्, एवमेवैतदिष्टिमहाव्रतम्। अथ यदग्निमनीकवन्तं प्रथमं देवतानां यजति, अग्निर्वै देवानां मुखं, मुखत एव तद् देवान् प्रीणाति। अथ यद् मध्यंदिने मरुतः सांतपनान् यजति, इन्द्रो वै मरुतः सांतपनाः, ऐन्द्रं माध्यंदिनं, तस्मादेतानिन्द्रेणोपसंहितान् यजति। अथ यत् सायं गृहमेधीयेन चरन्ति, पुष्टिकर्म वै गृहमेधीयः, सायं पोषः पशूनां, तस्मात् सायं गृहमेधीयेन चरन्ति। अथ यच्छ्वो भूते गृहमेधीयस्य निष्काशमिश्रेण पूर्णदर्वेण[5] चरन्ति, पूर्वेद्युः कर्मणैवैतत् प्रातः कर्मोपसंतन्वन्ति। अथ यत् प्रातर्मरुतः क्रीडिनो यजति, इन्द्रो वै मरुतः क्रीडिनः, तस्मादेनानिन्द्रेणोपसंहितान् यजति। अथ यदग्निं प्रणयन्ति, यमेवामुं वैश्वदेवे मन्थन्ति, तमेव तत् प्रणयन्ति। यद् मथ्यते, तस्योक्तं ब्राह्मणम्। अथ यत् सप्तदश सामिधेन्यः सद्वन्तावाज्यभागौ विराजौ संयाज्ये, तेषामुक्तं ब्राह्मणम्। अथ यद् नव प्रयाजा नवानुयाजा अष्टौ हवींषि समानानि त्वेव षट् संचराणि हवींषि भवन्त्यैन्द्राग्नान्तानि, तेषामुक्तं ब्राह्मणम्। अथ यद् महेन्द्रमन्ततो यजति, अन्तं

१. 'उक्तो' इति पाठोऽत्र सम्भाव्यते गास्ट्र ण।
२. तु०—कौ० ब्रा० ५।४॥
३. गा० सं०। 'सेनानीकानि' इति कोशेषु पाठः।
४. गा० सं०। 'यजन्ते' इति कोशेषु पाठः।
५. गा० सं०। 'पूर्णदर्व्या' 'पूणदर्व्या' 'पूर्स्यादर्व्या' इत्यादयः पाठाः कोशेषु।

वै श्रेष्ठी भजते, तस्मादेनमन्ततो यजति । अथ यद् वैश्वकर्मण एककपालः, असौ वै विश्वकर्मा यो ऽसौ तपति, एतमेव तेन प्रीणाति । अथ यदृषभं ददाति, ऐन्द्रो ह यज्ञक्रतुः ।।२३।।[1]

अथ यदपराह्णे पितृयज्ञेन चरन्ति, अपराह्णभाजो वै पितरः, तस्मादपराह्णे पितृयज्ञेन चरन्ति । तदाहुः—यदपरपक्षभाजो वै पितरः कस्मादेनान् पूर्वपक्षे यजन्तीति ? देवा वा एते पितरः, तस्मादेनान् पूर्वपक्षे यजन्तीति । अथ यदेकां सामिधेनीं त्रिरन्वाह, सकृदु ह वै पितरः, तस्मादेकां सामिधेनीं त्रिरन्वाह । अथ यद् यजमानस्यार्षेयं[2] नाह[2] नेद् यजमानं प्रवृणजानीति[3] । अथ यत् सोमं पितृमन्तं पितॄन् वा सोमवतः पितॄन् बर्हिषदः पितॄनग्निष्वात्तान्[4] इत्यावाहयति[5] । न हैके स्वं महिमानमावाहयन्ति यजमानस्यैष महिमेति वदन्तः । आवाहयेदिति त्वेव स्थितम् । अग्नेर्ह्येष महिमा भवति । ओं स्वधा[5] इत्याश्रावयति । अस्तु स्वधा[5] इति प्रत्याश्रावयति । स्वधाकारो हि पितॄणाम् । अथ यत् प्रयाजानुयाजेभ्यो बर्हिष्मन्तावुद्धरति, प्रजा वै बर्हिः, नेत् प्रजां पितृषु दधानीति । ते वै षट् संपद्यन्ते । षड् वा ऋतवः । ऋतवः पितरः । पितॄणामाप्त्यै ।।२४।।[7]

अथ यज्जीवनवन्तावाज्यभागौ भवतो यजमानमेव तज्जीवयति[8] । अथ यदेकैकस्य हविषस्तिस्रस्तिस्रो याज्या भवन्ति, ह्वयत्येवैनान् प्रथमया, द्वितीयया गमयति, प्रैव तृतीयया यच्छति । अथो देवयज्ञमेवैतत्[9]

---

१. तु०—कौषी० ब्रा० ५।५।।
२. गा० सं० । '–नस्यार्षेऽन्वाह' इति कोशेषु पाठः ।
३. गा० सं० । 'प्रमृष्ण्जानीति' इति कोशेषु पाठः ।
४. तु०—शत० ब्रा० २।६।१।२२।।
५. अतोऽग्रे पाठस्त्रुटितः (तु०–कौषी० ब्रा० ५।६) ।
६. तु०—शत० ब्रा० २।६।१।२४।।
७. तु०—कौषी० ब्रा० ५।६,७।।
८. गा० सं० । 'जीवयतेऽथ' 'जीवयतोऽथ' इति कोशेषु पाठौ ।
९. गा० सं० । 'एवैनं' इति रा० पाठः । 'एवैत' इति कोशेषु पाठः ।

पितृयज्ञेन व्यावर्तयति । अथो दक्षिणासंस्थो वै पितृयज्ञः । तमेवैतदुदक्संस्थं कुर्वन्ति । अथ यदग्निं कव्यवाहनमन्ततो यजति, एतत् स्विष्टकृतो वै पितरः, तस्मादग्निं कव्यवाहनमन्ततो यजति । अथ यदिडामुपहूयावघ्राय न प्राश्नन्ति, पशवो वा इडा, नेत् पशून् प्रवृणजानीति[1] । अथ यत् सूक्तवाके यजमानस्याशिषो ऽन्वाह, नेद् यजमानं प्रवृणजानीति[1] । अथ यत् पत्नीं न संयाजयन्ति, नेत् पत्नीं प्रवृणजानीति[1] । अथ यत् पवित्रवति मार्जयन्ते, शान्तिर्वै भेषजमापः, शान्तिरेवैषा भेषजमन्ततो यज्ञे क्रियते । अथ यदध्वर्युः पितृभ्यो निपृणाति, जीवानेव तत् पितॄननु मनुष्याः पितरो ऽनुप्रवहन्ति । अथो देवयज्ञमेवैनं पितृयज्ञेन व्यावर्तयन्ति । अथो दक्षिणासंस्थो वै पितृयज्ञः, तमेवैतदुदक्संस्थं कुर्वन्ति । अथ यत् प्राञ्चो ऽभ्युत्क्रम्यादित्यमुपतिष्ठन्ते, देवलोको वा आदित्यः, पितृलोकः पितरः, देवलोकमेवैतत्[2] पितृलोकादुपसंक्रामन्तीति । अथ यद् दक्षिणाञ्चो ऽभ्युत्क्रम्याग्नीनुपतिष्ठन्ते, प्रीत्यैव तद् देवेष्वन्ततो ऽर्धं चरन्ति । अथ यदुदञ्चो ऽभ्युत्क्रम्य त्रैयंबकैर्यजन्ते, रुद्रमेव तत् स्वस्यां दिशि प्रीणन्ति । अथो देवयज्ञमेवैतत्[2] पितृयज्ञेन व्यावर्तयन्ति । अथो दक्षिणासंस्थो वै पितृयज्ञः, तमेवैतदुदक्संस्थं कुर्वन्ति । अथ यदन्तत आदित्येष्ट्या यजति, इयं वा अदितिः, अस्यामेवैनमन्ततः प्रतिष्ठापयति । अथ यत् परस्तात् पौर्णमासेन यजते, तथा ह्यस्य पूर्वपक्षे साकमेधैरिष्टं भवति ।।२५।।[3]

त्रयोदशं वा एतं मासमाप्नोति यच्छुनासीर्येण यजते । एतावान् वै संवत्सरो यावानेष त्रयोदशो मासः । अथ यदग्निं प्रणयन्ति यमेवामुं वैश्वदेवे मन्थन्ति, तमेव तत् प्रणयन्ति । यद् मथ्यते, तस्योक्तं ब्राह्मणम् । यद्यु न मथ्यते, पौर्णमासमेव तन्त्रं भवति, प्रतिष्ठा वै पौर्णमासं, प्रतिष्ठित्या एव । अथ यद् वायुं यजति, प्राणो वै वायुः, प्राणमेव तेन प्रीणाति ।

---

१. गा० सं० । 'प्रमृणजानीति' इति कोशेषु पाठः ।

२. गा० सं० । 'एवैनं' इति कोशेषु पाठः ।

३. तु०—कौषी० ब्रा० ५।७।।

अथ यच्छुनासीरं यजति, संवत्सरो वै शुनासीरः, संवत्सरमेव तेन प्रीणाति। अथ यत् सूर्यं यजति, असौ वै सूर्यो यो ऽसौ तपति, एतमेव तेन प्रीणाति । अथ यच्छ्वेतां[1] दक्षिणां[1] ददाति, एतस्यैव तद् रूपं क्रियते। अथ यत् प्रायश्चित्तप्रतिनिधिं कुर्वन्ति, स्वस्त्ययनमेव तत् कुर्वन्ति, यज्ञस्यैव शान्तिर्यजमानस्य भैषज्याय । तैर्वा एतैश्चातुर्मास्यैर्देवाः सर्वान् कामानाप्नुवन् सर्वा इष्टीः सर्वममृतत्वम् । स वा एष प्रजापतिः संवत्सरश्चतुर्विंशो यच्चातुर्मास्यानि । तस्य मुखमेव वैश्वदेवं बाहू वरुणप्रघासाः, प्राणो ऽपानो व्यान इत्येतास्तिस्र इष्टयः, आत्मा महाहविः, प्रतिष्ठा शुनासीरम् । स वा एष प्रजापतिरेव संवत्सरो यच्चातुर्मास्यानि। सर्वं वै प्रजापतिः। सर्वं चातुर्मास्यानि। तत् सर्वेणैव सर्वमाप्नोति य एवं वेद, यश्चैवं विद्वांश्चातुर्मास्यैर्यजते, चातुर्मास्यैर्यजते ॥२६॥[2]

॥ इत्यथर्ववेदे गोपथब्राह्मणोत्तरभागे प्रथमः प्रपाठकः ॥

—:o:—

---

१. गा० सं०। 'यच्छ्वेता दक्षिणा' इति कोशेषु पाठः।
२. तु०—कौषी०, ब्रा० ५।८,९॥

# द्वितीयः प्रपाठकः

ओम् । मांसीयन्ति वा आहिताग्नेरग्नयः । त एनमेवाग्रे ऽभिध्यायन्ति यजमानम्[1] । य एतमैन्द्राग्नं पशुं षष्ठे षष्ठे मास आलभते, तेनैवेन्द्राग्निभ्यां ग्रसितमात्मानं निरवदयते । आयुष्काम आलभेत, प्राणापानौ वा इन्द्राग्नी, प्राणापानावेवात्मनि धत्ते, आयुष्मान् भवति । प्रजाकाम आलभेत, प्राणापानौ वा इन्द्राग्नी, प्राणापानौ प्रजा अनुप्रजायन्ते, प्रजावान् भवति । पशुकाम आलभेत, प्राणापानौ वा इन्द्राग्नी, प्राणापानौ पशवो ऽनुप्रजायन्ते, पशुमान् भवति । यामं शुकहरितम्[2] आलभेत शुण्ठं[3] वा यः कामयेतानामयः पितृलोके स्यामिति । एतेन ह वै यमो ऽमुष्मिँल्लोक आर्ध्नोत् । पितृलोक एवार्ध्नोति । त्वाष्ट्रं वडवमालभेत प्रजाकामः, प्रजापतिर्वै प्रजाः सिसृक्षमाणः[4] स द्वितीयं मिथुनं नाविन्दत्[5] । स त्वाष्ट्रं वडवमपश्यत् । त्वष्टा हि रूपाणां प्रजनयिता । तेन प्रजा असृजत । तेन मिथुनमविन्दत् । प्रजावान् मिथुनवान् भवति य एवं वेद, यश्चैवं विद्वानेतमालभते । योनीन् वा एष काम्यान् पशूनालभते, यो ऽनिष्ट्वैन्द्राग्नेन काम्यं पशुमालभत इष्टालम्भः समृद्ध्यै ॥१॥[6]

पञ्चधा वै देवा व्युदक्रामन्—अग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वैर्देवैः । ते देवा अब्रुवन्—असुरेभ्यो

---

१. अतोऽग्रे पाठस्त्रुटितः ।

२. गा० सं० । 'शुकं हरितम्' 'शुकं हस्तिम्' इति कोशेषु पाठौ ।

३. „ „ । 'शठं' इति कोशेषु पाठः । 'शंढं' इति पुणे-कोशयोः पाठः ।

४. „ „ । 'ससृक्षमाणः' इति पुणे-कोश-रा० पाठः । 'समृक्षमाणः' इति कोशेषु पाठः ।

५. गा० सं० । 'मिथुनमन्वाविन्दत्' इति कोशेषु पाठः ।

६. तु०—शत० ब्रा० ११।७।१।२॥ मै० सं० २।५।११॥ काठ० सं० १३।७॥

वा इदं भ्रातृव्येभ्यो रध्यामः,[1] यद् मिथो विप्रियाः[2] स्मः। या न इमाः प्रियास्तन्वः, ताः समवद्यामहा इति। ताः समवाद्यन्त। ताभ्यः स निर्ऋच्छाद्, यो नः प्रथमो ऽन्यो ऽन्यस्मै द्रुह्यादिति। यत् तन्वः समवाद्यन्त, तत् तानूनप्त्रस्य तानूनप्त्रत्वम्। ततो देवा अभवन् परासुराः। तस्माद् यः सतानूनप्तॄणां[3] प्रथमो द्रुह्यति, स आर्तिमार्छति। यत् तानूनप्त्रं समवद्यति भ्रातृव्याभिभूत्यै, भवत्यात्मना। परास्याप्रियो भ्रातृव्यो भवति ॥२॥[4]

पञ्चकृत्वो ऽवद्यति। पाङ्क्तो यज्ञः। पञ्चधा हि ते ताः समवाद्यन्त। आपतये त्वा गृह्णामीत्याह। प्राणो वा आपतिः, प्राणमेव तेन प्रीणाति। परिपतये त्वेत्याह। मनो वै परिपतिः, मन एव तेन प्रीणाति। तनूनप्त्र इत्याह। तन्वो हि ते ताः समवाद्यन्त। शाक्वरायेत्याह। शक्त्यै[5] हि ते ताः समवाद्यन्त। शक्मन ओजिष्ठायेत्याह। ओजिष्ठं हि ते तदात्मनः समवाद्यन्त। अनाधृष्टमित्याह। अनाधृष्टं ह्येतत्। अनाधृष्यमित्याह। अनाधृष्यं ह्येतत्। देवानामोज इत्याह। देवानां ह्येतदोजः। अभिशस्तिपा इत्याह। अभिशस्तिपा ह्येतत्। अनभिशस्तेन्यमित्याह। अनभिशस्तेनं ह्येतत्। अनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिः। अञ्जसा सत्यमुपगेषं[6] स्विते मा धा इत्याह। यथायजुरेवैतत् ॥ ३ ॥[7]

घृतं वै देवा वज्रं कृत्वा सोममघ्नन्। स्रुचौ बाहू। तस्मात् स्रुचौ सौमीमाहुतिं नाशाते[8]। अवधीयेत सोमः। तस्मात् स्रुचौ चाज्यं

---

१. गा० सं०। 'रुध्यामो' इति कोशेषु पाठः।
२. ,, ,,। 'विप्रियाः' ,, ,, ,,।
३. गा० सं०। 'तानून०' इति कोशेषु पाठः।
४. तु०—तै० सं० ६।२।२।१-२।। काठ० सं० २४।९।।
५. गा० सं०। 'शक्त्यं' 'शक्ति' इति कोशेषु पाठौ।
६. ,, ,,। 'उपगेषां' इति कोशेषु पाठः।
७. तु०—तै० सं० ६।२।२।२-४।। मा० सं० ५।५।। का० सं० ५।२।१-४।।
८. गा० सं०। 'नासाते' इति कोशेषु पाठः।

चान्तिकमाहार्षीत्। अन्तिकमिव खलु वा अस्यैतत् प्रचरन्ति यत् तानूनप्त्रेण प्रचरन्ति। अंशुरंशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविद इत्याह। यदेवास्यापवायते, यद् मीयते, तदेवास्यैतेनाप्याययन्ति। आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वेत्याह। उभावेवेन्द्रं च सोमं चाप्याययन्ति। अप्याययास्मान् सखीन् सन्या मेधया प्रजया धनेनेत्याह। ऋत्विजो वा एतस्य सखायः। तानेवास्यैतेनाप्याययन्ति। स्वस्ति ते देव सोम सुत्यामुदृचमशीयेत्याह। आशिषमेवैतामाशास्ते। प्र वा एतस्माल्लोकाच्च्यवन्ते, ये सोममाप्याययन्ति। अन्तरिक्षदेवत्यो हि सोम आप्यायितः। एष्टा राय एष्टा वामानि प्रेषे भगाय, ऋतमृतवादिभ्यो, नमो दिवे नमः पृथिव्या इति। द्यावापृथिवीभ्यामेव नमस्कृत्यास्मिँल्लोके प्रतितिष्ठति प्रतितिष्ठति ॥४॥[1]

मख इत्येतद् यज्ञनामधेयं छिद्रप्रतिषेधसामर्थ्यात्। छिद्रं खमित्युक्तं, तस्य मेति प्रतिषेधः, मा यज्ञं छिद्रं करिष्यतीति। छिद्रो हि यज्ञो भिन्न इवोदधिर्विस्रवति। तद् वै खलु छिद्रं भवत्यृत्विग्यजमानविमानाद् वा, अपि वैषां व्यपेक्षया मन्त्रकल्पब्राह्मणानामप्रयोगाद्, यथोक्तानां वा दक्षिणानामप्रदानाद्धीनाद् वातिरिक्ताद् वोत्पाताद्भुतेषु प्रायश्चित्तव्यतिक्रमादिति। एतद् वै सर्वं ब्रह्मण्यर्पितम्। ब्रह्मैव विद्वान् यद् भृग्वङ्गिरोवित् सम्यगधीयानश्चरितब्रह्मचर्यो ऽन्यूनानतिरिक्ताङ्गो ऽप्रमत्तो यज्ञं रक्षति। तस्य प्रमादाद् यदि वाप्यसांनिध्याद् यथा भिन्ना नौरगाधे महत्युदके संप्लवेद्, मत्स्यकच्छपशिशुमारनक्रमकरपुरीकयजषरजसपिशाचानां[2] भागधेयं भवत्येवमादीनां चान्येषां विनष्टोपजीविनाम्, एवं खल्वपि यज्ञश्छिन्नभिन्नो ऽपध्वस्त उत्पाताद्भुतो वहुलो ऽथर्वभिरसंस्कृतो ऽसुरगन्धर्वयज्ञराक्षसपिशाचानां[3] भागधेयं भवत्येवमादीनां चान्येषां विनष्टोपजीविनाम्। तदपि श्लोकाः—

१. तु०—तै० सं० ६।२।२।४-६।। मा० सं० ५।७।। का० सं० ५।२।५-७।।

२. गा० सं०। '—जखरजस—' इति कोशेषु पाठः।

३. यथाकोशं पाठः। '—रक्षस—' इति गा० सं० पाठः।

छिन्नभिन्नो ऽपध्वस्तो विश्रुतो बहुधा मखः ।
इष्टापूर्तद्रविणं गृह्य यजमानस्यावापतत् ॥
ऋत्विजां च विनाशाय राज्ञो जनपदस्य च ।
संवत्सरविरिष्टं तद् यत्र यज्ञो विरिष्यते ॥
दक्षिणाप्रवणीभूतो यज्ञो दक्षिणतः स्मृतः ।
हीनाङ्गो रक्षसां भागो ब्रह्मवेदादसंस्कृतः ॥
चतुष्पात् सकलो यज्ञश्चातुर्होत्रविनिर्मितः ।
चतुर्विधै स्थितो मन्त्रैर्ऋत्विग्भिर्वेदपारगैः ॥
प्रायश्चित्तैरनुध्यानैरनुज्ञानानुमन्त्रणैः ।
होमैश्च यज्ञविभ्रंशं सर्वं ब्रह्मा प्रपूरयेत् ॥ इति ।

तस्माद् यजमानो भृग्वङ्गिरोविदमेव तत्र ब्रह्माणं वृणीयात् । स हि यज्ञं तारयतीति ब्राह्मणम् ॥५॥

यज्ञो वै देवेभ्य उदक्रामत्[1]—न[2] वो ऽहमन्नं भविष्यामीति । नेति देवा अब्रुवन्, अन्नमेव नो भविष्यसीति । तं देवा विमेथिरे । स एभ्यो विहृतो न प्रबभूव । ते होचुर्देवाः—न वै न इत्थं विहृतो ऽलं भविष्यति, हन्तेमं संभरामेति । तं संजभ्रुः । तं संभृत्योचुः—अश्विनाविमं भिषज्यतमिति । अश्विनौ वै देवानां भिषजौ । अश्विनावध्वर्यू । तस्मादध्वर्यू घर्मं संभरतः । तं संभृत्योचतुः—ब्रह्मन् घर्मेण प्रचरिष्यामः, होतर्घर्ममभिष्टुहि, उद्गातः सामानि गाय, इति । प्रचरत घर्ममित्यनुजानाति । ब्रह्मप्रसूता हि प्रचरन्ति । ब्रह्म हेदं प्रसवानामीशे । सवितृप्रसूततायै । घर्मं तपामि[2], ब्रह्म जज्ञानम्[3] इयं पित्र्या राष्ट्र्येत्वग्रे[4] इति घर्मं ताप्यमानमुपासीत शस्त्रवदर्धर्चश आहावप्रतिगरवर्जं रूपसमृद्धाभिः । एतद् वै यज्ञस्य समृद्धं

१. 'उदक्रमन्न' इति गा० अपपाठः ।
२. अथर्व० (पै० सं०) ५।१६।२।।
३. अथर्व० (पै० सं०) ५।२।२।। अथर्व० (शौ० सं०) ४।१।१।।
४. अथर्व० (पै० सं०) ५।२।१।। अथर्व० (शौ० सं०) ४।१।२।।

यद् रूपसमृद्धं, यत् कर्म क्रियमाणमृग् यजुर्वाभिवदति । स्वस्ति तस्य यज्ञस्य पारमश्नुते य एवं वेद । देवमिथुनं[1] वा एतद्ध यद् घर्मः । तस्मादन्तर्धाय प्रचरन्ति । अन्तर्हिता वै मिथुनं चरन्तीति । तदेतद् देवमिथुनमित्याचक्षते । तस्य यो घर्मस्त च्छिश्नं, यौ शफौ तावाण्ड्यौ, योपयमनी[2] ते[2] श्रोणिकपाले, यत् पयस्तद् रेतः । तदग्नौ देवयोन्यां रेतो ब्रह्ममयं धत्ते प्रजननाय । सो ऽग्निर्देवयोनिर्ऋङ्मयो यजुर्मयः साममयो ब्रह्ममयो ऽमृतमय आहुतिमयः सर्वेन्द्रियसंपन्नो यजमान ऊर्ध्वः स्वर्गं लोकमेति । तदाहुः—न प्रथमयज्ञे प्रवर्ग्यं कुर्वीत, अनुपनामुका[3] ह वा एनमुत्तरे यज्ञक्रतवो भवन्तीति । कामं तु यो ऽनूचानः श्रोत्रियः स्यात्, तस्य प्रवृञ्ज्यात् । आत्मा वै स यज्ञस्येति विज्ञायते । अपशिरसा ह वा एष यज्ञेन यजते, यो ऽप्रवर्ग्येण यजते । शिरो ह वा एतद् यज्ञस्य यत् प्रवर्ग्यः । तस्मात् प्रवर्ग्यवतैव याजयेद् नाप्रवर्ग्येण । तदप्येषाभ्यनूक्ता—चत्वारि शृङ्गा[4] इति ।।६।।[5]

देवाश्च ह वा ऋषयश्चासुरैः संयत्ता आसन् । तेषामसुराणामिमाः पुरः प्रत्यभिजिता आसन्—अयस्मयी पृथिवी रजतान्तरिक्षं हरिणी द्यौः । ते देवाः संघातंसंघातं पराजयन्त । ते ऽविदुः—अनायतना हि वै स्मः[6], तस्मात् पराजयामह इति । त एताः पुरः प्रत्यकुर्वत—हविर्धानं दिव आग्नीध्रमन्तरिक्षात् सदः पृथिव्याः । ते देवा अब्रुवन्—उपसदमुपायाम, उपसदा वै महापुरं जयन्तीति । त एभ्यो लोकेभ्यो निरघ्नन्, एकयामुष्माल्लोकादेकयान्तरिक्षादेकया पृथिव्याः । तस्मादाहुः—उपसदा वै महापुरं जयन्तीति । त एभ्यो लोकेभ्यो निर्हता ऋतून् प्राविशन् ।

---

१. गा० सं० । 'वेदमिथुनं' इति कोशेषु पाठः ।
२. ,, ,, । 'य उपयमनी के' ,, ,, ,, ।
३. ,, ,, । 'अनुपनामका' ,, ,, ,, ।
४. तु०—गो० ब्रा० १।२।१६।।
५. तु०—ऐ० ब्रा० १।१८।। कौषी० ब्रा० ८।३।। ऐ० ब्रा० १।२३।।
६. गा० सं० । 'वै स्यः स्मः' इति रा० पाठः । 'वै स्यः' इत्यन्यत्र कोशेषु पाठः ।

ते षडुपायन् । तानुपसद्भिरेवर्तुभ्यो निरघ्नन्, द्वाभ्याममुष्माल्लोकाद् द्वाभ्यामन्तरिक्षाद् द्वाभ्यां पृथिव्याः त ऋतुभ्यो निर्हताः संवत्सरं प्राविशन् । ते द्वादशोपायन् । तानुपसद्भिरेव संवत्सराद् निरघ्नन्, चतसृभिरमुष्माल्लोकाच्चतसृभिरन्तरिक्षाच्चतसृभिः पृथिव्याः । ते संवत्सराद् निर्हता अहोरात्रे प्राविशन् । ते यत् सायमुपायन्, तेनैनान् रात्र्या अनुदन्त, यत् प्रातस्तेनाह्नः । तस्माद् गौः सायं प्रातस्तनमाप्यायते प्रातः सायन्तनम् । तानुपसद्भिरेवैभ्यो लोकेभ्यो नुदमाना[1] आयन् । ततो देवा अभवन् परासुराः । सर्वेभ्य एवैभ्यो लोकेभ्यो भ्रातृव्यं नुदमान एति, य एवंविद्वानुपसदमुपैति ॥७॥[2]

न द्वादशाग्निष्टोमस्योपसदः स्युः, अशान्ता निर्मंज्युर्न[3] तिस्रो ऽहीनस्य । उपरिष्टाद् यज्ञक्रतुर्गरीयानभिषीदेद्, यथा गुरुर्भारो ग्रीवा निःश्रृणीयाद्,[4] आर्तिमार्छेत् । द्वादशाहीनस्य कुर्यात्, प्रत्युत्तब्ध्यै[5] सयत्वाय । तिस्रो ऽग्निष्टोमस्योपसदः स्युः, शान्त्या अनिर्मार्गाय[6] । ते देवा असुर्यानिमाँल्लोकान् नान्ववैतुमधृष्णुवन्[7] । तानग्निना मुखेनान्ववायन् । यदग्निमन्त्युपसदां प्रतीकानि भवन्ति यथा क्षेत्रपतिं क्षेत्रे ऽन्ववनयति,[8] एवमेवैतदग्निना मुखेनेमाँल्लोकानभिनयन्तो यन्ति । यो ह वै देवान् साध्यान् वेद, सिध्यत्यस्मै । इमे वाव लोका यत् साध्या देवाः । स य एवमेतान् साध्यान् वेद, सिध्यत्यस्मै । सिध्यत्यमुष्मै सिध्यत्यस्मै लोकाय[9] य एवंविद्वानुपसदमुपैति ॥८॥[10]

---

१. गा० सं । 'नुदमान' 'नदमान' इति कोशेषु पाठौ ।
२. तु० काठ० सं० २४।१० ।। मैं० सं ३।८।१
३. गा० सं (द्र० काठ० सं० २४।१०) । 'निर्मृज्येरन्न' इति कोशेषु पाठः ।
४. ,, ,, ,, ,, । 'निश्रीणीयात्' इति कोशेषु पाठः ।
५. ,, ,, ,, ,, । 'प्रत्युतथै' ,, ,, ,, ।
६. ,, ,, ,, ,, । 'शान्ताग्नीर्मार्गाय' ,, ,, ,, ।
७. ,, ,, ,, ,, । 'कानान्ववै' ,, ,, ,, ।
८. यथाकाठकं संशोधितः पाठः । '—नयन्ति' इति रा० गा० पाठः ।
९. गा० सं० । 'सिध्यत्यस्माल्लोकाद्' इति कोशेषु पाठः ।
१०. तु०—काठ० सं० २४।१०॥

अथ यत्राहाध्वर्युः—अग्नीद् देवपत्नीर्व्याचक्ष्व, सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति, तदपरेण गार्हपत्यं प्राङ्मुखस्तिष्ठन्ननवानन्नाग्नीध्रो देवपत्नीर्व्याचष्टे—पृथिव्यग्नेः पत्नी, वाग् वातस्य पत्नी, सेनेन्द्रस्य पत्नी, धेना बृहस्पतेः पत्नी, पथ्या पूष्णः पत्नी, गायत्री वसूनां पत्नी, त्रिष्टुब् रुद्राणां पत्नी, जगत्यादित्यानां पत्नी, अनुष्टुब् मित्रस्य पत्नी, विराड् वरुणस्य पत्नी, पङ्क्तिर्विष्णोः पत्नी, दीक्षा सोमस्य राज्ञः पत्नीति । अति भ्रातृव्यानारोहति, नैनं भ्रातृव्या आरोहन्ति । उपरि भ्रातृव्यानारोहति, य एवंविद्वानाग्नीध्रो देवपत्नीर्व्याचष्टे ।।९।।[1]

यथा वै रथ एकैकमरमभिप्रतितिष्ठन् वर्तते, एवं यज्ञ एकैकां तन्वमभिप्रतितिष्ठन्नेति । पुरा प्रचरितोराग्नीध्रीये होतव्याः । एतद्ध वा उवाच वासिष्ठः सात्यहव्यः—अस्कन् सोम इत्युक्ते मा सूर्क्षत प्रचरत प्रातर्वावाद्याहं सोमं समस्थापयमिति । नास्य सोम स्कन्दति, य एवंविद्वान् सोमं पिबति । स ह स्म वै स आसन्द्यामासीनः[2] सक्तुभिरुपमथ्य सोमं पिबति । अहं वाव सर्वतो यज्ञं वेद य एतान्[3] वेद, न मामेष हिंसिष्यतीति । नैनं सोमपीथो न पेयो हिनस्ति, य एवंविद्वान् सोमं पिबति । तं ह स्म यदाहुः—कस्मात् त्वमिदमासन्द्यामासीनः सक्तुभिरुपमथ्य सोमं पिबसीति ? देवतास्वेव यज्ञं प्रतिष्ठापयामीत्यब्रवीत् । ब्रह्मणो[4] यस्यैवंविदुषो यस्यैवंविद्वान् यज्ञार्त्या यज्ञे प्रायश्चित्तं जुहोति, देवतास्वेव यज्ञं प्रतिष्ठापयति । यज्ञार्तिं प्रतिजुहुयात्, सयोनित्वाय । त्रयस्त्रिंशद् वै यज्ञस्य तन्व इति, एकान्नत्रिंशत् स्तोमभागाः, त्रीणि सवनानि, यज्ञश्चतुर्थः । स्तोमभागैरेवैतत् स्तोमभागान् प्रतिप्रयुङ्क्ते, सवनैः सवनानि, यज्ञेन यज्ञम् । सर्वा ह वा अस्य यज्ञस्य तन्वः प्रयुक्ता भवन्ति, सर्वा आप्ताः, सर्वा अवरुद्धाः । देवस्य सवितुः प्रसवे बृहस्पतये

---

१. तु०—का० सं० ९।१०, १५ ।। १।९।१।।

२. गा० सं० । 'हासन्द्या०' इति कोशेषु पाठः ।

३. सन्दिग्धम् !

४. 'ब्रह्मणः' इति' इति पदं काठकसंहितायां नश्रूयते ।

स्तुत, इति। यद् यद् वै सविता देवेभ्यः प्रासुवत्, तेनार्ध्नुवन्। सवितृप्रसूता एव स्तुवन्ति; ऋध्नुवन्ति, ऋध्यन्ते ह वा अस्य स्तोमाः, यज्ञं[1] ऋध्यते, यजमानं[2] ऋध्यते प्रजायै, ऋध्यते पशुभ्यः, ऋध्यते ब्रह्मणे यस्यैवंविद्वान् ब्रह्मा भवति ॥१०॥[3]

देवाश्च ह वा असुराश्चास्पर्धन्त। ते देवाः समावदेव यज्ञे कुर्वाणा आसन्। यदेव देवा अकुर्वत तदसुरा अकुर्वत। ते[4] न[4] व्यावृतमगच्छन्। ते देवा अब्रुवन्—अयतेमं[5] यज्ञं तिर उपर्यसुरेभ्यस्तंस्यामहा[6] इति। तमेताभिराच्छाद्योदक्रामन्[7]—यजूंषि यज्ञे समिधः स्वाहा[8] इति। तं तिर उपर्यसुरेभ्यो यज्ञमतन्वत। तमेषां यज्ञमसुरा नान्ववायन्। ततो देवा अभवन् परासुराः। स य एवंविद्वांस्तिर उपर्यसुरेभ्यो यज्ञं तनुते, भवत्यात्मना, परास्याप्रियो भ्रातृव्यो भवति। एतैरेव जुहुयात् समृतयज्ञे[9] चतुर्भिश्चतुर्भिरन्वाख्यायम्[10], पुरस्तात् प्रातरनुवाकस्य जुहुयात्। एतावान् वै यज्ञः, यावानेष यज्ञस्तं वृङ्क्ते, सयज्ञो भवत्ययज्ञ इतरः। एतैरेव जुहुयात् पुरस्ताद् द्वादशाहस्य। एष ह वै प्रत्यक्षं द्वादशाहः। तमेवालभ्यैतैरेव जुहुयात् पुरस्ताद् दीक्षायाः। एषा ह वै प्रत्यक्षं दीक्षा। तामेवालभ्यैतैरेवातिथ्यमभिमृशेद्—यज्ञेन यज्ञमयजन्त देवा[11] इति ॥११॥[12]

---

१. यथाकाठकम् अत्र 'ऋध्यते यज्ञः' इति पाठः स्यात्।

२. रा० सम्मतोऽयं पाठः, गा० संस्करणे नोपलभ्यते। 'यजमानाय' इति काठकपाठः।

३. तु०—काठ० सं० ३४।१७, १८॥

४. मैत्रायणी-संहितायां 'तेन' इत्येकं पदं श्रूयते।

५. 'अयतेमं' इति पाठो भ्रष्टः प्रतीयते, अस्य स्थाने 'एतं' इति पाठो (मै० सं० १।९।८) युज्यते।

६. 'तंस्यामहं' इति गा० सं०। 'तेस्यामहा' इति कोशेषु पाठः।

७. गा० सं०। 'उदक्रामन्ति' इति कोशेषु पाठः।

८. अथर्व० (पै० सं०) ९।२।१॥ अथर्व० (शौ० सं०) ५।२६।१॥

९. गा० सं०। 'सवृतयज्ञे' इति कोशेषु पाठः।

१०. गा० सं० '—ख्यानं' इति कोशेषु पाठः।

११. अथर्व० (पै० सं०) २०।२।२॥ अथर्व० (शौ० सं०) ७।५।१॥

१२. तु०—मै० सं० १।९।८॥

यत्र विजानाति ब्रह्मन् सोमोऽस्कन्निति तमेतयालभ्याभिमन्त्रयते—

अभूद् देवः सविता वन्द्यो नु न इदानीमह्न उपवाच्यो नृभिः।
वि यो रत्ना भजति मानवेभ्यः श्रेष्ठं नो अत्र द्रविणं यथा दधत् ॥[1]

इति ।

'ये अग्नयो अप्स्वन्तः'[2] इति सप्तभिरभिजुहोति । यदेवास्यावस्कन्नं भवति, तदेवास्यैतदग्नौ स्वगाकरोति । अग्निर्हि सुकृतीनां हविषां प्रतिष्ठा । अथ विसृप्य वैप्रुषान् होमान् जुह्वति—'द्रप्सश्चस्कन्द'[3] इति । या एवास्याभिषूयमाणस्य विप्रुष स्कन्दन्ति, अंशुर्वा ता एवास्यैतदाहवनीये स्वगाकरोति । आहवनीयो ह्याहुतीनां प्रतिष्ठा । 'यस्ते द्रप्स स्कन्दति'[4] इति । स्तोको वै द्रप्सः । 'यस्ते अंशुर्बाहुच्युतो धिषणाया उपस्थाद्' इति । बाहुभिरभिच्युतो ऽंशुरधिषवणाभ्यामधिस्कन्दति[5] । अध्वर्योर्वा परि यः पवित्रात् तं ते जुहोमि मनसा वषट्कृतम्' इति । तद् यथा वषट्कृतं स्वाहाकृतं हुतमेवं भवति ॥१२॥

ऋषयो वा इन्द्रं प्रत्यक्षं नापश्यन् । तं वसिष्ठ एव प्रत्यक्षमपश्यत् । सो ऽबिभेद्—इतरेभ्य ऋषिभ्यो मा प्रवोचदिति । सो ऽब्रवीत्—ब्राह्मणं ते वक्ष्यामि यथा त्वत्पुरोहिताः प्रजाः प्रजनिष्यन्ते, अथेतरेभ्य ऋषिभ्यो मा प्रवोच[6] इति । तस्मा एतान् स्तोमभागानुवाच । ततो वसिष्ठपुरोहिताः प्रजाः प्राजायन्त[7] । स्तोमो वा एतेषां भागः । तत् स्तोम-

---

१. ऋ० ४।५४।१॥
२. अथर्व० (पै० सं०) ३।१२।१॥ अथर्व० (शौ० सं०) ३।२१।१॥
३. अथर्व० (पै० सं०) २०।१२।७॥ अथर्व० (शौ० सं०) १८।४।२८॥ ऋ० १०।१७।११॥
४. अथर्व० (पै० सं०) २०।१२।८॥ ऋ० १०।१७।१२॥
५. गा० सं० । '—स्कन्दन्ति' इति कोशेषु पाठः ।
६. ,, ,, । 'प्रवोचद्' ,, ,, ,, ।
७. ,, ,, । 'प्रजायन्त' ,, ,, ,, ।

भागानां स्तोमभागत्वम् । रश्मिरसि, क्षयाय त्वेति । क्षयो वै देवाः । देवेभ्य एव यज्ञं प्राह । प्रेतिरसि, धर्मणे त्वेति । धर्मो मनुष्याः । मनुष्येभ्य एव यज्ञं प्राह । अनितिरसि,[1] संधिरसि, प्रतिधिरसीति । त्रयो वै लोकाः । लोकेष्वेव यज्ञं प्रतिष्ठापयति । विष्टम्भो ऽसीति । वृष्टिमेवावरुन्द्धे । प्रावो ऽस्यह्नांसि[2] इति मिथुनमेव करोति । उशिगसि, प्रकेतो ऽसि, सुदितिरसीति । अष्टौ वसव एकादश रुद्रा द्वादशादित्या वाग् द्वात्रिंशी स्वरस्त्रयस्त्रिंशस्त्रयस्त्रिंशद् देवाः । देवेभ्य एव यज्ञं प्राह । ओजो ऽसि, पितृभ्यस्त्वेति । बलमेव तत् पितॄननुसंतनोति । तन्तुरसि, प्रजाभ्यस्त्वेति । प्रजा एव पशूननुसंतनोति । रेवदसि, ओषधीभ्यस्त्वेति । ओषधीष्वेव यज्ञं प्रतिष्ठापयति । पृतनाषाडसि, पशुभ्यस्त्वेति । प्रजा एव पशूननुसंतनोति । अभिजिदसीति । वज्रो वै षोडशी । व्यावृत्तो ऽसौ वज्रः । तस्मादेषो ऽन्यैर्व्यावृत्तः[3] । नाभुरसीति[4] । प्रजापतिर्वै सप्तदशः । प्रजापतिमेवावरुन्द्धे ॥१३॥[5]

अधिपतिरसि, धरुणो ऽसि, संसर्पो ऽसि, वयोधा असीति । प्राणो ऽपानश्चक्षुः श्रोत्रमित्येतानि वै पुरुषमकरन् प्राणानुपैति, प्रजात्या एव । त्रिवृदसि, प्रवृदसि, स्ववृदसि, अनुवृदसीति । मिथुनमेव करोति । आरोहो ऽसि, प्ररोहो ऽसि, संरोहो ऽसि, अनुरोहो ऽसीति । प्रजापतिरेव । वसुको ऽसि, वस्यष्टिरसि, वेषश्रीरसीति । प्रतिष्ठितिरेव । आक्रमो ऽसि, संक्रमो ऽसि, उत्क्रमो ऽसि, उत्क्रान्तिरसीति । ऋद्धिरेव । यद् यद् वै सविता देवेभ्यः प्रासुवत्,

१. 'अन्वितिरसि' इति पाठोऽत्र युक्तः स्यात् (तु॰—काठ॰ सं ३७।१७; तै॰ सं ३।५।२; वैतान॰ २०।१३) ।

२. अयं पाठो भ्रष्टः प्रतीयते । 'प्रवास्यन्वासीति' इति तैत्तिरीयकाठकयोः पाठः (तै॰ सं॰ ३।५।२; काठ॰ सं॰ ३७।१७) ।

३. गा॰ सं॰ । 'ऽन्यै व्यावृत्तः' 'ऽन्ये वावृत्तः' इति कोशेषु पाठौ ।

४. 'नाभुः' इति सन्दिग्धम् ।

५. तु॰—काठ॰ सं॰ ३७।१७।। तै॰ सं॰ ३।५।२ ।।

तेनाघ्नुवन् । सवितृप्रसूता एव स्तुवन्ति, ऋध्नुवन्ति । बृहस्पतये स्तुतेति । बृहस्पतिर्वा आङ्गिरसो देवानां ब्रह्मा । तदनुमत्यैवों भूर्जनदिति प्रातःसवन ऋग्भिरेवोभयतो ऽथर्वाङ्गिरोभिर्गुप्ताभिर्गुप्त्यै स्तुतेत्येव, ओं भुवो जनदिति माध्यंदिने सवने यजुर्भिरेवोभयतो ऽथर्वाङ्गिरोभिर्गुप्ताभिर्गुप्त्यै स्तुतेत्येव, ओं स्वर्जनदिति तृतीयसवने सामभिरेवोभयतो ऽथर्वाङ्गिरोभिर्गुप्ताभिर्गुप्त्यै स्तुतेत्येव । अथ यद्यहीन उक्थ्यः षोडशी वाजपेयो ऽतिरात्रो ऽप्तोर्यामा वा स्यात्, सर्वाभिः सर्वाभिरत ऊर्ध्वं व्याहृतिभिरनुजानाति, ओं भूर्भुवः स्वर्जनद् वृधत् करद् रुहन् महत् तच्छमोमिन्द्रवन्त स्तुतेति सेन्द्रान्मापगायत[1] सेन्द्रान् स्तुतेत्येव । इन्द्रियवानृद्धिमान् वशीयान् भवति य एवं वेद, यश्चैवंविद्वान् स्तोमभागैर्यजते ॥१४॥[2]

यो ह वा आयतांश्च प्रतियतांश्च स्तोमभागान् विद्यात्,[3] स[4] विष्पर्धमानयोः समृतसोमयोर्ब्रह्मा[4] स्यात् । स्तुतेषे,[5] स्तुतोर्जे, स्तुत देवस्य सवितुः सवे, बृहस्पतिं वः प्रजापतिं वो वसून् वो देवान् रुद्रान् वो देवानादित्यान् वो देवान् साध्यान् वो देवानाप्त्यान् वो देवान् विश्वान् वो देवान् सर्वान् वो देवान् विश्वतस्परि हवामहे । जनेभ्यो ऽस्माकमस्तु केवलः, इतः कृणोतु वीर्यमिति । एते ह वा आयताश्च प्रतियताश्च स्तोमभागाः । तान् जपन्नुपर्युपरि परेषां ब्रह्माणमवेक्षेत । तत एषामधःशिरा ब्रह्मा पतति, ततो यज्ञः, ततो यजमानः । यजमाने ऽधःशिरसि पतिते स देशो ऽधःशिराः पतति, यस्मिन्नर्धे यजन्ते । देवाश्च ह वा असुराश्च समृतसोमौ[6] यज्ञावतनुताम् । अथ बृहस्पतिराङ्गिरसो देवानां ब्रह्मा । स आयतांश्च प्रतियतांश्च

---

१. सन्दिग्धम् !

२. तु०—तै० सं० ३।५।२ ॥

३. गा० सं० । 'विद्याच्च' 'विन्द्याच्च' इति कोशेषु पाठौ ।

४. „ „ (काठ० सं० ३४।१८) । 'सवृत०' इति कोशेषु पाठः ।

५. गा० सं० 'स्तुतोषे' 'स्तुतोमे' इति कोशेषु पाठः ।

६. 'अतन्वत' इति पाठमत्र गास्ट्रोऽनुमिमीते ।

स्तोमभागान् जपन्नुपर्युपर्यसुराणां ब्रह्माणमवैक्षत[1]। तत एषामधःशिरा ब्रह्मापतत्, ततो यज्ञः, ततो ऽसुरा इति ॥१५॥[2]

देवा यज्ञं पराजयन्त। तमाग्नीध्रात् पुनरुपाजयन्त। तदेतद् यज्ञस्यापराजितं यदाग्नीध्रम्। यदाग्नीध्राद्[3] धिष्ण्यान्[3] विहरति, तत एवैनं पुनस्तनुते, पराजित्यै। अप खलु वा एते गच्छन्ति, ये बहिष्पवमानं सर्पन्ति। बहिष्पवमाने स्तुत आह—अग्नीदग्नीन् विहर, बर्हि स्तृणीहि, पुरोडाशानलंकुर्विति। यज्ञमेवापराजित्य पुनस्तन्वाना आयन्ति। अङ्गारैर्द्वे सवने विहरति शलाकाभिस्तृतीयसवनम्, सशुक्रत्वाय। अथो संभवत्येवमेवैतत्। दक्षिणतो वै देवानां यज्ञं रक्षांस्यजिघांसन्। तान्याग्नीध्रेणापाघ्नत। तस्माद् दक्षिणामुखस्तिष्ठन्नग्नीत् प्रत्याश्रावयति, यज्ञस्याभिजित्यै, रक्षसामपहत्यै, रक्षसामपहत्यै ॥१६॥[4]

तदाहुः—अथ कस्मात् सौम्य एवाध्वरे प्रवृताहुतीर्जुह्वति, न हविर्यज्ञ इति? अकृत्स्ना वा एषा देवयज्या यद्धविर्यज्ञः। अथ हैषैव कृत्स्ना देवयज्या यत् सौम्यो ऽध्वरः। तस्मात् सौम्य एवाध्वरे प्रवृताहुतीर्जुह्वति। जुष्टो वाचे भूयासं, जुष्टो वाचस्पतये, देवि वाग् यद् वाचो मधुमत्तमं तस्मिन् मा धाः, स्वाहा वाचे, स्वाहा वाचस्पतये, स्वाहा सरस्वत्यै, स्वाहा सरस्वत्या[5] इति पुरस्तात् स्वाहाकारेण जुहोति। तस्माद् वागत ऊर्ध्वमुत्सृष्टा यज्ञं वहति मनसोत्तराम्। मनसा हि मनः प्रीतम्। तदु हैके सप्ताहुतीर्जुह्वति, सप्त छन्दांसि प्रवृत्तानि, प्रतिमन्त्रमिति वदन्तः। यथा मेखला पर्यस्यते मेध्यस्य चामेध्यस्य च विहृत्यै, एवं हैवैते न्युप्यन्ते मेध्यस्य

---

१. गा० सं०। 'अवेक्षत' 'अवेक्षेत' इति कोशेषु पाठौ।

२. तु०—काठ० सं० ३४।१८॥

३. गा० सं०। '—ग्नीध्राधि०' इति कोशेषु पाठः। '—ग्नीध्राद्धिष्ण्यान्' इति पुणे क-कोशे।

४. तु०—तै० सं० ६।३।१।१-२॥ शत० ब्रा ४।२।५।११॥

५. तु०— तै० सं० ३।१।१०।१॥ कौषी० ब्रा० १०।६॥

च्चामेध्यस्य च विहृत्यै, यज्ञस्य विहृत्यै। प्राचीनं हि धिष्ण्येभ्यो देवानां लोकाः, प्रतीचीनं मनुष्याणाम्। तस्मात् सोमं पिबन्तः प्राञ्चो धिष्ण्या नोपसर्प्याः। जनं ह्येतद् देवलोकं ह्यध्यारोहन्ति[1]। तेषामेतदायतनं चोदयनं च यदाग्नीध्रं च सदश्च। तद् योऽविद्वान् संचरति, आर्तिमार्च्छति। अथ यो विद्वान् संचरति, न स धिष्णीयामार्तिमार्च्छति ॥१७॥[2]

प्रजापतिर्वै यज्ञः। तस्मिन् सर्वे कामाः सर्वा इष्टीः सर्वममृतत्वम्। तस्य हैते गोप्तारो यद् धिष्ण्याः। तान् सदः प्रस्रप्स्यन् नमस्करोति—नमो नम इति। न हि नमस्कारमति देवाः। ते ह नमसिताः कर्तारमतिसृजन्तीति। तत एतं प्रजापतिं यज्ञं प्रपद्यते, नमो नम इति। न हि नमस्कारमति देवाः। स तत्रैव यजमानः सर्वान् कामानाप्नोति, सर्वान् कामानाप्नोति ॥१८॥[3]

यो वै सदस्यान् गन्धर्वान् वेद, न सदस्यामार्तिमार्च्छति। सदः प्रस्रप्स्यन् ब्रूयात्—उपद्रष्ट्रे नम इति। अग्निर्वै द्रष्टा, तस्मा उ एवात्मानं परिददाति[4]। सर्वमायुरेति, न पुरा जरसः प्रमीयते य एवं वेद। सदः प्रसृप्य ब्रूयात्—उपश्रोत्रे नम इति। वायुर्वा उपश्रोता, तस्मा उ एवात्मानं परिददाति[4]। सर्वमायुरेति, न पुरा जरसः प्रमीयते य एवं वेद। सदः प्रसर्पन् ब्रूयात्—अनुख्यात्रे नम इति। आदित्यो वा अनुख्याता, तस्मा उ एवात्मानं परिददाति[4]। सर्वमायुरेति, न पुरा जरसः प्रमीयते य एवं वेद। सदः प्रसृप्तो ब्रूयात्—उपद्रष्ट्रे नम इति। ब्राह्मणो वा उपद्रष्टा, तस्मा उ[5] एवात्मानं परिददाति[4]। सर्वमायुरेति, न पुरा जरसः प्रमीयते य एवं वेद। ते वै सदस्या गन्धर्वाः। स य एवमेतान् सदस्यान् गन्धर्वान्-

१. गा० सं। 'ह्य_ध्या०' इति कोशेषु पाठः।
२. तु०—कौषी० ब्रा० १०।६॥
३. तु०—कौषी० ब्रा० १३।१॥
४. गा० सं०। 'परिदधाति' इति कोशेषु पाठः।
५. " " । 'ऊ' " " " ।

विद्वान् सदः प्रसर्पति, स सदस्यामार्तिमार्च्छति । अथ यो विद्वान् संचरति, न सदस्यामार्तिमार्च्छति । एतेन ह स्म वा अङ्गिरसः सर्वं सदः पर्याहुः । ते न सदस्यामार्तिमार्च्छन्ति । अथ यान् कामयेत—न सदस्यामार्तिमार्च्छेयुरिति, तेभ्य एतेन सर्वं सदः परिब्रूयात् । ते न सदस्यामार्तिमार्च्छन्ति । अथ यं कामयेत—प्रमीयतेति, तमेतेभ्य आवृश्चेत् । प्रमीयते ॥१९॥

तदाहुः—यदैन्द्रो यज्ञोऽथ कस्माद् द्वावेव प्रातःसवने प्रस्थितानां प्रत्यक्षादैन्द्रीभ्यां यजतो होता चैव ब्राह्मणाच्छंसी च ? इदं ते सोम्यं मधु[1] इति होता यजति । इन्द्र त्वा वृषभं वयम्[2] इति ब्राह्मणाच्छंसी । नानादेवत्याभिरितरे । कथं तेषामैन्द्रचो भवन्ति ? मित्रं वयं हवामहे[3] इति मैत्रावरुणो यजति । वरुणं सोमपीतये[3] इति । यद् वै किं च पीतवत्, तदैन्द्रं रूपम्, तेनेन्द्रं प्रीणाति । मरुतो यस्य हि क्षये[4] इति पोता यजति । स सुगोपातमो जनः[4] इति । इन्द्रो वै गोपाः । तदैन्द्रं रूपम्, तेनेन्द्रं प्रीणाति । अग्ने पत्नीरिहा वह[5] इति नेष्टा यजति । त्वष्टारं सोमपीतये[5] इति । यद् वै किं च पीतवत्, तदैन्द्रं रूपम्, तेनेन्द्रं प्रीणाति । उक्षान्नाय वशान्नाय[6] इत्याग्नीध्रो यजति । सोमपृष्ठाय वेधसे[6] इति । इन्द्रो वै वेधाः । तदैन्द्रं रूपम्, तेनेन्द्रं प्रीणाति ।

— प्रातर्यावभिरागतं देवेभिर्जेन्यावसू । इन्द्राग्नी सोमपीतये ॥[7] इति—

स्वयंसमृद्धा अच्छावाकस्य । एवमु हैता ऐन्द्रचो भवन्ति । यद् नानादेवत्याः, तेनान्या देवताः प्रीणाति । यद् गायत्र्यस्तेनाग्नेय्यः । तस्मादेताभिस्त्रयमवाप्तं भवति ॥२०॥[8]

---

१. ऋ० ८।६५।८॥ २. ऋ० ३।४०।१ ॥ अथर्व० (शौ० सं०) २०।१।१॥

३. ऋ० १।२३।४॥

४. ऋ० १।८६।१॥ अथर्व० (शौ० सं०) २०।१।२॥

५. ऋ० १।२२।९॥

६. अथर्व० (पै० सं०) ३।१२।६॥ अथर्व० (शौ० सं०)३।२१।६ ॥ ऋ० ८।४३।११॥

७. ऋ० ८।३८।७ (गो० ब्रा० २।३।१५)॥ ८. तु०—ऐ० ब्रा० ६।१०॥

ते वै खलु सर्व एव माध्यंदिने प्रस्थितानां प्रत्यक्षादैन्द्रीभिर्यजन्ति, अभितृण्वतीभिरेके। पिबा सोममभि यमुग्र तर्द[1] इति होता यजति। स ईं पाहि य ऋजीषी तरुत्रः[2] इति मैत्रावरुणः। एवा पाहि प्रत्नथा मन्दतु त्वा[3] इति ब्राह्मणाच्छंसी। अर्वाङेहि सोमकामं त्वाहुः[4] इति पोता। तवायं सोमस्त्वमेह्यर्वाङ्[5] इति नेष्टा। इन्द्राय सोमाः प्रदिवो विदानाः[6] इत्यच्छावाकः। आपूर्णो अस्य कलशः स्वाहा[7] इत्याग्नीध्रः। एवमु हैता अभितृण्वत्यो भवन्ति। इन्द्रो वै प्रातःसवनं नाभ्यजयत्। स एताभिर्माध्यंदिनं सवनमभ्यतृणत्। तद् यदेताभिर्माध्यंदिनं सवनमभ्यतृणत्,[8] तस्मादेता अभितृण्वत्यो भवन्ति ॥२१॥[9]

तदाहुः—यदैन्द्रार्भवं तृतीयसवनमथ कस्मादेक एव तृतीयसवने प्रस्थितानां प्रत्यक्षादैन्द्रार्भव्या यजति? इन्द्र ऋभुभिर्वाजवद्भिः समुक्षितम्[10] इति होतैव। नानादेवत्याभिरितरे। कथं तेषामैन्द्रार्भव्यो भवन्ति? इन्द्रावरुणा सुतपाविमं सुतम्[11] इति मैत्रावरुणो यजति। युवो रथो अध्वरो देववीतये[12] इति बहूनि वाह। तद्दभूणां रूपम्। इन्द्रश्च सोमं पिबतं बृहस्पते[13] इति ब्राह्मणाच्छंसी यजति। आ वां विशन्त्विन्दवः स्वाभुवः[14] इति बहूनि वाह। तद्दभूणां रूपम्। आ वो वहन्तु सप्तयो रघुष्यदः[15] इति पोता यजति। रघुपत्वानः प्र जिगात बाहुभिः[16] इति बहूनि वाह। तद्दभूणां रूपम्।

---

१. ऋ० ६।१७।१॥ २. ऋ० ६।१७।२॥

३. अथर्व० (शौ० सं०) २०।८।१॥ ऋ० ६।१७।३॥

४. अथर्व० (शौ० सं०) २०।८।२॥ ऋ० १।१०४।९॥

५. ऋ० ३।३५।६॥ ६. ऋ० ३।३६।२॥

७. अथर्व० (शौ० सं०) २०।८।३॥ ऋ० ३।३२।१५॥

८. गा० सं०। 'अभ्यतृणवत्, इति कोशेषु पाठः। ९. तु०—ऐ० ब्रा० ६।११॥

१०. ऋ० ३।६०।५॥

११. अथर्व० (पै० सं०) २०।६।५॥ अथर्व० (शौ०सं०) ७।५८।१॥ ऋ० ६।६८।१०॥

१२. अथर्व० (शौ० सं०) ७।५८।१॥ 'अथो रथो अध्वरं' इति पै० सं० (२०।६।५) पाठः, '...अध्वरं' इति ऋ० ६ ६८।१०॥

१३. अथर्व० (शौ० सं०) २०।१३।१॥ ऋ० ४।५०।१०॥

१४. अथर्व० (शौ० सं०) २०।१३।२॥ ऋ० १।८५।६॥

अमित्र नः सुहवा आ हि गन्तन[1] इति नेष्टा यजति। गन्तनेति बहूनि वाह। तद्भूणां रूपम्। इन्द्राविष्णू पिवतं मध्वो अस्य[2] इत्यच्छावाको यजति। आ वामन्धांसि मदिराण्यग्मन्[2] इति बहूनि वाह। तद्भूणां रूपम्। इमं स्तोममर्हते जातवेदसे[3] इत्याग्नीध्रो यजति। रथमिव सं महेमा मनीषया[3] इति बहूनि वाह। तद्भूणां रूपम्। एवमु हैता ऐन्द्राभंव्यो भवन्ति। यद् नानादेवत्याः, तेनान्या देवताः प्रीणाति। यदु जगत्प्रासाहा जागतमु वै तृतीयसवनम्। तृतीयसवनस्य समष्ट्यै[4] ॥२२॥

विचक्षणवतीं वाचं भाषन्ते चनसितवतीम्। विचक्षयन्ति ब्राह्मणम्। चनसयन्ति प्राजापत्यम्। सत्यं वदन्ति। एतद् वै मनुष्येषु सत्यं यच्चक्षुः। तस्मादाहुराचक्षाणम्—अद्रागिति। स यदाहाद्राक्षमिति, तथाहास्य श्रद्दधति। यद्यु वै स्वयं वै[5] दृष्टं[5] भवति न बहूनां जनानामेष श्रद्दधाति। तस्माद् विचक्षणवतीं वाचं भाषन्ते चनसितवतीम्। सत्योत्तरा हैवैषां वागुदिता भवति ॥२३॥[6]

समृतयज्ञो[7] वा एष यद् दर्शपूर्णमासौ। कस्य वाव देवा यज्ञमागच्छन्ति, कस्य वा न? बहूनां वा एतद् यजमानानां सामान्यमहः। तस्मात् पूर्वेद्युर्देवताः परिगृह्णीयात्। यो ह वै पूर्वेद्युर्देवताः परिगृह्णाति, तस्य श्वो भूते यज्ञमागच्छन्ति। तस्माद् विहव्यस्य चतस्र ऋचो जपेत्। यज्ञविदो हि मन्यन्ते सोम एव समृत[8] इति, यज्ञो यज्ञेन समृतः[8] ॥२४॥[9]

॥ इत्यथर्ववेदे गोपथब्राह्मणोत्तरभागे द्वितीयः प्रपाठकः ॥

—:o:—

१. ऋ० २।३६।३॥ २. ऋ० ६।६९।७॥
३. अथर्व० (शौ० सं०) २०।१३।३॥ ऋ० १।९४।१॥
४. तु०—ऐ० ब्रा० ६।१२॥ ५. भ्रष्टः पाठः!
६. तु०—गो० ब्रा० १।३।१९॥ ऐ० ब्रा० १।६॥
७. गा० सं०। 'सवृत०' इति कोशेषु पाठः।
८. " "। 'सवृतः' " " "।
९. तु०—तै० सं० १।६।७।१॥

# तृतीयः प्रपाठकः

ओम्। देवपात्रं वै वषट्कारः। यद् वषट्करोति, देवपात्रेणैव तद् देवतास्तर्पयति। अथो यदाभितृष्यन्तीरभिसंस्थं तर्पयति, एवमेव तद् देवतास्तर्पयति यदनुवषट्करोति। तद् यथैवादो ऽश्वान् वा गा वा पुनरभ्याकारं[1] तर्पयति, एवमेव तद् देवतास्तर्पयति यदनुवषट्करोति। इमानेवाग्नीनुपासत इत्याहुर्धिष्ण्यान्। अथ कस्मात् पूर्वस्मिन्नेवाग्नौ जुह्वति पूर्वस्मिन् वषट्करोति? यदेव सोमस्याग्ने वीहीत्यनुवषट्करोति, तेनैव वषट्करोति, धिष्ण्यान् प्रीणाति। अथ संस्थितान् सोमान् भक्षयन्तीत्याहुर्येषां नानुवषट्करोति। तदाहुः—को नु सोमस्य स्विष्टकृद् भाग इति? यदेव सोमस्याग्ने वीहीत्यनुवषट्करोति, तेनैव संस्थितान् सोमान् भक्षयन्तीत्याहुः। स उ एष सोमस्य स्विष्टकृद् भागो यदनुवषट्करोति ॥१॥[2]

वज्रो वै वषट्कारः। स यं द्विष्यात् तं मनसा ध्यायन् वषट्कुर्यात्। तस्मिंस्तद् वज्रमास्थापयति। षडिति वषट्करोति। षड् वा ऋतवः, ऋतूनामाप्त्यै। वौषडिति वषट्करोति। असौ वाव वौ, ऋतवः षट्। एतमेव तदृतुष्वादधाति, ऋतुषु प्रतिष्ठापयति। तदु ह स्माह वैद[3] एतानि वा एतेन षट् प्रतिष्ठापयति। द्यौरन्तरिक्षे प्रतिष्ठिता, अन्तरिक्षं पृथिव्यां, पृथिव्यप्सु, आपः सत्ये,[4] सत्यं ब्रह्मणि, ब्रह्म तपसीति। एता

---

१. गा० सं० (ऐ० ब्रा० ३।५)। 'अभ्याधारं' इति कोशेषु पाठः।
२. तु०—ऐ० ब्रा० ३।५॥
३. गा० सं०। 'वैत' इति कोशेषु पाठः।
४. ,, ,,। 'सत्येन' ,, ,, ,,।

एव तद् देवताः प्रतिष्ठान्याः[1] प्रतितिष्ठन्तीरिदं[2] सर्वमनु प्रतितिष्ठति। प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद ।।२।।[3]

त्रयो वै वषट्काराः—वज्रो धामच्छद् रिक्तः। स यदेवोच्चैर्बलं[4] वषट्करोति स वज्रः। तं प्रहरति द्विषते भ्रातृव्याय वधं, यो ऽस्य स्तृत्यस्तस्मै स्तरीतवे। तस्मात् स भ्रातृव्यवता वषट्कृत्यः। अथ यः समः[5] संततो निर्हाणच्छत्स्व[6] धामच्छत्। तं तं प्रजाश्च पशवश्चानूपतिष्ठन्ते। तस्मात् स प्रजाकामेन पशुकामेन वषट्कृत्यः। अथ येनैव षडपराध्नोति स रिक्तः। रिणक्त्यात्मानं रिणक्ति यजमानम्[7]। पापीयान् वषट्कर्ता भवति, पापीयान् यस्मै वषट्करोति। तस्मात् तस्याशां नेयात्। किं स्वित् स यजमानस्य पापभद्रमाद्रियेतेति ह स्माह यो ऽस्य वषट्कर्ता भवति ? अत्रैवैनं यथा कामयेत तथा कुर्यात्। यं कामयेत यथैवानीजानो ऽभूत् तथैवेजानः स्यादिति, यथैवास्यर्चं ब्रूयात् तथैवास्य वषट्कुर्यात्। समानमेवैनं तत् करोति। यं कामयेत पापीयान् स्यादिति, उच्चैस्तरामस्यर्चं ब्रूयाद् नीचैस्तरां वषट्कुर्यात्। पापीयांसमेवैनं तत् करोति। यं कामयेत श्रेयान् स्यादिति, नीचैस्तरामस्यर्चं ब्रूयादुच्चैस्तरां वषट्कुर्यात्। श्रेयांसमेवैनं तत् करोति। श्रिय एवैनं तच्छ्रियमादधाति ।।३।।[8]

यस्यै देवतायै हविर्गृहीतं स्यात्, तां मनसा ध्यायन् वषट्कुर्यात्[9]।

---

१. 'प्रतिष्ठाः' इत्येव पाठोऽत्र समीचीनः (द्र०—ऐ० ब्रा० ३।६)।

२. गा० सं०। 'प्रतिष्ठ०' इति कोशेषु पाठः।

३. तु०—ऐ० ब्रा० ३।६।।

४. गा० सं०। 'वल' इति कोशेषु पाठः।

५. ,, ,, । 'सयः' ,, ,, ,, ।

६. अयं पाठो भ्रष्टः प्रतीयते ! ऐतरेयब्राह्मणे (३।७) तु 'निर्हाणर्चः स धामच्छत्' इति श्रूयते।

७. गा० सं०। 'यजमानस्य' इति कोशेषु पाठः।

८. तु०—ऐ० ब्रा० ३।७।।

९. तु०—निरु० ८।२२।।

साक्षादेव तद् देवतां प्रीणाति । प्रत्यक्षाद् देवतां परिगृह्णाति । संततमृचा वषट्कृत्यम्, संतत्यै । संधीयते प्रजया पशुभिर्य एवं वेद ॥४॥[1]

वज्रो वै वषट्कारः । स उ एष प्रहृतो ऽशान्तो दीदाय । तस्य ह न सर्व एव शान्तिं वेद नो प्रतिष्ठाम् । तस्माद्धाप्येतर्हि भूयानिव मृत्युः । तस्य हैषैव शान्तिरेषा प्रतिष्ठा यद् वागिति । वषट्कृत्य वागित्यनुमन्त्रयते । वषट्कार मा मां प्रमृक्षो माहं त्वां प्रमृक्षं, बृहता मन उपह्वये व्यानेन शरीरं, प्रतिष्ठासि[2] प्रतिष्ठां गच्छ[3] प्रतिष्ठां मा गमयेदिति । तदु ह स्माह दीर्घमेवैतत् सदप्रभ्वोजः[4] सह ओज इत्यनुमन्त्रयेत । ओजश्च ह वै सहश्च वषट्कारस्य[5] प्रियतमे तन्वौ । प्रियाभ्यामेव तत् तनूभ्यां समर्धयति । प्रियया तन्वा समृध्यते य एवं वेद ॥५॥[6]

वाक् च वै प्राणापानौ च वषट्कारः । ते वषट्कृते वषट्कृते व्युत्क्रामन्ति ।ताननुमन्त्रयते—वागोजः, सह ओजो, मयि प्राणापानाविति । वाचं चैव तत् प्राणापानौ च होतात्मनि प्रतिष्ठापयति । सर्वमायुरेति, न पुरा जरसः प्रमीयते य एवं वेद ।

शं नो भव हृद आ पीत इन्दो[7] पितेव सोम सूनवे सुशेवः ।
सखेव सख्य उरुशंस धीरः प्र ण आयुर्जीवसे सोम तारीः ॥[8]

इत्यात्मानं प्रत्यभिमृशति । ईश्वरो वा एषो ऽप्रत्यभिमृष्टो यजमानस्यायुः प्रत्यवहर्तुमनर्हन्[9] मा भक्षयेदिति । तद् यदेतेन प्रत्यभिमृशति,

१. तु०—ऐ० ब्रा० ३।७,८॥
२. गा० सं० । 'प्रतिष्ठामि' इति कोशेषु पाठः ।
३. ,, ,, । 'गच्छन्' ,, ,, ,, ।
४. ,, ,, । 'सदः प्रभ्वोजः' ,, ,, ,, ।
५. ,, ,, । 'वषट्कारश्च' ,, ,, ,, ।
६. तु०—ऐ० ब्रा० ३।८॥
७. गा० सं० । 'इन्द्रो' इति कोशेषु पाठः । पुणे-कोशयोः 'इन्दो' इत्येव पाठः ।
८. ऋ० ८।४८।४॥
९. गा० सं० । 'प्रत्यविहर्तुमनरिहन्' इति कोशेषु पाठः ।

आयुरेवास्मै तत् प्रतिरते। आप्यायस्व[1] सं ते पयांसि[2] इति द्वाभ्यां चमसानाप्याययन्त्यभिरूपाभ्याम् । यद् यज्ञे ऽभिरूपं तत् समृद्धम् ।।६।।[3]

प्राणा वा ऋतुयाजाः । तद् यद् ऋतुयाजैश्चरन्ति, प्राणानेव तद् यजमाने दधति । षड्तुनेति यजन्ति । प्राणमेव तद् यजमाने दधति । चत्वार ऋतुभिरिति यजन्ति । अपानमेव तद् यजमाने दधति । द्विऋर्तुनेत्युपरिष्टात् । व्यानमेव तद् यजमाने दधति । स चासु संभृतस्त्रेधा विहृतः–प्राणो ऽपानो व्यान इति । ततो ऽन्यत्र गुणितः । तथा ह यजमानः सर्वमायुरेति । अस्मिँल्लोक आर्ध्नोति । आप्नोत्यमृतत्वमक्षितं स्वर्गे लोके । ते वा एते प्राणा एव यद् ऋतुयाजाः । तस्मादनवानन्तो यजन्ति, प्राणानां सन्तत्यै । सन्तता इव हीमे प्राणाः । अथो ऋतवो वा ऋतुयाजाः । संस्थानुवषट्कारः । यो ऽत्रानुवषट्कुर्याद्, असंस्थितानृतून् संस्थापयेत् । यस्तं तत्र ब्रूयादसंस्थितानृतून् समतिष्ठिपद्, दुःषमं[4] भविष्यतीति शश्वत् तथा स्यात् ।।७।।[5]

तदाहुः—यद्धोता यक्षद्धोता यक्षदिति मैत्रावरुणो होत्रे प्रेष्यति, अथ कस्मादहोतृभ्यः सद्भ्यो होत्राशंसिभ्यो होता यक्षद्धोता यक्षदिति प्रेष्यतीति ? वाग् वै होता वाक् सर्वं ऋत्विजः । वाग् यक्षद् वाग् यक्षदिति । अथो सर्वे वा एते सप्त होतारः, अपि वा ऋचाभ्युदितम्—सप्त होतार ऋतुथा यजन्ति[6] इति । अथ य उपरिष्टाद् द्वादशर्चं-जामितायै[7] । ते वै द्वादश भवन्ति । द्वादश वै मासाः संवत्सरः । संवत्सरः

१. ऋ० १।६१।१६।। २. ऋ० १।६१।१८।।

३. तु०—ऐ० ब्रा० ३।८; ७।३३।।

४. गा० सं० (ऐ० ब्रा० २।२९) । 'समतिस्तियो दुःस्वमं' 'समतिष्ठिपाहुः स्वमं' इति कोशेषु पाठौ । 'समतिष्ठिपोविदुःखमं' 'समतिष्ठिपो दुःखरूप' इति पुणे-कोशयोः पाठौ ।

५. तु०—ऐ० ब्रा० २।२९ ।। कौषी० ब्रा० १३।६।।

६. तु०—मां० सं० २३।५८ । 'ऋतुथा' इति पदमत्र सन्धिरधम्, 'ऋतशः' इति मा० सं० दर्शनात् ।

७. भ्रष्टोऽत्र पाठः ! तथैव कौषी० ब्रा० (१३।९) पाठोऽपि भ्रष्टः । 'द्वादश··· मासाः' इति पाठो रा० संस्करणे मुद्रणदोषकृतविपर्यासः पङ्क्तित्रयं व्यवधाय विन्यस्तः ।

प्रजापतिः । प्रजापतिर्यज्ञः । स यो ऽत्र भक्षयेद्, यस्तं तत्र ब्रूयात्—अशान्तो भक्षो ऽनानुवषट्कृत आत्मानमन्तरगाद्, न जीविष्यतीति, तथा ह स्यात् । यो वै भक्षयेत्, प्राणो भक्षः, प्राण आत्मानमन्तरगादिति, तथैव भवति । लिम्पेदिवैवावजिघ्रेदत्र[1] च[2] द्विदेवत्येषु चेति । तदु तत्र शासनं वेदयन्ते । अथ यदमू व्यभिचरतो नान्योन्यमनुप्रपद्येते अध्वर्यू, तस्मादृतुऋ तु नानुप्रपद्यते ॥८॥[3]

प्रजापतिर्वै यत् प्रजा असृजत, ता वै तान्ता असृजत । ता हिंकारेणै-वाभ्यजिघ्रत् । ताः प्रजा अश्वमारंस्तद्वध्यते[4] वा एतद् यज्ञो यद्धवींषि पच्यन्ते, यत् सोमः सूयते, यत् पशुरालभ्यते । हिंकारेण वा एतत् प्रजा-पतिर्हतमभिजिघ्रति[5] यज्ञस्याहततायै यज्ञस्याप्त्यै यज्ञस्य वीर्यवत्ताया[6] इति । तस्मादु हिंक्रियते । तस्मादु य[7] एव पिता पुत्राणां सूर्क्षति, स श्रेष्ठो भवति । प्रजापतिर्हि तमभिजिघ्रति । यच्छकुनिराण्डमध्यास्ते, यद् न सूयते, तद्धि सापि हिंकृणोति । अथो खल्वाहुः—महर्षिर्वा एतद् यज्ञ-स्याग्रे गेयमपश्यत् । तदेतद् यज्ञस्याग्रे गेयं यद्धिकारः । तं देवाश्च ऋषय-श्चाब्रुवन्—वसिष्ठो ऽयमस्तु, यो नो यज्ञस्याग्रे गेयमद्रागिति । तदेतद् यज्ञस्याग्रे गेयं यद्धिकारः । ततो वै स देवानां श्रेष्ठो ऽभवत् । येन वै श्रेष्ठस्तेन वसिष्ठः । तस्माद् यस्मिन् वासिष्ठो ब्राह्मणः स्यात्, तं दक्षिणाया नान्तरीयात् । तथा हास्य प्रीतो हिंकारो भवति । अथ देवाश्च ह वा ऋषयश्च यदृक्सामे अपश्यन्, ते ह स्मैते अपश्यन् । ते यत्रैते अपश्यन्, तत एवैनं सर्वं दोहमदुहन् । ते वा एते दुग्धे यातयामे ये ऋक्सामे । ते हिंका-

---

१. गा० सं० । 'लिम्पेदितेवावजि०' '—घ्रेत्तत्र' '—घ्रेतत्र' इति कोशेषु पाठाः ।
२. „ „ । 'तद्' इति कोशेषु पाठः ।
३. तु०—कौषी० ब्रा० १३।९ ॥ ऐ० ब्रा० ६।१४ ॥ ४. भ्रष्टः पाठः !
५. गा० सं० । '—हितमभि०' इति कोशेषु पाठः । 'अभ्यजिघ्रत्' इति पाठोऽत्र साधीयान् स्यादिति गास्त्रः !
६. गा० सं० ।—वत्तया' इति कोशेषु पाठः ।
७. संदिहानोऽत्र गास्त्रो 'यम्' इति पाठं कल्पयति ।

रेणैवाप्यायेते । हिंकारेण वा ऋक्सामे आपीने यजमानाय दोहं दुहाते । तस्मादु हिंकृत्याध्वर्यवः सोममभिषुण्वन्ति । हिंकृत्योद्गातारः साम्ना स्तुवन्ति । हिंकृत्योक्थश[1] ऋचार्त्विज्यं कुर्वन्ति । हिंकृत्याथर्वाणो ब्रह्मत्वं कुर्वन्ति । तस्मादु हिंक्रियते । प्रजापतिर्हि तमभिजिघ्रति । अथो खल्वाहुः—एको वै प्रजापतेर्व्रतं बिभर्ति गौरेव । तदुभये पशव उपजीवन्ति ये च ग्राम्या ये चारण्या इति ॥९॥[2]

देवविशः कल्पयितव्या इत्याहुः । छन्दश्छन्दसि प्रतिष्ठाप्यमिति । शंसावोमित्याह्वयते प्रातःसवने त्र्यक्षरेण । शंसावो दैवेत्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण[3] । तदष्टाक्षरं संपद्यते । अष्टाक्षरा वै गायत्री । गायत्रीमेवैतत् पुरस्तात् प्रातःसवने ऽचीक्लृपताम् । उक्थं वाचीत्याह शस्त्वा चतुरक्षरम् । ओमुक्थशा इत्यध्वर्युः प्रतिगृणाति चतुरक्षरम् । तदष्टाक्षरं संपद्यते । अष्टाक्षरा वै गायत्री । गायत्रीमेवैतदुभयतः प्रातःसवने ऽचीक्लृपताम् । अध्वर्यो शंसावोमित्याह्वयते माध्यंदिने षडक्षरेण । शंसावो दैवेत्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण[3] । तदेकादशाक्षरं संपद्यते । एकादशाक्षरा वै त्रिष्टुप् । त्रिष्टुभमेवैतत् पुरस्ताद् माध्यंदिने ऽचीक्लृपताम् । उक्थं वाचीन्द्रायेत्याह शस्त्वा षडक्षरम् । ओमुक्थशा यजेत्यध्वर्युः प्रतिगृणाति पञ्चाक्षरम् । तदेकादशाक्षरं संपद्यते । एकादशाक्षरा वै त्रिष्टुप् । त्रिष्टुभमेवैतदुभयतो माध्यंदिने ऽचीक्लृपताम् । अध्वर्यो शंशंसावोमित्याह्वयते तृतीयसवने सप्ताक्षरेण । शंसावो दैवेत्यध्वर्युः प्रतिगृणाति पञ्चाक्षरम् । तद् द्वादशाक्षरं संपद्यते । द्वादशाक्षरा वै जगती । जगतीमेवैतत् पुरस्तात् तृतीयसवने ऽचीक्लृपताम् । उक्थं वाचीन्द्राय देवेभ्य इत्याह शस्त्वा नवाक्षरम् । ओमुक्थशा[4] इत्यध्वर्युः प्रतिगृणाति

---

१. गा० सं० । '—शस' इति कोशेषु पाठः ।

२. तु०—तै० सं० ६।४।११।३—४॥

३. गा० सं० । '—क्षरं' इति कोशेषु पाठः ।

४. 'ओमुक्थशा' इत्यस्य स्थानेऽत्र 'उक्थशा' इति पाठो युक्तः स्यात्, कौषी० ब्रा० (१४।३) अपि तथैव श्रूयते ।

त्र्यक्षरम्। तद् द्वादशाक्षरं संपद्यते। द्वादशाक्षरा वै जगती। जगती-मेवैतदुभयतस्तृतीयसवने ऽचोक्लृपतामिति। एतद् वै तच्छन्दश्छन्दसि प्रतिष्ठापयति। कल्पयत्येव क्षेवविशो य एवं वेद। तदप्येषाभ्यनूक्ता— यद् गायत्रे अधि गायत्रमाहितम्[1] इति ॥१०॥[2]

अथैतद् नाना छन्दांस्यन्तरेण गर्ता इव। अथैते स्थविष्ठे बलिष्ठे नान्तरे[3] देवते[4]। ताभ्यां प्रतिपद्यते। तद् गर्तस्कन्द रोहस्य रूपं स्वर्ग्यम्[5]। तदनवानं[6] संक्रामेत्। अमृतं वै प्रणवः। अमृतेनैव तद् मृत्युं तरति। तद् यथा मत्येन[7] वा वंशेन वा गर्तं संक्रामेद्, एवं तत् प्रणवेनोपसंतनोति। ब्रह्म ह वै प्रणवः। ब्रह्मणैवास्मै तद् ब्रह्मोपसंतनोति। शुद्धः प्रणवः स्यात् प्रजाकामानां, मकरान्तः प्रतिष्ठाकामानां, मकारान्तः प्रणवः स्यादिति हैक आहुः। शुद्ध इति त्वेव स्थितः। मीमांसितः प्रणवः। अथात इह शुद्ध इह पूर्ण इति। शुद्धः प्रणवः स्याच्छस्त्रानुवचनयोर्मध्य इति ह स्माह कौषीतकिः। तथा संहितं भवति। मकारान्तो ऽवसानार्थे। प्रतिष्ठा वा अवसानम्, प्रतिष्ठित्या एव। अथोभयोः कामयोराप्त्यै। एतौ वै छन्दःप्रवाहाववरं छन्दः परं छन्दो ऽतिप्रवहतः। तस्यायुर्न हिनस्ति। छन्दसां छन्दो ऽतिप्रोढं स्यात्। यत्रैव[8] यं द्विष्यात्, तं मनसा प्रैव विध्येत्। छन्दसां कृन्तत्रे[9] द्रवति वा[10] सं[10] वा शीर्यत

१. अथर्व० ( पै० सं० ) १६।३८।१॥ अथर्व० ( शौ० सं० ) ६।१०।१॥ ऋ० १।१६४।२३॥

२. तु०—कौषी० ब्रा० १४।३॥ ऐ० ब्रा० ३।१२॥

३. 'अनात्तें' इति कौषी० ब्रा० पाठः।

४. गा० सं०। 'णवते' इति कोशेषु पाठः।

५. गा० सं०। स्वयं' इति कोशेषु पाठः। 'स्वर्गं' इति पुणे-कोशयोः पाठः।

६. गा० सं०। 'तदनुवानं' इति कोशेषु पाठः।

७. गा० सं०। 'मन्त्रेण' इति कोशेषु पाठः।

८. पुणे कोश रा० पाठः। 'तत्रैव' इति गा० पाठः।

९. गा० सं०। 'कृन्दत्रे' इति कोशेषु पाठः।

१०. गा० सं०। 'वाचं' इति कोशेषु पाठः।

इति । त्रिः प्रथमां त्रिरुत्तमामन्वाह । यज्ञस्यैव तद् बर्हिसौ[1] नह्यति, स्थेम्ने बलायाविस्रंसाय । यद्यपि छन्दः प्रातःसवने युज्येतार्धर्चशः एव तस्य शंस्यं गायत्र्या रूपेण । अथो प्रातःसवनरूपेणेति । न त्रिष्टुब्जगत्यावेतस्मिन् स्थाने ऽर्धर्चशस्ये यत्किंचिच्छन्दः प्रातःसवने युज्येतां पच्छ एवैनयोः शस्यमिति सा स्थितिः ॥११॥[2]

अथात एकाहस्य प्रातःसवनम् । प्रजापतिं ह वै यज्ञं तन्वानं बहिष्पवमान एव मृत्युर्मृत्युपाशेन प्रत्युपाक्रामत । स आग्नेय्या गायत्र्याज्यं प्रत्यपद्यत । मृत्युर्वाव तं पश्यन् प्रजापतिं पर्यक्रामत् । तं सामाज्येष्ठसीदत्[3] । स वायव्यां प्रउगं प्रत्यपद्यत । मृत्युर्वाव तं पश्यन् प्रजापतिं पर्यक्रामत् । तं माध्यंदिने पवमाने ऽसीदत् । स ऐन्द्र्या त्रिष्टुभा मरुत्वतीयं प्रत्यपद्यत । मृत्युर्वाव तं पश्यन् प्रजापतिं पर्यक्रामत् । स तेनैव द्रविणे पूर्वो निष्केवल्यस्य स्तोत्रियमासीदत् । तमस्तृणोत् । तस्मादु य एव पूर्वमासीदति, स तत् स्तृणुते विद्वान् । मृत्युरनवकाशमपाद्रवदशंसदितरो निष्केवल्यम् । तस्मादेकमेवोक्थं होता मरुत्वतीयेन प्रतिपद्यते निष्केवल्यमेव । अत्र हि प्रजापतिं मृत्युर्व्यजहात् ॥१२॥[4]

मित्रावरुणावब्रवीत्—युवं न इमं यज्ञस्याङ्गमनुसमाहरतं मैत्रावरुणीयाम् । तथेत्यब्रूताम् । तौ सयुजौ सबलौ भूत्वा प्रासहा मृत्युमत्यैताम् । तौ ह्यस्यैतद् यज्ञस्याङ्गमनुसमाहरतां मैत्रावरुणीयाम् । तस्माद् मैत्रावरुणः प्रातःसवने मैत्रावरुणानि शंसति । तौ ह्यस्यैतद् यज्ञस्याङ्गमनुसमाहरताम् । यद् वेव मैत्रावरुणानि शंसति—प्रति वां सूर उदिते विधेम नमोभिर्मित्रावरुणोत हव्यैः[5] । उत वामुषसो बुधि साकं सूर्यस्य

१. अयं पाठो भ्रष्टः प्रतीयते (तु०—'बर्सौ' ऐ० ब्रा० १।१३) ।

२. तु०—कौषी० ब्रा० ११।४,५।।

३. सन्दिग्धः पाठः ! 'सामाज्येष्वसीदत्' इति पाठोऽत्र गास्ट्रेण कल्प्यते ।

४. तु०—ऐ० ब्रा० ३।१४।।

५. ऋ० ७।६३।५।।

रश्मिभिः[1] इत्यृचाभ्यनूक्तम्। आ नो मित्रावरुणा[2] नो गन्तं रिशादसा[3] इति मैत्रावरुणस्य स्तोत्रियानुरूपौ। प्र वो मित्राय गायत[4] इत्युक्थमुखम्। प्र मित्रयोर्वरुणयोः[5] इति पर्यासः। आ यातं मित्रावरुणा[6] इति यजति। एते एव तद् देवते यथाभागं प्रीणाति। वषट्कृत्यानुवषट्करोति। प्रत्येवाभिमृशन्ते। नाप्याययन्ति। न ह्यनाराशंसाः सीदन्ति ॥१३॥

इन्द्रमब्रवीत्—त्वं न इमं यज्ञस्याङ्गमनुसमाहर[7] ब्राह्मणाच्छंसीयाम्। केन सहेति ? सूर्येणेति। तथेत्यब्रूताम्। तौ सयुजौ सबलौ भूत्वा प्रासहा मृत्युमत्यैताम्। तौ ह्यस्यैतद यज्ञस्याङ्गमनुसमाहरतां ब्राह्मणाच्छंसीयाम्। तस्माद् ब्राह्मणाच्छंसी प्रातःसवन ऐन्द्राणि सूर्यन्यङ्गानि शंसति। तौ ह्यस्यैतद् यज्ञस्याङ्गमनुसमाहरताम्। यद् वेवैन्द्राणि सूर्यन्यङ्गानि शंसति—इन्द्र पिब प्रतिकामं सुतस्य प्रातःसावस्तव हि पूर्वपीतिः[8] इत्यृचाभ्यनूक्तम्। आ याहि सुषुमा हि ते[9], आ नो याहि सुतावतः[10] इति ब्राह्मणाच्छंसिन स्तोत्रियानुरूपौ। अयमु त्वा विचर्षणे[11] इत्युक्थमुखम्। उद् घेदभिश्रुतामघम्[12] इति पर्यासः। इन्द्र क्रतुविदम्[13] इति यजति। एते एव तद् देवते यथाभागं प्रीणाति। वषट्कृत्यानुवषट्करोति। प्रत्येवाभिमृशन्ते। नाप्याययन्ति। न ह्यनाराशंसाः सीदन्ति ॥१४॥

---

१. ऋ० १।१३७।२।।
२. ऋ० ३।६२।१६।।
३. अनुपलब्धमूलम्।
४. ऋ० ५।६८।१।।
५. ऋ० ७।६६।१।।
६. ऋ० ७।६६।१९।।
७. गा० सं०। 'अनुसमाहरन्' इति कोशेषु पाठः।
८. ऋ० १०।११२।१।।
९. अथर्व० (शौ० सं०) २०।३।१।। ऋ० ८।१७।१।।
१०. अथर्व० (शौ० सं०) २०।४।१।। ऋ० ८।१७।४।।
११. अथर्व० (शौ० सं०) २०।५।१।। ऋ० ८।१७।७।।
१२. अथर्व० (शौ० सं०) २०।७।१।। ऋ० ८।९३।१।।
१३. अथर्व० (शौ० सं०) २०।९।२।। ऋ० ३।४०।२।

इन्द्राग्नी अब्रवीत्—युवं न इमं यज्ञस्याङ्गमनुसमाहरतम्[१] अच्छावाकीयाम् । तथेत्यब्रूताम् । तौ सयुजौ सबलौ भूत्वा प्रासहा मृत्युमत्यैताम् । तौ ह्यस्यैतद् यज्ञस्याङ्गमनुसमाहरताम्[२] अच्छावाकीयाम् । तस्मादच्छावाकः प्रातःसवन ऐन्द्राग्नानि शंसति । तौ ह्यस्यैतद् यज्ञस्याङ्गमनुसमाहरताम् । यद् वेवैन्द्राग्नानि शंसति—

प्रातर्यावभिरागतं देवेभिर्जेन्यावसू ।
इन्द्राग्नी सोमपीतये ॥[३]

इत्यृचाभ्यनूक्तम् । इन्द्राग्नी आगतम्,[४] तोशा वृत्रहणा हुवे[५] इत्यच्छावाकस्य स्तोत्रियानुरूपौ । इन्द्राग्नी अपसस्परि[६] इत्युक्थमुखम् । इहेन्द्राग्नी उपह्वये[७] इति पर्यासः । इन्द्राग्नी आगतम्[४] इति यजति । एते एव तद् देवते यथाभागं प्रीणाति । वषट्कृत्यानुवषट्करोति । प्रत्येवाभिमृशन्ते । नाप्याययन्ति । न ह्यनाराशंसाः सीदन्ति ॥१५॥

अथ शंसावोमिति स्तोत्रियायानुरूपायोक्थमुखाय परिधानीयाया इति चतुश्चतुराह्वयन्ते । चतस्रो वै दिशः । दिक्षु तत् प्रतितिष्ठन्ति । अथो चतुष्पादः पशवः । पशूनामाप्त्यै । अथो चतुष्पर्वाणो हि प्रातःसवने होत्रकाः । तस्माच्चतुः सर्वे गायत्राणि शंसन्ति । गायत्रं हि प्रातःसवनम् । सर्वे समवतीभिः परिदधति । तद् यत् समवतीभिः परिदधति, अन्तो वै पर्यासः, अन्त उदर्कः, अन्तेनैवान्तं परिदधति । सर्वे मद्वतीभिर्यजन्ति । तद् यद् मद्वतीभिर्यजन्ति, सर्वे सुतवतीभिः पीतवतीभिरभिरूपाभिर्यजन्ति । यद् यज्ञेऽभिरूपं तत् समृद्धम् । सर्वे ऽनुवषट्कुर्वन्ति । स्विष्टकृत्वानु-

१. गा० सं । 'अनुसमाहरताम्' इति कोशेषु पाठः ।
२. गा० सं० । 'अनुसमहारताम्' इति कोशेषु पाठः ।
३. ऋ० ८।३८।७ (गो० ब्रा० २।२।२०) ।
४. ऋ० ३।१२.१।।
५. ऋ० ३।१२।४।।
६. ऋ० ३।१२।७।।
७. ऋ० १।२१।१।।

वषट्कारः, नेत् स्विष्टकृतमन्तरयामेति। अयं वै लोकः प्रातःसवनम्। तस्य पञ्च दिशः, पञ्चोक्थानि प्रातःसवनस्य। स एतैः पञ्चभिरुक्थैरेताः पञ्च दिश आप्नोति, एताः पञ्च दिश आप्नोति ॥१६॥[1]

घ्नन्ति वा एतत् सोमं यदभिषुण्वन्ति। यज्ञं वा एतद् घ्नन्ति यद् दक्षिणा नीयन्ते। यज्ञं वा एतद् दक्षयन्ति[2]। तद् दक्षिणानां दक्षिणात्वम्। स्वर्गो वै लोको माध्यंदिनं सवनम्। यद् माध्यंदिने सवने दक्षिणा नीयन्ते, स्वर्गस्य लोकस्य समष्टचै। बहु देयम्। सेतुं वा एतद् यजमानः संस्कुरुते। स्वर्गस्य लोकस्याक्रान्त्यै प्रजाक्रान्त्यै[3]। द्वाभ्यां गार्हपत्ये जुहोति। अध्वर्युरस्याक्रान्तेनाक्रामयति। आग्नेय्याग्नीध्रीये। अन्तरिक्षं तेन। यद् माध्यंदिने सवने दक्षिणा नीयन्ते, स्वर्गं एतेन लोके। हिरण्यं हस्ते भवति। अथ नयति। सत्यं वै हिरण्यम्। सत्येनैवैनं तद् नयति। अग्रेण गार्हपत्यं जघनेन सदो ऽन्तराग्नीध्रीयं च सदश्च। ता उदीचीरन्तराग्नीध्रीयं च सदश्च चात्वालं चोत्सृजन्ति। एतेन ह स्म वा अङ्गिरसः स्वर्गं लोकमायन्। ता वा एताः पन्थानमभिवहन्ति ॥१७॥[4]

अग्नीधे[5] ऽग्रे ददाति। यज्ञमुखं वा अग्नीत्। यज्ञमुखेनैव तद् यज्ञमुखं समर्धयति। ब्रह्मणे ददाति। प्राजापत्यो वै ब्रह्मा। प्रजापतिमेव तया[6] प्रीणाति। ऋत्विग्भ्यो ददाति। होत्रा एव तया प्रीणाति। सदस्येभ्यो ददाति। सोमपीथं[7] तया निष्क्रीणीते। न हि तस्मा अर्हति,सोमपीथं तया निष्क्रीणीयात्। यां शुश्रुवुष[8] आर्षेयाय ददाति, देवलोके तया-

१. तु०—गो० ब्रा० २।४।४,१८।।
२. गा० सं०। 'ऐताः सन्न क्षियन्ति' इति कोशेषु पाठः।
३. सन्दिग्धम्! 'प्रत्याक्रान्त्यै' इति पाठमत्र कल्पयति गास्ट्रः।
४. तु०—मै० सं० ४।८।३।।
५. गा० सं० 'आग्नध्रे' इति कोशेषु पाठः। पुणे-क-कोशे 'अग्नीधे' इत्येव पाठः।
६. ,, ,, (मै० सं० ४।८।३)। 'तेन' इति कोशेषु पाठः।
७. ,, ,,। 'सोमपीथस्' इति कोशेषु पाठः।
८. ,, ,,। 'शुश्रूषव' ,, ,, ,,।

ध्नोति । यामशुश्रूवुषे[1] ऽनार्षेयाय ददाति, मनुष्यलोके तयार्ध्नोति । यामप्रसृप्ताय ददाति, वनस्पतयस्तया प्रथन्ते । यां याचमानाय ददाति, भ्रातृव्यं तया जिन्वीते[2] । यां भीषा क्षत्रं, तया ब्रह्मातीयात् । यां प्रतिनुदन्ते, सा व्याघ्री दक्षिणा । यस्तां पुनः प्रतिगृह्णीयाद्, व्याघ्रयेनं[3] भूत्वा प्रव्लीनीयात् । अन्यया सह प्रतिगृह्णीयात् । अथ हैनं न प्रव्लीनाति ॥१८॥[4]

यद् गां ददाति, वैश्वदेवी वै गौः, विश्वेषामेव तद् देवानां तेन प्रियं धामोपैति । यदजं ददाति, आग्नेयो वा अजः, अग्नेरेव तेन प्रियं धामोपैति । यदविं ददाति, आव्यं तेनावजयति । यत् कृतान्नं ददाति, मांसं तेन निष्क्रीणीते । यदनो वा रथो वा ददाति, शरीरं तेन । यद् वासो ददाति, बृहस्पतिं तेन । यद्धिरण्यं ददाति, आयुस्तेन वर्षीयः कुरुते । यदश्वं ददाति, सौर्यो वा अश्वः, सूर्यस्यैव तेन प्रियं धामोपैति । अन्ततः प्रतिहर्त्रे देयम्, रौद्रो वै प्रतिहर्ता, रुद्रमेव तद् निरवजयति । यद् मध्यतः प्रतिहर्त्रे दद्याद्, मध्यतो रुद्रमन्ववयजेत् । स्वर्भानुर्वा आसुरः[5] सूर्यं तमसाविध्यत् । तदत्रिरपनुनोद । तदत्रिरन्वपश्यत् । यदात्रेयाय हिरण्यं ददाति, तम एव तेनापहते । अथो ज्योतिरुपरिष्टाद्धारयति, स्वर्गस्य लोकस्य समष्टयै ॥१९॥[6]

अथात एकाहस्यैव माध्यंदिनम् । ऋक् च वा इदमग्रे साम चास्ताम् । सैव नामर्गासीद्, अमो नाम साम । सा वा ऋक् सामोपावदत्— मिथुनं संभवाव प्रजात्या इति । नेत्यब्रवीत् साम । ज्यायान् वा अतो मम महिमेति । ते द्वे भूत्वोपावदताम् । ते न प्रति[7] चन[7] समवदत ।

१. गा० सं० । 'अशुश्रूषवे' इति कोशेषु पाठः ।
२. सन्दिग्धमेतद् रूपम् । मै० सं० (४।८।३) 'जिन्वति' इति रूपं श्रूयते ।
३. गा० सं० । 'व्याघ्री ह्येनं' इति कोशेषु पाठः ।
४. तु०—मै० सं० ४।८।३॥
५. गा० सं० । 'आसुरिः' इति कोशेषु पाठः ।
६. तु०—मै० सं० ४।८।३॥
७. गा० सं० । 'प्रतिवचनं' इति कोशेषु पाठः ।

तास्तिस्रो भूत्वोपावदन् । यत् तिस्रो भूत्वोपावदन्, तत् तिसृभिः समभवत् । यत् तिसृभिः समभवत्, तस्मात् तिसृभिः स्तुवन्ति । तिसृभिरुद्गायन्ति । तिसृभिर्हि साम संमितं भवति । तस्मादेकस्य बह्व्यो जाया भवन्ति, न हैकस्या बहवः सह पतयः । यद् वै तत् सा चामश्च समवदतां, तत् सामाभवत् । तत् साम्नः सामत्वम् । सामन् भवति । श्रेष्ठतां गच्छति । यो वै भवति स सामन् भवति । असामन्य इति ह निन्दन्ते । ते वै पञ्चान्यद् भूत्वा पञ्चान्यद् भूत्वाकल्पेताम्—आहावश्च हिंकारश्च प्रस्तावश्च प्रथमा चर्गुद्गीथश्च[1] मध्यमा च प्रतीहारश्चोत्तमा च निधनं च वषट्कारश्च । ते यत् पञ्चान्यद् भूत्वा पञ्चान्यद् भूत्वाकल्पेतां, तस्मादाहुः—पाङ्क्तो यज्ञः,पाङ्क्ताः पशवः इति । यदु विराजं दशिनीमभिसंपद्येतां, तस्मादाहुः–विराजि[2] यज्ञो दशिन्यां प्रतिष्ठित इति । यदु बृहत्या प्रतिपद्यते, बार्हतो वा एष य एष तपति । तदेनं स्वेन रूपेण समर्धयति । द्वे तिस्रः करोति पुनरादाय । प्रजात्यै रूपम् । द्वाविवाग्रे भवतः । तत उपप्रजायेते ॥२०॥[3]

आत्मा वै स्तोत्रियः । प्रजा अनुरूपः । पत्नी धाय्या । पशवः प्रगाथः । गृहाः सूक्तम् । यदन्तरात्मंस्तद् निवित् । प्रतिष्ठा परिधानीयान्नं याज्या । सो ऽस्मिंश्च लोके भवत्यमुष्मिंश्च,[4] प्रजया च पशुभिश्च गृहेषु भवति य एवं वेद ॥२१॥[3]

स्तोत्रियं शंसति । आत्मा वै स्तोत्रियः । स मध्यमया वाचा शंस्तव्यः । आत्मानमेवास्य तत् कल्पयति । अनुरूपं शंसति । प्रजा वा अनुरूपः । तस्मात् प्रतिरूपमनुरूपं कुर्वन्ति । प्रतिरूपो हैवास्य प्रजायामाजायते नाप्रतिरूपः । तस्मात् प्रतिरूपमनुरूपं कुर्वन्ति । स उच्चैस्तरामिव शंस्तव्यः । प्रजामेवास्य तच्छ्रेयसीं करोति । धाय्यां शंसति । पत्नी वै

१. गा० सं० । 'चोद्गीथश्च' ; इति कोशेषु पाठः ।
२. गा० सं० । 'विराजो' इति कोशेषु पाठः ।
३. तु०—ऐ० ब्रा० ३।२३॥ कौषी० ब्रा० १५।४॥
४. 'भवति' पदमत्र नापेक्ष्यते !

धाय्या । सा नीचैस्तरामिव शंस्तव्या । अप्रतिवादिनी हैवास्य गृहेषु पत्नी भवति, यत्रैवं विद्वान् नीचैस्तरां धाय्यां शंसति । प्रगाथं शंसति । पशवो वै प्रगाथः । स स्वरवत्या वाचा शंस्तव्यः । पशवो वै प्रगाथः । पशवः स्वरः । पशूनामाप्त्यै । सूक्तं शंसति । गृहा वै सूक्तम् । प्रतिवीतम् । तत् प्रतिवीततमया वाचा शंस्तव्यम् । स यद्यपि ह दूरात् पशूँल्लभते, गृहानेवैनानाजिगमिषति । गृहा हि पशूनां प्रतिष्ठा । निविदं शंसति । यदन्तरात्मंस्तद् निवित् । तदेवास्य तत् कल्पयति । परिधानीयां शंसति । प्रतिष्ठा वै परिधानीया । प्रतिष्ठायामेवैनं[1] ततः प्रतिष्ठापयति । याज्यया यजति । अन्नं वै याज्या । अन्नाद्यमेवास्य तत् कल्पयति । मूलं वा एतद् यज्ञस्य यद् धाय्याश्च याज्याश्च । तद् यदन्या अन्या धाय्याश्च याज्याश्च कुर्युः, उन्मूलमेव तद् यज्ञं कुर्युः । तस्मात् ताः समान्य एव स्युः ॥२२॥[2]

तदाहुः—किंदेवत्यो यज्ञ इति ? ऐन्द्र इति ब्रूयात् । ऐन्द्रे वाव यज्ञे सति यथाभागमन्या देवता अन्वायंस्ताः[3] प्रातःसवने मरुत्वतीये तृतीयसवने च । अथ हैतत् केवलमेवेन्द्रस्य यदूर्ध्वं मरुत्वतीयात् । तस्मात् सर्वे निष्केवल्यानि शंसन्ति । यदेव निष्केवल्यानि तत् स्वर्गस्य लोकस्य रूपम् । यद् वेव निष्केवल्यान्येकं ह वा अग्रे सवनमासीत् प्रातःसवनमेव । अथ हैतं[4] प्रजापतिरिन्द्राय ज्येष्ठाय पुत्रायैतत् सवनं निरमिमीत[5] यद् माध्यंदिनं सवनम् । तस्माद् माध्यंदिने सवने सर्वे निष्केवल्यानि शंसन्ति । यदेव निष्केवल्यानि, तत् स्वर्गस्य लोकस्य रूपम् । यद् वेव निष्केवल्यानि, या ह वै देवताः प्रातःसवने होता शंसति, ताः शस्त्वा होत्राशंसिनो ऽनुशंसन्ति । मैत्रावरुणं तृचं प्रउगे होता शंसति । तदु-

१. गा० सं० । 'प्रतिष्ठाया एवैनं' इति कोशेषु पाठः ।
२. तु०—ऐ० ब्रा ३।२४॥ कौषी० ब्रा० १५।४॥
३. सन्दिग्धोऽयं पाठः ! 'अन्वायत्ताः' इति पाठोऽत्र स्यादिति गास्ट्रः प्रतीति ।
४. नायं पाठोऽत्रापेक्ष्यते !
५. गा० सं० । 'निरमिमत' इति कोशेषु पाठः ।

भयं मैत्रावरुणं मैत्रावरुणो ऽनुशंसति। ऐन्द्रं तृचं प्रउगे होता शंसति। तदुभयमैन्द्रम्। ऐन्द्रं ब्राह्मणाच्छंस्यनुशंसति। ऐन्द्राग्नं तृचं प्रउगे होता शंसति। तदुभयमैन्द्राग्नम्। ऐन्द्राग्नमच्छावाको ऽनुशंसति। अथ हैतत् केवलमेवेन्द्रस्य यदूर्ध्वं मरुत्वतीयात्। तस्मात् सर्वे निष्केवल्यानि शंसन्ति। यदेव निष्केवल्यानि तत् स्वर्गस्य लोकस्य रूपम्। यद् वेव निष्केवल्यानि यदेददेवीरसहिष्ट माया अथाभवत् केवलः सोमो अस्य[1] इत्यृचाभ्यनूक्तम्। देवान् ह यज्ञं तन्वानान्[2] असुररक्षांस्यजिघांसन्। ते ऽब्रुवन् वामदेवम्—त्वं न इमं यज्ञं दक्षिणतो गोपायेति, मध्यतो वसिष्ठम्, उत्तरतो भरद्वाजम्, सर्वाननु विश्वामित्रम्। तस्माद् मैत्रावरुणो वामदेवाद् न प्रच्यवते, वसिष्ठाद् ब्राह्मणाच्छंसी, भरद्वाजादच्छावाकः, सर्वे विश्वामित्रात्। एत एवास्मै तदृषयो ऽहरहर्नमगा[3] अप्रमत्ता यज्ञं रक्षन्ति य एवं वेद, य एवं वेद ॥२३॥

॥ इत्यथर्ववेदे गोपथब्राह्मणोत्तरभागे तृतीयः प्रपाठकः ॥

१. अथर्व० (शौ०सं०) २०।८७।५ ॥ ऋ० ७।९८।५ ॥
२. गा० सं०। 'तन्वाना' इति कोशेषु पाठः।
३. अस्फुटम्!
४. तु०—कौषी० ब्रा० १।५।४॥

# चतुर्थः प्रपाठकः

ओम् । कया नश्चित्र आ भुवत्,[1] कया त्वं न ऊत्या[2] इति मैत्रावरुणस्य स्तोत्रियानुरूपौ । कस्तमिन्द्र त्वावसुम्[3] इति बार्हतः प्रगाथः । तस्योपरिष्टाद् ब्राह्मणम् । सद्यो ह जातो वृषभः कनीनः[4] इत्युक्थमुखम् । एवा त्वामिन्द्र वज्रिन्नत्र[5] इति पर्यासः । उशन्नु षु णः सुमना उपाके[6] इति यजति । एतामेव तद् देवतां यथाभागं प्रीणाति । वषट्कृत्यानुवषट्करोति । प्रत्येवाभिमृशन्ते । नाप्याययन्ति । न ह्यनाराशंमाः सीदन्ति ॥१॥[7]

तं वो दस्ममृतीषहं,[8] तत्त्वा यामि सुवीर्यम्[9] इति ब्राह्मणाच्छंसिन स्तोत्रियानुरूपौ । उद्दु त्ये मधुमत्तमा गिरः[10] इति बार्हतः प्रगाथः । पशवो वै प्रगाथः । पशवः स्वरः । पशूनामाप्त्यै । अतो[11] मध्यं वै सर्वेषां छन्दसां बृहती । मध्यं माध्यंदिनं सवनानाम् । तद् मध्येनैव मध्यं समर्धयति । इन्द्रः पूर्भिदातिरद्दासमर्कैः[12] इत्युक्थमुखम् । उदु ब्रह्माण्यैरत श्रवस्या[13]

---

१. अथर्व० (शौ० सं०) २०।१२४।१॥ ऋ० ४।३१।१॥
२. ऋ० ८।९३।१९ ॥
३. ऋ० ७।३२।१४ ॥
४. ऋ० ३।४८।१ ॥
५. ऋ० ४।१९।१ ॥
६. ऋ० ४।२०।४ ॥
७. तु०— आश्व० श्रौ० ७।४।१॥ शाङ्खा० श्रौ० ७.२२॥
८. अथर्व० (शौ० सं०) २०।९।१॥ ऋ० ८।८८।१॥
९. " " २०।९।३ । ऋ० ८।३।९॥
१०. " " २०।१०।१॥ ऋ० ८।३।१५॥
११. गास्ट्रः 'अथो' इति पाठं सम्भावयति !
१२. अथर्व० (शौ० सं०) २०।११।१॥ ऋ० ३।३४।१॥
१३. " " २०।१२।१। ऋ० ७।२३.१॥

इति पर्यासः। एवेदिन्द्रं वृषणं वज्रबाहुम्[1] इति परिदधाति। वसिष्ठासो अभ्यर्चन्त्यर्कैः[1] इति। अन्नं वा अर्कः। अन्नाद्यमेवास्मै तत् परिदधाति। स न स्तुतो वीरवद् धातु गोमद्[1] इति। प्रजां चैवास्मै तत् पशूं श्चाशास्ते। यूयं पात स्वस्तिभिः सदा नः[1] इति स्वस्तिमती रूपसमृद्धा। एतद् वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत् कर्म क्रियमाणमृग् यजुर्वाभिवदति। स्वस्ति तस्य यज्ञस्य पारमश्नुते य एवं वेद, यश्चैवंविद्वान् ब्राह्मणाच्छंस्येतया परिदधाति। ऋजीषी वज्री वृषभस्तुराषाड्[2] इति यजति। एतामेव तद् देवतां यथाभागं प्रीणाति। वषट्कृत्यानुवषट्करोति। प्रत्येवाभिमृशन्ते। नाप्याययन्ति। न ह्यनाराशंसाः सीदन्ति ॥२॥[3]

तरोभिर्वो विदद्वसुम्[4], तरणिरित् सिषासति[5] इत्यच्छावाकस्य स्तोत्रियानुरूपौ। उदिन्न्वस्य रिच्यते[6] इति बार्हतः प्रगाथः। तस्योक्तं ब्राह्मणम्। भूय इद् वावृधे वीर्याय[7] इत्युक्थमुखम्। इमामू षु प्रभृतिं सातये धाः[8] इति पर्यासः। तस्य दशमीमुद्धरति। घोरस्य वा आङ्गिरसस्यैतदार्षं नेद् यज्ञं निर्दहेच्छस्यमानम्। पिबा वर्धस्व तव घा सुतासः[9] इति यजति। एतामेव तद् देवतां यथाभागं प्रीणाति। वषट्कृत्यानुवषट्करोति। प्रत्येवाभिमृशन्ते। नाप्याययन्ति। न ह्यनाराशंसाः सीदन्ति ॥३॥[10]

अथाध्वर्यो शंसावोमिति स्तोत्रियायानुरूपाय प्रगाथायोक्थमुखाय परिधानीयाया इति पञ्चकृत्व आह्वयन्ते। पञ्चपदा पङ्क्तिः। पाङ्क्तो

---

१. अथर्व० (शौ० सं०) २०।१२।६॥ ऋ० ७।२३।६॥
२. ,, ,, २०।१२।७॥ ऋ० ५।४०।४॥
३. तु०—शाङ्खा० श्रौ० ७।२३॥ ४. ऋ० ८।६६।१॥
५. ऋ० ७।३२।२०॥
६. ऋ० ७।३२।१२॥
७. ऋ० ६।३०।१॥
८. ऋ० ३।३६।१॥
९. ऋ० ३।३६।३॥
१०. तु०—शाङ्खा० श्रौ० ७।२४॥

यज्ञः। सर्वं ऐन्द्राणि त्रैष्टुभानि शंसन्ति। ऐन्द्रं हि त्रैष्टुभं माध्यंदिनं सवनम्। सर्वे समवतीभिः परिदधति। तद् यत् समवतीभिः परिदधति, अन्तो वै पर्यासः, अन्त उदर्कः, अन्तेनैवान्तं परिदधति। सर्वे मद्वतीभिर्यजन्ति। तद् यद् मद्वतीभिर्यजन्ति, सर्वे सुतवतीभिः पीतवतीभिरभिरूपाभिर्यजन्ति; यद् यज्ञे ऽभिरूपं तत् समृद्धम्। सर्वे ऽनुवषट्कुर्वन्ति। स्विष्टकृत्वानुवषट्कारः, नेत् स्विष्टकृत अन्तरयामेति। अन्तरिक्षलोको माध्यंदिनं सवनम्। तस्य पञ्च दिशः। पञ्चोक्थानि माध्यंदिनस्य सवनस्य। स एतैः पञ्चभिरुक्थैरेताः पञ्च दिश आप्नोति, एताः पञ्च दिश आप्नोति ॥४॥[1]

अथ यदौपासनं तृतीयसवन उपास्यन्ते, पितॄनेव तेन प्रीणाति। उपांशु पात्नीवतस्याग्नीध्रो यजति। रेतो वै पात्नीवतः। उपांश्विव वै रेतः सिच्यते। तद् नानुवषट्करोति, नेद् रेतः सिक्तं संस्थापयानीति[2]। असंस्थितमिव वै रेतः सिक्तं समृद्धम्। संस्था वा एषा यदनुवषट्कारः। तस्माद् नानुवषट्करोति। नेष्टुरुपस्थे धिष्ण्यान्ते वासीनो भक्षयति। पत्नीभाजनं वै नेष्टा। अग्नीत् पत्नीषु रेतो धत्ते। रेतसः सिक्ताः प्रजाः प्रजायन्ते। प्रजानां प्रजननाय। प्रजावान् प्रजनयिष्णुर्भवति। प्रजात्यै। प्रजायते प्रजया पशुभिर्य एवं वेद ॥५॥[3]

अथ शाकलान् जुह्वति। तद् यथाहिर्जीर्णायास्त्वचो निर्मुच्येतेषीका वा मुञ्जाद्, एवं हैवैते सर्वस्मात् पाप्मनः संप्रमुच्यन्ते, ये शाकलान् जुह्वति। द्रोणकलशे धाना भवन्ति। तासां हस्तैरादधति। पशवो वै धानाः। ता आहवनीयस्य भस्मान्ते निवपन्ति। योनिर्वै पशूनामाहवनीयः। स्व एवैनांस्तद् गोष्ठे निरपक्रमे निदधति। अथ सव्यावृतो ऽप्सु सोमानाप्याययन्ति। तान् हान्तर्वेद्यां सादयन्ति। तद्धि सोमस्यायतनम्। चात्वालादपरेणाध्वर्युश्चमसानद्भिः पूरयित्वोदीचः प्रणिधाय हरितानि तृणानि

१. तु०—गो० ब्रा० २।३।१६; २।४।१८॥
२. गा० सं०। 'संस्थापयामीति' इति कोशेषु पाठः।
३. तु०—ऐ० ब्रा० ६।३॥ कौषी० ब्रा० ३०।१॥

व्यवदधाति । यदा वा आपश्चौषधयश्च संगच्छन्ते, अथ कृत्स्नः सोमः संपद्यते। ता वैष्णव्यर्चा निनयन्ति। यज्ञो वै विष्णुः। यज्ञ एवैनमन्ततः प्रतिष्ठापयति। अथ यद् भक्षः[1] प्रतिनिधिं[1] कुर्वन्ति, मानुषेणैवैनं तद् भक्षेण दैवं भक्षमन्तर्दधति ॥६॥[2]

पूतिर्वा एषो ऽमुष्मिँल्लोके ऽध्वर्युं च यजमानं चाभिवहति। तद् यदेनं दध्नानभिहुत्या ऽवभृथमुपहरेयुः, यथा कुणपं वात्येवमेवैनं तत् करोति। अथ यदेनं दध्नाभिहुत्यावभृथमुपहरन्ति[3] सर्वमेवैनं सयोनिं संतनुते, समृद्धिं संभरन्ति। अभूद् देवः सविता वन्द्यो नु नः[4] इति जुहोति। सर्वमेवैनं सपर्वाणं संभरति। तिसृभिः। त्रिवृद्धि[5] यज्ञः। द्रप्सवतीभिरभिजुहोति। सर्वमेवैनं सर्वाङ्गं संभरति। सौमीभिरभिजुहोति। सर्वमेवैनं सात्मानं[6] संभरति। पञ्चभिरभिजुहोति। पाङ्क्तो यज्ञः। यज्ञमेवावरुन्द्धे। पाङ्क्तः पुरुषः। पुरुषमेवाप्नोति। पाङ्क्ताः पशवः। पशुष्वेव प्रतितिष्ठति। प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद ॥७॥

~~अग्निर्वाव यम इयं यमी~~। कुसीदं वा एतद् यमस्य यजमान आदत्ते, यदोषधीभिर्वेदिं स्तृणाति। तां यदनुपोष्य प्रयायाद्, यातयेरन्नेनममुष्मिँल्लोके। यमे यत् कुसीदम्, अपमित्यमप्रतीत्तम्[7] इति वेदिमुपोषति[8]। इहैव सन् यमं कुसीदं निरवदायानृणो भूत्वा स्वर्गं लोकमेति। विश्वलोप विश्वदावस्य त्वासञ्जुहोमि[9] इत्याह होताद्धा[10] यजमानस्यापराभावाय। यदु

१. 'भक्षप्रतिनिधिं' इति पाठोऽत्र साधीयान् स्यात्? 'भक्षपरिधीन्' इति कौषी० ब्रा० (१८।८) पाठः।

२. तु०—कौषी० ब्रा० १८।६-८।।

३. गा० सं०। 'दध्नानभि०' इति कोशेषु पाठः।

४. ऋ० ४।५४।१।।

५. गा० सं०। 'त्रिवृद्धिः' इति कोशेषु पाठः।

६. ,, ,,। 'स आत्मानं' ,, ,, ,,।

७. अथर्व० (पैं० सं०) १६।४६।१०।। अथर्व० (शौ० सं०) ६।११७।१।।

८. गा० सं०। 'उपोषन्ति' इति कोशेषु पाठः।

९. तै० सं ३।३।८।१।।     १०. भ्रष्टः पाठः!

भिश्रमिव चरन्त्यञ्जलिना सक्तून् प्रदाव्ये जुहुयात् । एष ह वा अग्नि-वैंश्वानरो यत् प्रदाव्यः । स्वस्यामेवैनं तद्. योन्यां सादयति ॥८॥[1]

अह्लां विधान्यामेकाष्टकायामपूपं चतुःशरावं पक्त्वा प्रातरेतेन कक्षमुपोषेत् । यदि दहति पुण्यसमं भवति । यदि न दहति पापसमं भवति । एतेन ह स्म वा अङ्गिरसः पुरा विज्ञानेन दीर्घसत्रमुपयन्ति । यो ह वा उपद्रष्टारमुपश्रोतारमनुख्यातारमेव विद्वान् यजते, सममुष्मिँल्लोक इष्टापूर्तेन गच्छते । अग्निर्वा उपद्रष्टा । वायुर्वा उपश्रोता । आदित्यो वा अनुख्याता । तान् य एवं विद्वान् यजते, सममुष्मिँल्लोक इष्टापूर्तेन गच्छते । अयं नो नभसस्पतिः[2] इत्याह । अग्निर्वै नभसस्पतिः । अग्निमेव तदाहैतं नो गोपायेति । स त्वं नो नभसस्पतिः[3] इत्याह । वायुर्वै नभ-सस्पतिः । वायुमेव तदाहैतं नो गोपायेति । देव संस्फान[4] इत्याह । आदित्यो वै देवः संस्फानः । आदित्यमेव तदाहैतं नो गोपायेति । अयं ते योनिः[5] इत्यरण्योरग्निं समारोपयेत् । तदाहुः—यदरण्योः समारूढो नश्ये-दुदस्याग्निः सीदेत् । पुनराधेयः स्यादिति । या ते अग्ने यज्ञिया तनूस्तया मे ह्यारोह तया मे ह्याविश[6] । अयं ते योनिः[7] इत्यात्मन्नग्नीन् समारोपयेत् । एष ह वा अग्नेर्योनिः । स्वस्यामेवैनं तद् योन्यां सादयति ॥९॥[1]

यो ह वा अग्निष्टोमं साह्नं वेद, अग्निष्टोमस्य साह्नस्य सायुज्यं सलोकतामश्नुते य एवं वेद । यो ह वा एष तपत्येषो ऽग्निष्टोमः, एष साह्नः । तं सहैवाह्ना संस्थापयेयुः । साह्नो वै नामैषः । तेनासंत्वरमाणा-

१. तु०—तै० सं ३ ३।८।१-४।।
२. अथर्व० (पै० सं०) १९।१६।१७।। अथर्व० (शौ० सं०) ६।७९।१ ।। तु०—तै० सं० ३।३।८।२।।
३. तु०— „ „ १९।१६।१८ ।। „ „ ६।७९।२ ।। तै० सं० ३।३।८।२।।
४. „ „ „ १९।१६।१९ ।। „ „ ६।७९।३ ।। „ „ „ „
५. „ „ „ ३।३४।१ ।। „ „ ३।२०।१ ।। ऋ० ३।२९।१०।।
६. तु०—तै० सं० ३।४।१०।४।। द्र०—वैतान० ३।१४।१४( =२४।१४)।।
७. तु०— तै सं० ३।३।८।४—६; ३।४।१०।४—५।।

श्चरेयुः । यद्ध वा इदं पूर्वयोः सवनयोरसंत्वरमाणाश्चरन्ति, तस्माद्धेदं[1] प्राच्यो ग्रामता बहुलाविष्टा । अथ यद्धेदं[2] तृतीयसवने संत्वरमाणाश्चरन्ति, तस्माद्धेदं प्रत्यञ्चि[3] दीर्घारण्यानि भवन्ति । यथैव प्रातःसवन एवं माध्यंदिने[4] सवन एवं तृतीयसवने । एवमु ह यजमानो ऽप्रमायुको भवति । तेनासंत्वरमाणाश्चरेयुः । यदा वा एष प्रातरुदेति, अथ मन्द्रतमं तपति । तस्माद् मन्द्रतमया वाचा प्रातःसवने शंसेत् । अथ यदाभ्येति, अथ बलीयस्तपति । तस्माद् बलीयस्या वाचा माध्यंदिने सवने शंसेत् । अथो यदाभितरामेति, अथ बलिष्ठतमं तपति । तस्माद् बलिष्ठतमया वाचा तृतीयसवने शंसेत् । एवं शंसेद्, यदि वाच ईशीत[5] । वाग्घि शस्त्रम् । यया तु वाचोत्तरिण्योत्तरिण्योत्सहेत,[6] समापनाय तया प्रतिपद्येत । एतत् सुशंस्ततममिव भवति । स वा एष न कदाचनास्तमयति नोदयति । तद् यदेनं पश्चादस्तमयतीति मन्यन्ते, अह्न एव तदन्तं गत्वाथात्मानं विपर्यस्यते । अहरेवाधस्तात् कृणुते रात्रीं परस्तात् । स वा एष न कदाचनास्तमयति नोदयति । तद् यदेनं पुरस्तादुदयतीति मन्यन्ते, रात्रेरेव तदन्तं गत्वाथात्मानं विपर्यस्यते । रात्रीमेवाधस्तात् कृणुते ऽहः परस्तात् । स वा एष न कदाचनास्तमयति नोदयति । न ह वै कदाचन निम्रोचति[7] । एतस्य[8] ह सायुज्यं सलोकतामश्नुते य एवं वेद ॥१०॥[9]

---

१. गा० सं० । 'तस्माद्धेदं' इति प्रायः कोशेषु पाठः ।
२. " " । 'यद्धेदं' " " " " ।
३. " " । 'प्रत्यञ्चेद्' " " " " ।
४. " " । 'माध्यंदिनं' " " " " ।
५. गा० सं० । 'ईशन्त' 'ईशत' इति कोशेषु पाठौ ।
६. गा० सं० । '—सहेदा', 'वाचोत्तरण्योत्तरण्या०' इति कोशेषु पाठौ ।
७. 'निम्रुचति' इति गा० सं० । कोशेषु (तु०—ऐतरेयपाठः) 'निम्रोचति' इत्येव, रा० पाठस्तु । 'निम्लोचति' इति ।
८. गा० सं० । 'एतत्स्य' इति कोशेषु पाठः ।
९. तु०—ऐ० ब्रा० ३।४४।

अथात एकाहस्यैव तृतीयसवनम् । देवासुरा वा एषु लोकेषु समयतन्त । ते देवा असुरानभ्यजयन् । ते जिता अहोरात्रयोः संधिं समभ्यवागुः[1] । स हेन्द्र उवाच—इमे वा असुरा अहोरात्रयोः संधिं समभ्यवागुः, कश्चाहं चेमानसुरानभ्युत्थास्यामहा इति । अहं चेत्यग्निरब्रवीद्, अहं चेति वरुणः, अहं चेति बृहस्पतिः, अहं चेति विष्णुः । तानभ्युत्थायाहोरात्रयोः संधेर्निर्जघ्नुः । यदभ्युत्थायाहोरात्रयोः संधेर्निर्जघ्नुः, तस्मादुत्थाः[2] । अभ्युत्थाय ह वै द्विषन्तं भ्रातृव्यं निर्हन्ति य एवं वेद । सोऽग्निरश्वो भूत्वा प्रथमः प्रजिगाय । यदग्निरश्वो भूत्वा प्रथमः प्रजिगाय, तस्मादाग्नेयीभिरुक्थानि प्रणयन्ति । यदग्निरश्वो भूत्वा प्रथमः प्रजिगाय, तस्मात् साकमश्वम् । यत् पञ्च देवता अभ्युत्तस्थुः, तस्मात्, पञ्च देवता उक्थे शस्यन्ते । या वाक् सो ऽग्निः । यः प्राणः स वरुणः । यद् मनः स इन्द्रः । यच्चक्षुः स बृहस्पतिः, यच्छ्रोत्रं स विष्णुः । एते ह वा एतान् पञ्चभिः प्राणैः समीर्योदस्थापयन्[3] । तस्मादु एवैताः पञ्च देवता उक्थे शस्यन्ते ॥११॥

प्रजापतिर्ह्येतेभ्यः पञ्चभ्यः प्राणेभ्यो ऽन्यान् देवान् ससृजे यदु चेदं[4] किं च पाङ्क्तम् । तत् सृष्ट्वा व्याह्वलयत्[5] । ते होचुः—देवा म्लानो ऽयं पितामयो ऽभूः,[6] पुनरिमं समीर्योत्थापयामेति । स ह सत्त्वमाख्यायाभ्युपतिष्ठते[7] । यदि ह वा अपि निर्णिक्तस्यैव कुलस्य संव्युक्षेण[8] यजते, सत्त्वं हैवाख्यायाभ्युपतिष्ठते । यो वै प्रजापतिः स यज्ञः । स एतैरेव पञ्चभिः

---

१. सन्दिग्धमेतदिति गास्ट्रः; तन्मतेनात्र 'समभ्यवेयुः' इति रूपं साधीयः स्यात् ।
२. " " " 'उक्थाः' " पदं " " ।
३. संशोधितः पाठः । 'समीयुदं०' इति गा० सं० । 'समीर्योत्था०' इति कोशेषु पाठः ।
४. पुणे कोशयोः, रा० पाठः । 'वेदं' इति कोशेषु पाठः ।
५. पुणे-कोशयोः पाठः । 'व्याज्वलयत्' इति गास्ट्रसंस्करणे पाठः ।
६. 'पिता मयोभूः' इति रा० पाठः । 'पितामहोऽभूत्' इति पाठशोधं गास्ट्रः प्रस्तौति ।
७. सन्दिग्धः पाठः । '—भ्युपातिष्ठत' इति पाठं गास्ट्रः सम्भावयति ।
८. भ्रष्टः पाठः ।

प्राणैः समीर्योत्थापितः। ये ह वा एनं पञ्चभिः प्राणैः समीर्योदस्थापयन्[१] ता उ एवैताः पञ्च देवता उक्थे शस्यन्ते ॥१२॥

तदाहुः—यद् द्वयोर्देवतयो स्तुवत इन्द्राग्न्योरिति, अथ कस्माद् भूयिष्ठा[२] देवता उक्थे शस्यन्त इति? अन्तो वा आग्निमारुतमन्तरुक्थान्यन्त[३] आश्विनम्। कनीयसीषु देवतासु स्तुवते[४] ऽन्तेष्विति[५]। अथ कस्माद् भूयिष्ठा[२] देवता उक्थे शस्यन्त इति? द्वे द्वे उक्थमुखे भवतः, तद् यद् द्वे द्वे ॥१३॥

अथ यदैन्द्रावरुणं मैत्रावरुणस्योक्थं भवति, ऐन्द्राबार्हस्पत्यं ब्राह्मणाच्छंसिन उक्थं भवति, ऐन्द्रावैष्णवमच्छावाकस्योक्थं भवति। द्वे संशस्यंस्त[६] ऐन्द्रं च वारुणं चैकमैन्द्रावारुणं भवति। द्वे संशस्यंस्त[६] ऐन्द्रं च बार्हस्पत्यं चैकमैन्द्राबार्हस्पत्यं भवति। द्वे संशस्यंस्त[६] ऐन्द्रं च वैष्णवं चैकमैन्द्रावैष्णवं भवति। द्वे द्वे उक्थमुखे भवतः, तद् यद् द्वे द्वे ॥१४॥

अथ यदैन्द्रावारुणं मैत्रावरुणस्योक्थं भवति—इन्द्रावरुणा सुतपाविमं सुतं सोमं पिबतं मद्यं धृतव्रतौ[७] इत्यृचाभ्यनूक्तम्। मद्वद्धि तृतीयसवनम्। एवू षु ब्रवाणि ते[८], आग्निरगामि भारतः[९] इति मैत्रावरुणस्य स्तोत्रियानुरूपौ। चर्षणीधृतं मघवानमुक्थ्यम्[१०] इत्युक्थमुखम्। तस्योपरिष्टाद्

---

१. संशोधितः पाठः। 'समीर्योत्थापयन्' इति सार्वत्रिकः पाठः।
२. संशोधितः पाठः। 'भूयिष्ठो' इति कोशेषु पाठः।
३. '—तमन्त उक्थान्यन्त' इति पाठोऽत्र समीचीनः स्यादिति गास्ट्रः।
४. गा० सं०। 'स्तुवन्ते' 'स्तुवन्ते' 'स्तवते' इति कोशेषु पाठाः।
५. पुणे-क-कोशे पाठः। 'तिष्ठति' इत्यन्यत्र सन्दिग्धः पाठः।
६. सन्दिग्धः पाठः। 'संशंसने' इति पाठोऽत्र साधीयान् स्यात्।
७. अथर्व० (पैं० सं०) २०।६।५॥ अथर्व० (शौ० सं०) ७।५८।१॥ ऋ० ६।६८।१०।
८. ऋ० ६।१६।१६॥
९. ऋ० ६।१६।१९॥
१०. ऋ० ३।५१।१॥

ब्राह्मणम् । अस्तभ्नाद् द्यामसुरो विश्ववेदाः[1] इति वारुणं सांशंसिकम् । अहं चेति वरुणो ऽब्रवीत् । देवतयोः संशंसायानतिशंसाय । इन्द्रावरुणा युव-मध्वराय नः[2] इति पर्यास ऐन्द्रावरुणे । ऐन्द्रावरुणमस्यैतद् नित्यमुक्थम् । तदेतत् स्वस्मिन्नायतने स्वस्यां प्रतिष्ठायां प्रतिष्ठापयति । द्वन्द्वं वा एता देवता भूत्वा व्यजयन्त, विजित्या एव । अथो द्वन्द्वस्यैव मिथुनस्य प्रजात्यै । सैकपादिनी[3] भवति । एकपादिन्या[3] होता परिदधाति । यत्र होतुर्होत्र-काणां युञ्जन्ति, तत् समृद्धम् । तद् वै खलु—आ वां राजानावध्वरे ववृत्याम्[4] इति । एवमेव केवलपर्यासं कुर्यात् केवलसूक्तम् । केवलसूक्त-मेवोत्तरयोर्भवति । इन्द्रावरुणा मधुमत्तमस्य[5] इति यजति । एते एव तद् देवते यथाभागं प्रीणाति । वषट्कृत्यानुवषट्करोति । प्रत्येवाभिमृशन्ते । नाप्याययन्ति । न ह्यनाराशंसाः सीदन्ति ॥१५॥[6]

अथ यदैन्द्राबार्हस्पत्यं ब्राह्मणाच्छंसिन उक्थं भवति—इन्द्रश्च सोमं पिबतं बृहस्पते ऽस्मिन् यज्ञे मन्दसाना वृषण्वसू[7] इत्यृचाभ्यनूक्तम् । मद्वद्धि तृतीयसवनम् । वयमु त्वामपूर्व्य,[8] यो न इदमिदं पुरा[9] इति ब्राह्मणाच्छं-सिन स्तोत्रियानुरूपौ । प्र मंहिष्ठाय बृहते बृहद्रये[10] इत्युक्थमुखम् । ऐन्द्रा-जागतम् । जागताः पशवः । पशूनामाप्त्यै । जागतमु वै तृतीयसवनम् । तृतीयसवनस्य रूपम् । उदप्रुतो न वयो रक्षमाणाः[11] इति बार्हस्पत्यं सांशं-

१. ऋ० ८।४२।१॥ २. ऋ० ७।८२।१।

३. '—तिनी' '—तिन्या' इति पाठौ यथासंख्यं कल्पयति गास्त्रः ।

४. ऋ० ७।८४।१॥

५. अथर्व० (पै० सं०) २०।६।६॥ अथर्व० (शौ० सं०) ५।५८।२॥ ऋ० ६।६८।११॥

६. तु० —आश्व० श्रौ० ६।१॥ शाङ्खा० श्रौ० ६।२॥

७. अथर्व० (शौ० सं०) २०।१३।१॥ ऋ० ४।५०।१०॥

८. " " २०।१४।१॥ " ८।२१।१॥

९. " " २०।१४।३॥ " ८।२१।६॥

१०. " " २०।१५।१॥ " १।५७।१॥

११. " " २०।१६।१॥ " १०।६८।१॥

सिकम् । अहं चेति बृहस्पतिरब्रवीत् । देवतयोः संशंसायानतिशंसाय । अच्छा म इन्द्रं मतयः स्वर्विदः[1] इति पर्यास ऐन्द्राबार्हस्पत्ये । ऐन्द्राबार्हस्पत्यमस्यैतद् नित्यमुक्थम् । तदेतत् स्वस्मिन्नायतने स्वस्यां प्रतिष्ठायां प्रतिष्ठापयति । द्वन्द्वं वा एता देवता भूत्वा व्यजयन्त, विजित्या एव । अथो द्वन्द्वस्यैव मिथुनस्य प्रजात्यै । बृहस्पतिर्नः परिपातु पश्चाद्[2] इत्यैन्द्राबार्हस्पत्या परिदधाति । इन्द्राबृहस्पत्योरेव यज्ञं प्रतिष्ठापयति । उतोत्तरस्मादधरादघायोरिन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु इति । सर्वाभ्य एव दिग्भ्य आशिषमाशास्ते नार्त्वी[3] । यं कामं कामयते, सो ऽस्मै कामः समृध्यते य एवं वेद, यश्चैवंविद्वान् ब्राह्मणाच्छंस्येतया परिदधाति । बृहस्पते युवमिन्द्रश्च वस्वः[4] इति यजति । एते एव तद् देवते यथाभागं प्रीणाति । वषट्कृत्यानुवषट्करोति । प्रत्येवाभिमृशन्ते । नाप्याययन्ति । न ह्यनाराशंसाः सीदन्ति ॥१६॥[5]

अथ यदैन्द्रावैष्णवमच्छावाकस्योक्थं[6] भवति—इन्द्राविष्णू मदपती मदानामा सोमं यातं द्रविणो दधाना[7] इत्यृचाभ्यनूक्तम् । मद्वद्धि तृतीयसवनम् । अधा हीन्द्र गिर्वणः,[8] इयं त इन्द्र गिर्वणः[9] इत्यच्छावाकस्य स्तोत्रियानुरूपौ । ऋतुर्जनित्री तस्या अपस्परि[10] इत्युक्थमुखम् । तस्योक्तं ब्राह्मणम् । नू मर्तो दयते सनिष्यन्[11] इति वैष्णवं सांशंसिकम् ।

१. अथर्व० (शौ० सं०) २०।१७।१ ॥ ऋ० १०।४३।१ ॥

२. अथर्व० (पै० सं०) १५।११।१॥ अथर्व० (शौ० सं०) ७।५१।१ ॥ ऋ० १०।४२।११ ॥

३. सन्दिग्धम् !

४. अथर्व० ( शौ० सं०) २०।१७।१२॥ ऋ० ७।९७।१०॥

५. तु०—आश्व० श्रौ० ६।१ ॥ शाङ्खा० श्रौ० ९।३ ॥

६. '—कस्योक्तं' इति गा० अपपाठः ।

७. ऋ० ६।६९।३ ॥

८. अथर्व० (शौ० सं०) २०।१००।१॥ ऋ० ८।९८।७ ॥

९. ऋ० ८।१३।४ ॥

१०. ऋ० २।१३।१॥ ११. ऋ० ७।१००।१॥

अहं चेति विष्णुरब्रवीत् । देवतयोः संशंसायानतिशंसाय । सं वां कर्मणा समिषा हिनोमि[1] इति पर्यास ऐन्द्रावैष्णवे । ऐन्द्रावैष्णवमस्यैतद्, नित्यमुक्थम्[2] । तदेतत् स्वस्मिन्नायतने स्वस्यां प्रतिष्ठायां प्रतिष्ठापयति । द्वन्द्वं वा एता देवता भूत्वा व्यजयन्त, विजित्या एव । अथो द्वन्द्वस्यैव मिथुनस्य प्रजात्यै । उभा जिग्यथुर्न पराजयेथे[3] इत्यैन्द्रावैष्णव्यर्चा परिदधाति । इन्द्राविष्णोरेव यज्ञं प्रतिष्ठापयति । इन्द्राविष्णू पिवतं मध्वो अस्य[4] इति यजति । एते एव तद् देवते यथाभागं प्रीणाति । वषट्कृत्यानुवषट्करोति । प्रत्येवाभिमृशन्ते । नाप्याययन्ति । न ह्यनाराशंसाः सीदन्ति ॥१७॥[5]

अथाध्वर्यो शंशंसावोमिति स्तोत्रियानुरूपायोक्थमुखाय परिधानीयाया इति चतुश्चतुराह्वयन्ते । चतस्रो वै दिशः । दिक्षु तत् प्रतितिष्ठन्ते । अथो चतुष्पादः पशवः । पशूनामाप्त्यै । अथो चतुष्पर्वाणो हि तृतीयसवने होत्रकाः । तस्माच्चतुः । सर्वे त्रैष्टुभं जागतानि[6] शंसन्ति । जागतं हि तृतीयसवनम् । अथ हैतत् त्रैष्टुभानि[6] । अप्रतिभूतमिव हि प्रातःसवने मरुत्वतीये तृतीयसवने च होत्रकाणां शस्त्रम् । धीतरसं वा एतत् सवनं यत् तृतीयसवनम् । अथ हैतदधीतरसं शुक्रियं छन्दो यत् त्रिष्टुबयातयाम[7] । सवनस्यैव तत् सरसतायै[8] । सर्वे समवतीभिः परिदधति । तद् यत् समवतीभिः परिदधति, अन्तो वै पर्यासोऽन्त उदर्कोऽन्तः सजाया[9] उ[9] ह[9] वा[9] अवैनाय[9] । अन्तेनैवान्तं परिदधति । सर्वे मद्वतीभिर्यजन्ति । तद्

१. ऋ० ६।६९।१ ॥

२. 'नित्यमुखं' इति गा० संस्करणेऽपपाठः ।

३. अथर्व० (पै० सं०) २०।१५।३ ॥ अथर्व० (शौ० सं०) ७।४४।१॥ ऋ० ६।६९।८ ॥ ४. ऋ० ६।६९।७ ॥

५. तु०—आश्व० श्रौ० ६।१॥ शाङ्खा० श्रौ० ९।४ ॥

६. सन्दिग्धम् !

७. गा० सं० । 'त्रिष्टुभाया०' इति कोशेषु पाठः ।

८. " " । 'सरस्वतायै' " " " । पुणे-कोशयोः 'सरसतायै' इत्येव पाठः ।

९. भ्रष्टः पाठः !

यद् मद्वतीभिर्यजन्ति, सर्वे सुतवतीभिः पीतवतीभिरभिरूपाभिर्यजन्ति। यद् यज्ञे ऽभिरूपम्, तत् समृद्धम्। सर्वे ऽनुवषट्कुर्वन्ति। स्विष्टकृत्वानुवषट्कारः, नेत् स्विष्टकृत अन्तरयामेति। असौ वै लोकस्तृतीयसवनम्। तस्य पञ्च दिशः। पञ्चोक्थानि तृतीयसवनस्य। स एतैः पञ्चभिरुक्थैरेताः पञ्च दिश आप्नोति। तद् यदेषां लोकानां रूपं या मात्रा तेन रूपेण तया मात्रयेमाँल्लोकानृध्नोति, इमाँल्लोकानृध्नोतीति ॥१८॥[1]

तदाहुः—किं षोडशिनः षोडशित्वम्? षोडश स्तोत्राणि षोडश शस्त्राणि षोडशभिरक्षरैरादत्ते। द्वे[2] वा अक्षरे अतिरिच्येते षोडशिनो ऽनुष्टुभमभिसंपन्नस्य। वाचो वा एतौ स्तनौ। सत्यानृते वाव ते। अवत्येनं[3] सत्यम्। नैनमनृतं हिनस्ति य एवं वेद, य एवं वेद ॥१९॥[4]

॥ इत्यथर्ववेदे गोपथब्राह्मणोत्तरभागे चतुर्थः प्रपाठकः ॥

---

१. तु०—ऐ० ब्रा० ३।१२।३; ६।१२।५ ॥ गो० ब्रा० २।३।१६; २।४।४ ॥

२. गा० सं० । 'ते' इति कोशेषु पाठः ।

३. „ „ । 'अवत्यैनं' „ „ „ ।

४. तु०—ऐ० ब्रा० ४।१।५—६ ॥

# पञ्चमः प्रपाठकः

ओम् । अहर्वै देवा आश्रयन्त रात्रीमसुराः । ते समावद्वीर्या एवासन्, नो व्यावर्तन्त । सो ऽब्रवीदिन्द्रः—कश्चाहं चेमानसुरान् रात्रीमन्ववैष्यामह[1] इति ? स देवेषु न प्रत्यविन्दद्, अबिभयू रात्रेस्तमसो मृत्योः । तम इव हि रात्रिः । मृत्युर्वै तमः । तस्माद्धाप्येतर्हि भूयानिव नक्तं स यावन्मात्रमिवापक्रम्य[2] बिभेति । तं वै छन्दांस्येवान्ववायन् । तद् यच्छन्दांस्येवान्ववायन्, तस्मादिन्द्रश्च[3] छन्दांसि च रात्रिं वहन्ति । न निविच् छस्यते न पुरोरुङ् न धाय्या नान्या देवता । इन्द्रश्च[3] ह्येव छन्दांसि च रात्रिं वहन्ति । तान् वै पर्यायैः पर्यायमनुदन्त । यत् पर्यायैः पर्यायमनुदन्त, तस्मात् पर्यायाः । तत् पर्यायाणां पर्यायत्वम् । तान् वै प्रथमैरेव पर्यायैः पूर्वरात्रादनुदन्त, मध्यमैर्मध्यरात्राद्, उत्तमैरपररात्रात् । अपि शर्वर्या अपिस्मसीत्यब्रुवन् । तद् यदपि शर्वर्या अपिस्मसीत्यब्रुवन्, तदपिशर्वराणामपिशर्वरत्वम् । शर्वराणि खलु ह वा अस्यैतानि छन्दांसीति ह स्माह । ऐतानि ह वा इन्द्रं रात्र्यास्तमसो मृत्योरभिपत्यावारयन् । तदपिशर्वराणामपिशर्वरत्वम् ॥१॥[4]

प्रथमेषु पर्यायेषु स्तुवते, प्रथमान्येव पदानि पुनराददते । यदेवैषां मनोरथा आसन्, तदेवैषां तेनाददते । मध्यमेषु पर्यायेषु स्तुवते, मध्यमान्येव पदानि पुनराददते । यदेवैषामश्वा गाव आसन्, तदेवैषां तेनाददत । उत्त-

---

१. गा० सं० । '—महा' इति कोशेषु पाठः ।

२. „ „ । '—प्रक्रम्य' „ „ „ ।

३. „ „ । 'इन्द्रस्य' „ „ „ ।

४. तु०—ऐ० ब्रा० ४।५ ॥

मेषु पर्यायेषु स्तुवते, उत्तमान्येव पदानि पुनराददते। यदेवैषां वासो हिरण्यं मणिरध्यात्ममासीत्, तदेवैषां तेनाददते। आ द्विषतो वसु दत्ते, निरेवैनमेभ्यः सर्वेभ्यो लोकेभ्यो नुदते य एवं वेद ॥२॥[1]

पवमानवदहरित्याहुः, न रात्रिः पवमानवती। कथमुभे पवमानवती भवतः? केन ते समावद्भाजौ भवत इति? यदेव—इन्द्राय मद्वने सुतम्[2], इदं वसो सुतमन्धः,[3] इदं ह्यन्वोजसा सुतम्[4] इति स्तुवन्ति च शंसन्ति च, तेन रात्रिः पवमानवती। तेनोभे पवमानवती भवतः। तेन ते समावद्भाजौ भवतः। पञ्चदशस्तोत्रमहरित्याहुः, न रात्रिः पञ्चदशस्तोत्रा। कथमुभे पञ्चदशस्तोत्रे भवतः? केन ते समावद्भाजौ भवत इति? द्वादश स्तोत्राण्यपिशर्वराणि। तिसृभिर्देवताभिः संधिना राथंतरेणाश्विनाय स्तुवते। तेन रात्रिः पञ्चदशस्तोत्रा। तेनोभे पञ्चदशस्तोत्रे भवतः। तेन ते समावद्भाजौ भवतः। परिमितं स्तुवन्ति, अपरिमितमनुशंसन्ति। परिमितं भूतम्, अपरिमितं भव्यम्। अपरिमितान्येवावरुन्ध्याद्, इत्यतिशंसति स्तोमम्। अति वै प्रजास्यात्मानमति पशवः। तद् यदेवास्यात्यात्मानं तदेवास्यैतेनाप्याययन्ति[5]। अथो द्वयं वा इदं सर्वं स्नेहश्चैव तेजश्च[6]। अथ तदहोरात्राभ्यामाप्तम्[7]। स्नेहतेजसोराप्त्यै। गायत्रान् स्तोत्रियानुरूपान्[8] शंसन्ति। तेजो वै गायत्री। तमः पाप्मा रात्रिः। तेन तेजसा तमः पाप्मानं तरन्ति। पुनरादायं शंसन्ति। एवं हि सामगा स्तुवते। यथा स्तुतमनुशस्तं भवति। न हि तत् स्तुतं यद् नानुशस्तम्। तदाहुः—अथ

१. तु०—ऐ० ब्रा० ४।६ ॥
२. अथर्व० (शौ० सं०) २०।११०।१ ॥ ऋ० ८।९२।१९ ॥
३. ऋ० ८।२।१ ॥
४. ऋ० ३।५१।१० ॥
५. '—प्याययति' इति पाठोऽत्र स्यादिति गास्ट्रः।
६. गा० सं०। 'तेत्तेजश्च' इति कोशेषु पाठः।
७. „ „। 'आप्त्यं' „ „ „।
८. „ „। 'गायत्रीं स्तोत्रियानुरूपं' इति कोशेषु पाठः।

कस्मादुत्तमात् प्रतीहारादाहूय साम्ना शस्त्रमुपसंतन्वन्तीति ? ।।३।।

पुरुषो वै यज्ञः । तस्य शिर एव हविर्धानम्, मुखमाहवनीयः, उदरं सदः, अन्नमुक्थानि,[1] बाहू मार्जालीयश्चाग्नीध्रीयश्च, या इमा देवतास्ते ऽन्तःसदसं धिष्ण्याः, प्रतिष्ठे गार्हपत्यव्रतश्रपणावििति । अथापरम्—तस्य मन एव ब्रह्मा, प्राण उद्गाता, अपानः प्रस्तोता, व्यानः प्रतिहर्ता, वाग् घोता, चक्षुरध्वर्युः, प्रजातिः[2] सदस्यः, अङ्गानि होत्राशंसिनः, आत्मा यजमानः । तद् यदध्वर्युः स्तोत्रमुपाकरोति—सोमः पवते[3] इति, चक्षुरेव तत् प्राणैः संदधाति । अथ यत् प्रस्तोता ब्रह्माणमामन्त्रयते—ब्रह्मन्त्स्तोष्यामः प्रशास्तरिति, मनो ऽग्रणीर्भवति । एतेषां प्राणानां मनसा हि[4] प्रसूता स्तोमेन स्तुयामेति । प्राणानेव तद् मनसा संदधाति । अथ यद् ब्रह्मा स्तुतेत्युच्चैरनुजानाति, मनो वै ब्रह्मा, मन एव तत् प्राणैः संदधाति । अथ यत् प्रस्तोता प्रस्तौति, अपानमेव तत् प्राणैः संदधाति । अथ यत् प्रतिहर्ता प्रतिहरति, व्यानमेव तदपानैः संदधाति । अथ यदुद्गातोद्गायति, समानमेव तत् प्राणैः संदधाति । अथ यद्धोता साम्ना शस्त्रमुपसंतनोति, वाग् वै होता, वाचमेव तत् प्राणैः संदधाति । अथ यत् सदस्यो ब्रह्माणमुपासीदति, प्रजातिर्वै[5] सदस्यः, प्रजातिमेवाप्नोति[6] । अथ यद्धोत्राशंसिनः सामसंततिं[7] कुर्वन्ति, अङ्गानि वै होत्राशंसिनः, अङ्गान्येवास्य तत् प्राणैः संदधाति[8] । अथ यद् यजमानः, स्तोत्रमुपासी-

१. तु०—ऐ० ब्रा० ४।६ ।। कौषी० ब्रा० १७।५-६ ।।

२. गा० सं० (कौषी० ब्रा० १७।७) । 'अन्तरुक्थानि' इति कोशेषु पाठः ।

३. गा० सं० । 'प्रजापतिः' इति कोशेषु पाठः । शाङ्खायनब्राह्मणस्य पुण्यपत्तनसंस्करणेऽपि 'प्रजापतिः' इत्येव पाठः ।

४. मा० सं० ७।२१ ।।

५. नेदं कौषीतकिब्राह्मणे श्रूयते ।

६. गा० सं० । 'प्रजापति०' इति कोशेषु पाठः ।

७. „ „ । 'सामं संतति' „ „ „ ।

८. संशोधितः पाठः । 'संदधाति' इति गा० रा० पाठः ।

दति, आत्मा वै यजमानः, आत्मानमेवास्य तत् कल्पयति । तस्माद् नैनं बहिर्वेद्यभ्याश्रावयेद्, नाभ्युदियाद्, नाभ्यस्तमियाद्, नाधिष्ण्ये प्रतपेद्, नेत् प्राणेभ्य आत्मानमन्तरगादिति[1] ।।४।।[2]

प्रथमेषु पर्यायेषु स्तुवते, प्रथमेषु पदेषु निनर्दयन्ति, प्रथमरात्रादेव तदसुरान् निर्घ्नन्ति[3] । मध्यमेषु पर्यायेषु स्तुवते, मध्यमेषु पदेषु निनर्दयन्ति, मध्यमरात्रादेव तदसुरान् निर्घ्नन्ति[3] । उत्तमेषु पर्यायेषु स्तुवते, उत्तमेषु पदेषु निनर्दयन्ति, उत्तमरात्रादेव तदसुरान् निर्घ्नन्ति[3] । तद् यथाभ्यागारं[4] पुनः पुनः पाप्मानं निर्हरन्ति, एवमेवैतत् स्तोत्रियानुरूपाभ्यामहोरात्राभ्यामेव तदसुरान् निर्घ्नन्ति[3] । गायत्रीं[5] शंसन्ति, तेजो वै ब्रह्मवर्चसं गायत्री, तेज एवास्मै तद् ब्रह्मवर्चसं यजमाने दधति । गायत्रीः शस्त्वा जगतीः शंसन्ति, ब्रह्म ह वै जगती, ब्रह्मणैवास्मै तद् ब्रह्मवर्चसं यजमाने दधति । व्याह्वयन्ते गायत्रीश्च जगतीश्चान्तरेण । छन्दांस्येव तद् नानावीर्याणि कुर्वन्ति । जगतीः शस्त्वा त्रिष्टुभः शंसन्ति, पशवो वै जगती, पशूनेव तत् त्रिष्टुब्भिः[6] परिदधति । बलं वै वीर्यं त्रिष्टुप्, बलमेव[7] तद् वीर्ये ऽन्ततः प्रतिष्ठापयति । अन्धस्वत्यो मद्वत्यः सुतवत्यः पीतवत्यस्त्रिष्टुभो याज्याः समृद्धाः सुलक्षणाः । एतद् वै रात्रीरूपम् । जागृयाद् रात्रिम् । यावद् ह वै न वा स्तुवते न वा शस्यते, तावदीश्वरा असुरा रक्षांसि च यज्ञमन्ववनयन्ति । तस्मादाहवनीयं समिद्धमाग्नीध्रीयं गार्हपत्यं धिष्ण्यान्[8] समुज्ज्वलयतेति भाषेरन्,[9] ज्वल-

१. 'अगात्' इत्यस्य स्थाने 'इयात्' इति रूपं साधीयः स्यात् ?
२. तु०—कौषी० ब्रा० १७।७ ।।
३. गा० सं० । 'निरघ्नन्ति' इति कोशेषु पाठः ।
४. „ „ । '–भ्याघारात्' „ „ „ ।
५. 'गायत्रीः' इति साधीयः स्यात् ?
६. गा० सं० । 'त्रिष्टुभः' इति कोशेषु पाठः ।
७. 'बल एव' इति कौषी० ब्रा० पाठः, स चात्र युक्तः ।
८. गा० सं० । 'धिष्ण्यं' इति कोशेषु पाठः ।
९. गा० सं० । 'भाषयेरन्' इति कोशेषु पाठः ।

येरन्, प्रकाशमिवैव[1] तत् स्याद्, आरेभन्तः शयीरन्[1] । तान् ह तः[2] श्रेष्ठो वा इति पाप्मा नाभिवृक्णोति[2] । ते तमः पाप्मानमपाघ्नते, ते तमः पाप्मानमपाघ्नते ।।५।।[3]

विश्वरूपं वै त्वाष्ट्रमिन्द्रो ऽहन् । स त्वष्टा हतपुत्रो ऽभिचरणीयमपेन्द्रं सोममाहरत् । तस्येन्द्रो यज्ञवेशसं[4] कृत्वा[4] प्रासहा सोममपिबत् । स विष्वङ्[5] व्यार्छत्[5] । तस्मात् सोमो नानुपहूतेन [न[6] ] पातव्यः । सोमपीथो ऽस्य व्यर्धुको भवति । तस्य मुखात् प्राणेभ्यः श्रीर्यशांस्यूर्ध्वान्युदक्रामन् । तानि पशून् प्राविशन् । तस्मात् पशवो यशः । यशो ह भवति य एवं वेद । ततो ऽस्मा एतदश्विनौ च सरस्वती च यज्ञं समभरन् सौत्रामणिं भैषज्याय । तयेन्द्रमभ्यषिञ्चन् । ततो वै स देवानां श्रेष्ठो ऽभवत् । श्रेष्ठः स्वानां चान्येषां च भवति य एवं वेद, यश्चैवंविद्वान् सौत्रामण्याभिषिच्यते ।।६।।[7]

अथ साम गायति ब्रह्मा । क्षत्रं वै साम । क्षत्रेणैवैनं तदभिषिञ्चति । अथो साम्राज्यं वै साम । साम्राज्येनैवैनं तत् साम्राज्यं गमयति । अथो सर्वेषां वा एष वेदानां रसो यत् साम । सर्वेषामेव तद् वेदानां रसेनाभिषिञ्चति । बृहत्यां गायति । बृहत्यां वा असावादित्यः श्रियां प्रतिष्ठायां प्रतिष्ठितस्तपति । ऐन्द्रचां बृहत्यां गायति । ऐन्द्रो[1] वा एष यज्ञक्रतुर्यत् सौत्रामणिः । इन्द्रायतनं[8] एष एतर्हि यो यजते । स्व एवैनं तदायतने प्रीणाति । अथ कस्मात् संशानानि नाम ? एतैर्वै सामभिर्देवा

---

१. गा० सं० । 'प्रकाशमिव वै तस्यादरेभिन्नं सुवरीन्' इति कोशेषु पाठः ।
२. 'तः…नाभिवृक्णोति' इति भ्रष्टः पाठः !
३. तु०—कौषी० ब्रा० १७।८-९।।
४. गा० सं० । 'जज्ञिरे स संस्कृत्वा' इति कोशेषु पाठः ।
५. गा० सं० । 'विष्टवूव्यच्छत्' इति कोशेषु पाठः ।
६. नैतद् अपेक्ष्यते !
७. तु०—शत० ब्रा० १२।८।३।१-२।।
८. गा० सं० । 'ऐन्द्रायतन' इति कोशेषु पाठः ।

इन्द्रमिन्द्रियेण वीर्येण समश्यन्। तथैवैतद् यजमाना एतैरेव सामभिरिन्द्रियेणैव वीर्येण संश्यन्ति। संश्रवसे विश्रवसे सत्यश्रवसे श्रवस इति सामानि भवन्ति। एष्वेवैनं लोकेषु प्रतिष्ठापयति। चतुर्निधनं भवति। चतस्रो वै दिशः। दिक्षु तत् प्रतितिष्ठन्ते। अथो चतुष्पादः पशवः। पशूनामाप्त्यै। तदाहुः—यदेतत् साम गीयते, अथ क्वैतस्य साम्न[1] उक्थम्[1]? का प्रतिष्ठा? त्रया देवा एकादशेत्याहुः, एतद् वा एतस्य साम्न[1] उक्थम्,[1] एषा प्रतिष्ठा। त्रयस्त्रिंशं ग्रहं गृह्णाति। साम्नः प्रतिष्ठायै, प्रतिष्ठायै॥७॥[2]

प्रजापतिरकामयत—वाजमाप्नुयां[3] स्वर्गं लोकमिति[4]। स एतं वाजपेयमपश्यत्। वाजपेयो वा एषः, य एष तपति। वाजमेतेन यजमानः स्वर्गं लोकमाप्नोति। शुक्रवत्यो ज्योतिष्मत्यः प्रातःसवने भवन्ति। तेजो ब्रह्मवर्चसं ताभिराप्नोति। वाजवत्यो माध्यंदिने सवने स्वर्गस्य लोकस्य समष्ट्यै। अन्नवत्यो गणवत्यः पशुमत्यस्तृतीयसवने भवन्ति। भूमानं ताभिराप्नोति। सर्वः सप्तदशो भवति,[5] प्रजापतिर्वै सप्तदशः, प्रजापतिमेवाप्नोति। हिरण्यस्रज ऋत्विजो भवन्ति। महस एव तद् रूपं क्रियते। एष मे ऽमुष्मिँल्लोके प्रकाशो ऽसद् इति। ज्योतिर्वै हिरण्यम्। ज्योतिषैवैनमन्तर्दधति। आजिं धावन्ति। यजमानमुज्जापयन्ति। नाकं रोहति, समहसे रोहति, विश्वमहसे रोहति, सर्वमहसे रोहति। मनुष्यलोकादेवैनमन्तर्दधति। देवस्य सवितुः सवे[6] स्वर्गं लोकं वर्षिष्ठं नाकं रोहेयम्[7] इति ब्रह्मा रथचक्रं सर्पति। सवितृप्रसूत एवैनं तत् सर्पति। अथो प्रजा-

१. गा० सं०। 'साम्नमुक्थं' इति कोशेषु पाठः।
२. तु०—शत० ब्रा० १२।८।३।२३-२८।
३. गा० सं०। 'आप्नुयात्' इति कोशेषु पाठः।
४. गा० सं०। 'लोकमेति' इति कोशेषु पाठः।
५. गा० सं०। 'भवन्ति' इति कोशेषु पाठः।
६. गा० सं०। 'सवं' इति कोशेषु पाठः।
७. वैतानसूत्रे ४,३।७ (=२७।६) 'रुहेयम्' इति पाठः।

पतिर्वै ब्रह्मा । प्रजापतिमेवैनं वज्रादधिप्रसुवति, नाकस्योज्जित्यै, वाजिनां संतत्यै । वाजिसामाभिगायति । वाजिमान् भवति । वाजो वै स्वर्गो लोकः, स्वर्गमेव तल्लोकं रोहति । विष्णोः शिपिविष्टवतीषु बृहदुत्तमं भवति । स्वर्गमेव तल्लोकं रूढ्वा ब्रध्नस्य विष्टपमतिक्रामति, अतिक्रामति ॥८॥[1]

अथातो ऽप्तोर्यामा । प्रजापतिर्वै यत् प्रजा असृजत, ता वै तान्ता असृजत । ताः सृष्टाः पराच्य एवासन्, नोपावर्तन्त । ता एकेन स्तोमेनोपागृह्णात् । ता अत्यरिच्यन्त, ता द्वाभ्याम्, ताः सर्वैः । तस्मात् सर्वस्तोमः । ता एकेन पृष्ठेनोपागृह्णात् । ता अत्यरिच्यन्त, ता द्वाभ्याम्, ताः सर्वैः । तस्मात् सर्वपृष्ठः[2] । ता अतिरिक्तोक्थे वारवन्तीयेनावारयन्[3] । तस्मादेषो ऽतिरिक्तोक्थवान् भवति । तस्माद् वारवन्तीयम् । ता यदाप्त्वायच्छत,[4] अतो वा अप्तोर्यामा[5] । अथो प्रजा वा[6] अप्तुरित्याहुः[6] । प्रजानां यमन इति हैवैतदुक्तम् । ता[7] बर्हिः॰ प्रजाश्नायेरन्[7] । तर्हि हैतेन यजते । स एषो ऽष्टापृष्ठो भवति । तद् यथान्यस्मिन् यज्ञे विश्वजितः पृष्ठमनु संचरं भवति, कथमेतदेवमत्रेति ? पितैष[7] यज्ञानाम् । तद् यथा श्रेष्ठिनि संवशेयुरपि विद्विषाणाः, एवमेवैतच्छ्रेष्ठिनो वशेयान्नमन्नस्यानुचर्याय[7] क्षमन्ते ॥९॥[8]

तद् यथैवादो ऽह्न उक्थानामाग्नेयं प्रथमं भवति, एवमेवैतदत्राप्याग्नेयं प्रथमं भवति । ऐन्द्रे वाव तत्रोत्तरे, ऐन्द्रे वा एते । ऐन्द्रावैष्णव-

१. तु०—पञ्च० (ताण्ड्य) ब्रा० १८.७॥
२. गा० सं० । 'सर्वस्पृष्ठः' इति कोशेषु पाठः ।
३. '—वारयत्' इति पाठोऽत्र युक्तः स्यात् ?
४. गा० सं० । 'यदाप्ता०' इति कोशेषु पाठः ।
५. '—र्यामा अथो' इति कोशेषु पाठः ।
६. गा० सं० । 'वाप्नुरि०' 'वापुरि०' 'वाप्तरि०' इति कोशेषु पाठाः ।
७. सन्दिग्धः पाठः ।
८. तु०—पञ्च० (ताण्ड्य) ब्रा० २०।३।२॥

मच्छावाकस्योक्थं भवति । चतुराहावान्यतिरिक्तोक्थानि भवन्ति । पशवो वा उक्थानि । चतुष्टया वै पशवः । अथो चतुष्पादः पशवः । पशूनामाप्त्यै । त एते स्तोत्रियानुरूपास्तृचा अर्धर्चशस्याः । प्रतिष्ठा वा अर्धर्चः,[1] प्रतिष्ठित्या एव । अथैतेषामेवाश्विनानां सूक्तानां द्वे द्वे समाहावमेकैकमहरहः शंसति । अश्विनौ वै देवानां भिषजौ । तस्मादाश्विनानि सूक्तानि शंसति । तदश्विभ्यां प्रददुरिदं भिषज्यतमिति । क्षैत्रपत्याः[2] परिधानीया भवन्ति । यत्र ह तस्तत्प्रजा[3] अशनायन्तीः पिपासन्तीः संरुद्धा स्थिता आसन्, ता दीना एताभिर्यथाक्षेत्रं पाययां चकार, तर्पयां चकार । अथो इयं वै क्षेत्रं पृथिवी । अस्यामदीनायामन्ततः प्रतिष्ठास्यामह इति । त्रिष्टुभो याज्या भवन्ति । यत्र ह तस्तत्प्रजा[3] अशनायन्तीः पिपासन्तीः संरुद्धा स्थिता बभूवुः, ता हैवैना एताभिर्यथौकसं व्यवसाययां चकार । तस्मादेता याज्या भवन्ति, तस्मादेता याज्या भवन्ति ॥१०॥[4]

अथातो ऽनैकाहिकम् । श्वस्तोत्रियमद्यस्तोत्रियस्यानुरूपं कुर्वन्ति प्रातःसवने । अहीनमेव तत् संतन्वन्ति, अहीनस्य संतत्यै । तद् यथा ह वा एकाहः सुतः, एवमहीनः सुतः । तद् यथैकाहस्य सुतस्य सवनानि संतिष्ठमानानि यन्ति, एवमहीनस्य सुतस्याहानि संतिष्ठमानानि यन्ति । तद् यच्छ्वस्तोत्रियमद्यस्तोत्रियस्यानुरूपं कुर्वन्ति प्रातःसवने, अहरेवं तदह्नो ऽनुरूपं कुर्वन्ति । अपरेणैव तदह्नापरमहरभ्यारभन्ते । तत् तथा न माध्यंदिने सवने । श्रीर्वै पृष्ठानि । तानि तस्मिन्नेवावस्थितानि भवन्ति । एतेनैव विधिना तृतीयसवने । न श्वस्तोत्रियमद्यस्तोत्रियस्यानुरूपं कुर्वन्ति ॥११॥[5]

---

१. गा० सं० । 'वार्धर्चः' इति कोशेषु पाठः । 'वा अर्द्धर्चः' इत्येव पाठः पुणे-कोशयोः ।
२. गा० सं० । 'क्षेत्रवत्यः' इति कोशेषु पाठः ।
३. सन्दिग्धः पाठः !
४. तु०—कौषी० ब्रा० ३०।११॥
५. तु०—ऐ० ब्रा० ६।१७।१-२; ६।५।१ इत्यादि ।

अथात आरम्भणीया एव। ऋजुनीती नो वरुणः[1] इति मैत्रावरुणस्य। मित्रो नयतु विद्वान्[1] इति। प्रणेता वा एष होत्रकाणां यद् मैत्रावरुणः। तस्मादेषा प्रणेत्रिमती[2] भवति। इन्द्रं वो विश्वतस्परि[3] इति ब्राह्मणाच्छंसिनः। हवामहे जनेभ्यः[3] इतीन्द्रमेवैतयाहरहर्निह्वयन्ते। न हैवैषां विहवे ऽन्य इन्द्रं वृङ्क्ते, यत्रैवंविद्वान् ब्राह्मणाच्छंस्येतामहरहः शंसति। यत् सोम आ सुते नरः[4] इत्यच्छावाकस्य। इन्द्राग्नी अजोहवुः[4] इतीन्द्राग्नी एवैतयाहरहर्निह्वयन्ते। न हैवैषां विहवे ऽन्य इन्द्राग्नी वृङ्क्ते, यत्रैवंविद्वानच्छावाक एतामहरहः शंसति। ता वा एताः स्वर्गस्य लोकस्य नावः संतारण्यः। स्वर्गमेवैताभिर्लोकमनुसंतरन्ति ॥१२॥[5]

अथातः परिधानीया एव। ते स्याम देव वरुण[6] इति मैत्रावरुणस्य। इषं स्वश्च धीमहि[6] इति। अयं वै लोक इषमिति, असौ लोकः स्वरिति, उभावेवैनौ तौ लोकावारभते। व्यन्तरिक्षमतिरद्[7] इति ब्राह्मणाच्छंसिनः। विवत्तृचम्। स्वर्गमेवैताभिर्लोकं विवृणोति। मदे सोमस्य रोचना, इन्द्रो यदभिनद् वलम्[7] इति। सिषासवो ह वा एते यद् दीक्षिताः। तस्मादेषा वलवती भवति।

उद्गा आजदङ्गिरोभ्य आविष्कृण्वन्गुहा सतीः।
अर्वाञ्चं नुनुदे वलम्[8] ॥ इति।
सनिमेतेभ्य एतयावरुन्द्धे।
इन्द्रेण रोचना दिवो दृढानि दृंहितानि च।
स्थिराणि न पराणुदे[9]। इति।

---

१. ऋ० १।६०।१॥
२. 'प्रणेतृमती' इति ऐ० ब्रा० (६।६) पाठः।
३. अथर्व० (शौ० सं०) २०।३६।१॥ ऋ० १।७।१०॥
४. ऋ० ७।६४।१०॥ ५. तु०—ऐ० ब्रा० ६।६॥ ६. ऋ० ७।६६।६॥
७. अथर्व० (शौ० सं०) २०।२८।१॥ ऋ० ८।१४।७॥
८. " " २०।२८।२॥ ऋ० ८।१४।८॥
९. " " २०।२८।३॥ ऋ० ८।१४।९॥

स्वर्गमेवैतयाहरहर्लोकमवरुन्द्धे । आहं सरस्वतीवतो:[1] इत्यच्छावाकस्य । इन्द्राग्न्योरवो वृणे[1] इति । एतद्ध वा इन्द्राग्न्यो: प्रियं धाम[2] यद् वागिति । प्रियेणैवैनौ तद् धाम्ना समर्धयति । प्रियेणैव धाम्ना समृध्यते य एवं वेद ।।१३।।[3]

उभय्यो होत्रकाणां परिधानीया भवन्ति, अहीनपरिधानीयाश्चैकाहिनस्य । तत ऐकाहिकीभिरेव मैत्रावरुणः परिदधाति । तेनास्माल्लोकाद् न प्रच्यवते । आहिनीकीभिरच्छावाकः । स्वर्गस्य लोकस्याप्त्यै । उभयीभिर्ब्राह्मणाच्छंसी । एवमसावुभौ व्यन्वारभमाण एतीमं च लोकममुं च । अथो ऽहीनं चैकाहं चाथो संवत्सरं चाग्निष्टोमं चाथो मैत्रावरुणं चाच्छावाकं च । एवमसावुभौ व्यन्वारभमाण एति । अथ तत ऐकाहिकीभिरेव तृतीयसवने होत्रकाः परिदधति[4] । तेनास्माल्लोकाद् न प्रच्यवते । आहिनीकीभिरच्छावाकः । स्वर्गस्य लोकस्य समष्ट्यै । कामं तद्धोता शंसेद्, यद्धोत्रकाः पूर्वेद्युः शंसेयुः । यद् वै होता, तद्धोत्रकाः । प्राणो वै होता, अङ्गानि होत्रकाः । समानो वा अयं प्राणो ऽङ्गान्यनुसंचरति । तस्मात् तत् कामं होता शंसेद्, यद्धोत्रकाः पूर्वेद्युः शंसेयुः । यद् वै होता, तद्धोत्रकाः । आत्मा वै होता, अङ्गानि होत्रकाः । समाना वा इमे ऽङ्गानामन्ताः । तस्मात् तत् कामं होता शंसेद्, यद्धोत्रकाः पूर्वेद्युः शंसेयुः । यद् वै होता, तद्धोत्रकाः । सूक्तान्तैर्होता परिदधाति । अथ समान्य एव होत्रकाणां परिधानीया भवन्ति ।।१४।।[5]

यः श्वस्तोत्रियः, तमद्यस्तोत्रियस्यानुरूपं कुर्वन्ति प्रातःसवने । अहीनमेव तत् संतन्वन्ति, अहीनस्य संतत्यै । त एते होत्रकाः प्रातःसवने षड-

---

१. ऋ० ८।३८।१० ।।
२. संशोधितः पाठः । 'धामो' इति कोशेषु पाठः ।
३. तु०—ऐ० ब्रा० ६।७ ।।
४. गा० सं० । 'परिदधाति' इति कोशेषु पाठः ।
५. तु०—ऐ० ब्रा० ६।८ ।।

हस्तोत्रियं शस्त्वा माध्यंदिनेऽहीनसूक्तानि शंसन्ति । आ सत्यो यातु मघवाँ ऋजीषी[1] इति । सत्यवद् मैत्रावरुणः । अस्मा इदु प्र तवसे तुराय[2] इति ब्राह्मणाच्छंसी । शासद् वह्निर्दुहितुर्नप्त्यं गाद्[3] इत्याच्छावाकः । तदाहुः—कस्मादच्छावाको वह्निवदेतत् सूक्तमुभयत्र शंसति स पराक्षु चैवाहःस्ववर्क्षु[4] चेति ? वीर्यवान् वा एष बह्वृचो यदच्छावाकः । वहति ह वै वह्निर्धुरो यासु युज्यते । तस्मादच्छावाको वह्निवदेतत् सूक्तमुभयत्र शंसति स पराक्षु चैवाहःस्ववर्क्षु[4] चेति । तानि पञ्चस्वहःसु शस्यन्ते—चतुर्विंशेऽभिजिति विषुवति विश्वजिति महाव्रते । तान्येतान्यहीनसूक्तानीत्याचक्षते । न ह्येषु किं चन हीयते । पराञ्चि ह वा एतान्यहान्यनभ्यावर्तीनि[5] भवन्ति । तस्मादेतान्येतेष्वहःसु शस्यन्ते । यदेतानि शंसन्ति, तत् स्वर्गस्य लोकस्य रूपम् । यद् वेवैतानि शंसन्ति, इन्द्रमेवैतैर्निह्वयन्ते यथर्षभं वाशितायै । ते वै देवाश्चर्षयश्चाब्रुवन्—समानेन यज्ञं संतन्वामहा इति । तदेतद् यज्ञस्य समानमपश्यन्—समानान् प्रगाथान्, समानीः प्रतिपदः, समानानि सूक्तानि । ओकःसारी वा इन्द्रः । यत्र वा इन्द्रः पूर्वं गच्छति, गच्छत्येव तत्रापरम्, यज्ञस्यैव सेन्द्रतायै ।।१५।।[6]

।। इत्यथर्ववेदे गोपथब्राह्मणोत्तरभागे पञ्चमः प्रपाठकः ।।

---

१. अथर्व० (शौ० सं०) २०।७७।१ ।। ऋ० ४।१६।१ ।।
२. ,, ,, २०।३५।१ ।। ऋ० १.६१।१ ।।
३. ऋ० ३।३१।१ ।।
४. गा० सं० । 'चैवाहसर्वाक्षु' इति कोशेपु पाठः ।
५. ,, ,, । 'एतान्यहान्यभ्या' ,, ,, ,, ।
६. तु०—ऐ० ब्रा० ६।१७.१८ ।।

# षष्ठः प्रपाठकः

ओम् । तान् वा एतान् संपातान् विश्वामित्रः प्रथममपश्यत्—एवा त्वामिन्द्र वज्रिन्नत्र,[1] यन्न इन्द्रो जुजुषे यच्च वष्टि,[2] कथा महामवृधत् कस्य होतुः[3] इति । तान् विश्वामित्रेण दृष्टान् वामदेवो ऽसृजत । स हेक्षां चक्रे विश्वामित्रो—यान् वा अहं संपातानदर्शं तान् वामदेवो ऽसृजत । कानि न्वहं[4] सूक्तानि संपातान् तत्प्रतिमान् सृजेयमिति ? स एतानि सूक्तानि संपातांस्तत्प्रतिमानसृजत—सद्यो ह जातो वृषभः कनीनः,[5] उदु ब्रह्माण्यैरत श्रवस्या,[6] अभि तष्टेव दीधया मनीषाम्[7] इति विश्वमित्रः । इन्द्रः पूर्भिदातिरद् दासमर्कैः,[8] य एक इद्धव्यश्चर्षणीनाम्,[9] यस्तिग्मशृङ्गो वृषभो न भीमः[10] इति वसिष्ठः । इमामू षु प्रभृतिं सातये धाः,[11] इच्छन्ति त्वा सोम्यासः सखायः,[12] शासद् वह्निर्दुहितुर्नप्त्यं गाद्[13] इति भरद्वाजः । एतैर्वै

---

१. ऋ० ४।१९।१ ॥
२. ऋ० ४।२२।१ ॥
३. ऋ० ४।२३।१ ॥
४. ऐतरेयपाठमनुसृत्य संशोधितः पाठः । 'त्वं हि' इति कोशेषु पाठः ।
५. ऋ० ३।४८।१ ॥
६. अथर्व० (शौ० सं०) २०।१२।१ ॥ ऋ० ७।२३।१ ॥
७. ऋ० ३।३८।१ ॥
८. अथर्व० (शौ० सं०) २०।११।१ ॥ ऋ० ३।३४।१ ॥
९. „ „ २०।३६।१॥ ऋ० ६।२२।१ ॥
१०. „ „ २०।३७।१॥ ऋ० ७।१९।१ ॥
११. ऋ० ३।३६।१ ॥
१२. ऋ० ३।३०।१ ॥
१३. ऋ० ३।३१।१ ॥

संपातैरेत ऋषय इमाँल्लोकान् समपतन्। तद् यत् समपतन्, तस्मात् संपाताः। तत् संपातानां संपातत्वम्। ततो वा एतांस्त्रीन् संपातान् मैत्रावरुणो विपर्यासमेकैकमहरहः शंसति—एवा त्वामिन्द्र वज्रिन्नत्र[1] इति प्रथमे ऽहनि, यन्न इन्द्रो जुजुषे यच्च वष्टि[2] इति द्वितीये, कथा महामवृधत् कस्य होतुः[3] इति तृतीये। त्रीनेव संपातान् ब्राह्मणाच्छंसी विपर्यासमेकैकमहरहः शंसति—इन्द्रः पूर्भिदातिरद् दासमर्कैः[4] इति प्रथमे ऽहनि, य एक इद्धव्यश्चर्षणीनाम्[5] इति द्वितीये, यस्तिग्मशृङ्गो वृषभो न भीमः[6] इति तृतीये। त्रीनेव संपातानच्छावाको विपर्यासमेकैकमहरहः शंसति—इमामू षु प्रभृतिं सातये धाः[7] इति प्रथमे ऽहनि, इच्छन्ति त्वा सोम्यासः सखायः[8] इति द्वितीये, शासद् वह्नि-र्दुहितुर्नप्त्यं गाद्[9] इति तृतीये। तानि वा एतानि नव त्रीणि चाहरहःशं-स्यानि। तानि द्वादश भवन्ति। द्वादश ह वै मासाः संवत्सरः। संवत्सरः प्रजापतिः। प्रजापतिर्यज्ञः। तत् संवत्सरं प्रजापतिं यज्ञमाप्नोति[10]। तस्मिन् संवत्सरे प्रजापतौ यज्ञे ऽहरहः प्रतितिष्ठन्तो यन्ति। प्रतितिष्ठते,[11] इदं सर्वमनु प्रतितिष्ठति। प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद। तान्यन्तरेणा-वापमावपेरन्। अन्यूङ्खा विराजश्चतुर्थे ऽहनि वैमदीश्च[12] पङ्क्तीः पञ्चमे पारुच्छेपीः[13] षष्ठे। अथ यान्यन्यानि महास्तोत्राण्यष्टर्चान्यावपेरन् ॥१॥[14]

को अद्य नर्यो देवकामः[15] इति मैत्रावरुणः। वने न वा यो न्यधायि

---

१. ऋ० ४।१९।१ ।। २. ऋ० ४।२२।१ ।।
३. ऋ० ४।२३।१ ।।
४.—९. द्र०—पृ० १६० टि० ८—१३ ।
१०. बहुवचनान्त 'आप्नुवन्ति' इति पाठोऽत्र युक्तः स्यात् (द्र०—ऐ० ब्रा० ६।१९) ।
११. गा० सं० । 'प्रतिष्ठन्ते' इति कोशेषु पाठः ।
१२. ,, ,, । 'वैपदीश्च' ,, ,, ,, । पुणे-खकोशे 'वैमदीश्च' इत्येव पाठः ।
१३. ,, ,, । 'पारुक्षेपीः' ,, ,, ,, । पुणे-कोशयोः 'पारुच्छेपीः' ,, ,, ।
१४. तु०—ऐ० ब्रा० ६।१८,१९ ।।
१५. ऋ० ४।२५।१ ।।

चाकन्' इति ब्राह्मणाच्छंसी । आ याह्यर्वाङुपवन्धुरेष्ठाः' इत्यच्छावाकः । एतानि वा आवपनानि । एतैरेवावपनैर्देवाश्चर्षयश्च स्वर्गं लोकमायन् । तथैवैतद् यजमाना एतैरेवावपनैः स्वर्गं लोकं यन्ति । सद्यो ह जातो वृषभः कनीनः' इति मैत्रावरुणः पुरस्तात् संपातानामहरहः शंसति । तदेतत् सूक्तं स्वर्ग्यम् । एतेन सूक्तेन देवाश्चर्षयश्च स्वर्गं लोकमायन् । तथैवैतद् यजमाना एतेनैव सूक्तेन स्वर्गं लोकं यन्ति । तद्दृषभवत् पशुमद् भवति । पशूनामाप्त्यै । तत् पञ्चर्चं भवति । अन्नं वै पङ्क्तिः । अन्नाद्यस्यावरुद्ध्यै । अरिष्टैर्नः पथिभिः पारयन्ता' इति स्वर्गताया एवैतदहरहः शंसति । उदु ब्रह्माण्यैरत श्रवस्या' इति ब्राह्मणाच्छंसी । ब्रह्मण्वदेतत् सूक्तं समृद्धम् । एतेन सूक्तेन देवाश्चर्षयश्च स्वर्गं लोकमायन् । तथैवैतद् यजमाना एतेनैव सूक्तेन स्वर्गं लोकं यन्ति । तदु वै षड्चम् । षड् वा ऋतवः । ऋतूनामाप्त्यै । तदुपरिष्टात् संपातानामहरहः शंसति । अभि तष्टेव दीधया मनीषाम्' इत्यच्छावाको ऽहरहः शंसति । अभिवदति तत्यै रूपम् । अभि प्रियाणि मर्मृशत् पराणि' इति । यान्येव पराण्यहानि तानि प्रियाणि । तान्येव तदभिमर्मृशन्तो यन्त्यभ्यारभमाणाः । परो वा अस्माल्लोकात्' स्वर्गो लोकः । स्वर्गमेव तल्लोकमभिमृशन्ति । कवींरिच्छामि संदृशे सुमेधाः' इति । ये ह वा अनेन पूर्वे प्रेतास्ते' वै कवयः । तानेव' तदभ्यतिवदति । यदु वै दशर्चम्, दश वै प्राणाः, प्राणानेव तदाप्नोति ।

---

१. ऋ० १०।२६।१ ॥
२. ऋ०३।४३।१ ॥
३. ऋ० ३।४८।१ ॥
४. ऋ० ६।६९।१ ॥ 'पारयन्तु' इति कोशेषु प्रायिकः पाठः ।
५. अथर्व० (शौ० सं०) २०।१२।१ ॥ ऋ० ७।२३।१ ॥
६. ऋ० ३।३८।१ ॥
७. गा० सं० । '—ल्लोको' 'ल्लोंकाः' इति कोशेषु पाठौ
८. „ „ । 'प्रीतास्ते' इति कोशेषु पाठः ।
९. गा० सं० । 'तान्येव' इति कोशेषु पाठः ।

प्राणानां संतत्यै। यदु वै दशर्चम्, दश वै पुरुषे प्राणाः, दश स्वर्गा[1] लोकाः। प्राणांश्चैव तत् स्वर्गांश्च लोकानाप्नोति। प्राणेषु चैवैतत् स्वर्गेषु च लोकेषु प्रतितिष्ठन्तो यन्ति। यदु वै दशर्चम्, दशाक्षरा विराड्, इयं वै स्वर्गस्य लोकस्य प्रतिष्ठा, तदेतदस्यां प्रतिष्ठायां प्रतिष्ठापयति। सकृदिन्द्रं निराह, तेनैन्द्राद् रूपाद् न प्रच्यवते। तदुपरिष्टात् संपातानामहरहः शंसति ।।२।।[2]

कस्तमिन्द्र त्वावसुम्,[3] कन्नव्यो अतसीनाम्,[4] कदू न्वस्याकृतम्[5] इति कद्वन्तः प्रगाथा अहरहः शस्यन्ते[6]। को[6] वै प्रजापतिः। प्रजापतेराप्त्यै, यदेव कद्वन्तः। तत् स्वर्गस्य लोकस्य रूपम्, यद् वेव कद्वन्तः। अथो अन्नं वै कम्, अथो अन्नस्यावरुद्ध्यै, यद् वेव कद्वन्तः। अथो सुखं वै कम्, अथो सुखस्यावरुद्ध्यै, यद् वेव कद्वन्तः। अथो ऽहरहर्वा एते शान्तान्यहीनसूक्तान्युपयुञ्जाना यन्ति। तानि कद्वद्भिः प्रगाथैः शमयन्ति। तान्येभ्यः शान्तानि कं भवन्ति। तान्येताञ्छान्तानि स्वर्गं लोकमभिवहन्ति। त्रिष्टुभः सूक्तप्रतिपदः शंसेयुः। ता हैके पुरस्तात् प्रगाथानां शंसन्ति धाय्या इति वदन्तः। तदु तथा न कुर्यात्। क्षत्रं वै होता, विशो होत्राशंसिनः। क्षत्रायैव[7] तद् विशं[8] प्रत्युद्यामिनीं कुर्युः, पापवस्यसम्[9]। त्रिष्टुभो वा[10] इमाः सूक्तप्रतिपद इत्येवं विद्यात्। यथा वै समुद्रं प्रतरेयुः, एवं हैवैते प्रप्लवन्ते, ये संवत्सरं द्वादशाहं वोपासते। तद् यथा

---

१. गा० सं०। 'स्वर्गो' इति कोशेषु पाठः।
२. तु०—ऐ० ब्रा० ६।१९,२०।।
३. ऋ० ७।३२।१४।।
४. अथर्व० (शौ० सं०) २०।५०।१।। ऋ० ८।३।१३।।
५. अथर्व० (शौ० सं०) २०।९७।३।। ऋ० ८।६६।९।।
६. गा० सं०। 'शंसत्येको' इति कोशेषु पाठः।
७. गा० सं०। 'क्षत्रस्यैव' इति कोशेषु पाठः।
८. ,, ,,। 'विषं' इति कोशेषु पाठः।
९. ,, ,,। 'पावमनस्यसं' 'पावनस्यसं' इति कोशेषु पाठौ।
१०. 'वा' इत्यस्य स्थाने 'मे' इति ऐ० ब्रा० (६।२१) पाठः।

सैरावतीं नावं पारकामाः समारोहेयुः, एवं हैवैतास्त्रिष्टुभः स्वर्गकामाः समारोहन्ति। न ह वा एतच्छन्दो गमयित्वा स्वर्गं लोकमुपावर्तते, वीर्यवत्तमं हि। ताभ्यो न व्याह्वयीत, समानं हि छन्दः। अथो नेद्[1] धाय्याः करवाणीति। यदेनाः शंसन्ति, तत् स्वर्गस्य लोकस्य रूपम्। यद्[1] वेवैनाः शंसन्ति, इन्द्रमेवैताभिर्निह्वयन्ते यथर्षभं वाशितायै[2] ॥३॥[3]

अपेन्द्र प्राचो मघवन्नमित्रान्[4] इति मैत्रावरुणः पुरस्तात् संपातानामहरहः शंसति। अपापाचो अभिभूते नुदस्वापोदीचो अप शूराधराच उरौ यथा तव शर्मन् मदेम[4] इति। अभयस्य रूपम्, अभयमिव ह्यन्विच्छति[5]। ब्रह्मणा ते ब्रह्मयुजा युनज्मि[6] इति ब्राह्मणाच्छंस्येतामहरहः शंसति युक्तवतीम्। युक्त इव ह्यहीनः, अहीनस्य रूपम्। उरुं नो लोकमनुनेषि[7] इत्यच्छावाको ऽहरहः शंसति। अनुनेषीत्येत इव ह्यीनः, अहीनस्य रूपम्। नेषीति सत्त्रायणरूपम्। ओकःसारी हैवैषामिन्द्रो भवति। यथा गौः प्रज्ञातं गोष्ठं यथर्षभो[8] वाशिताया,[9] एवं हैवैषामिन्द्रो यज्ञमागच्छति। शुनंहूययाहीनस्य परिदध्यात्। क्षत्रियो ह राष्ट्राच्च्यवते। यो हैव परो भवति, तमभिह्वयति ॥४॥[10]

अथातो ऽहीनस्य[11] युक्तिश्च विमुक्तिश्च। व्यन्तरिक्षमतिरद्[12] इत्य-

---

१. गा० सं०। 'न्ये' इति कोशेषु पाठः।
२. „ „। 'वासितायै' इति कोशेषु पाठः।
३. तु०—ऐ० ब्रा० ६।२१ ॥
४. अथर्व० (शौ० सं०) २०।१२५।१ ॥ तु०—अथर्व० (पै० सं०) १६।१६।८ ॥
५. गा० सं०।'—च्छेति' इति कोशेषु पाठः।
६. अथर्व० (शौ० सं०) २०।८६।१ ॥ ऋ० ३।३५।४ ॥
७. अथर्व० (पै० सं०) ३।३५।४॥ अथर्व० (शौ० सं०) १६।१५।४॥ ऋ० ६।४७।८॥
८. गा० सं०। 'यथर्षभं' इति कोशेषु पाठः।
९. „ „। 'वासिताया' „ „ „।
१०. तु०—ऐ० ब्रा० ६।२२ ॥
११. गा० सं०। 'ऽहीनश्च' इति कोशेषु पाठः। पुणे-ककोशे' ऽहीनस्य' इत्येव पाठः।
१२. अथर्व० (शौ० सं०) २०।२८।१ ॥ ऋ० ८।१४।७ ॥

हीनं युङ्क्ते। एवेदिन्द्रम्[1] इति विमुञ्चति। नूनं सा ते[2] इत्यहीनं युङ्क्ते। नू ष्टुत[3] इति विमुञ्चति। एष ह वा अहीनं तन्तुमर्हति, य एनं योक्तं च विमोक्तं च वेद। तस्य हैषैव युक्तिरेषा विमुक्तिः। तद् यत् प्रथमे ऽहनि चतुर्विंश ऐकाहिकीभिः परिदध्युः, प्रथम एवाहनि यज्ञं संस्थापयेयुः, नाहीनकर्म कुर्युः। अथ यदहीनपरिधानीयाभिः[4] परिदध्युः, तद् यथा युक्तो ऽविमुच्यमान[5] उत्क्रत्येत, एवं यजमाना उत्क्रत्येरन्, नाहीनकर्म कुर्युः। अथ यदुभयीभिः परिदध्युः, तद् यथा दीर्घाध्व उपविमोकं यायात्, तादृक् तत्। समानीभिः परिदध्युः। तदाहुः—एकया द्वाभ्यां वा स्तोममतिशंसेद्, दीर्घारण्यानि भवन्ति। यत्र बह्वीभि स्तोमो ऽतिशस्यते, अथो क्षिप्रं देवेभ्यो ऽन्नाद्यं संप्रयच्छामीति। अपरिमिताभिरुत्तरयोः सवनयोः, अपरिमितो वै स्वर्गो लोकः, स्वर्गस्य लोक य समष्टयै। तद् यथाभिहेषते पिपासते क्षिप्रं प्रयच्छेत्, तादृक् तत्। समानीभिः परिदध्युः। संततो हैवैषामारब्धो ऽविस्रस्तो यज्ञो भवति। संततमृचा वषट्कृत्यम्, संतत्यै। संधीयते प्रजया पशुभिर्य एवं वेद ॥५॥[6]

तदाहुः—कथं द्व्युक्थो होतैकसूक्त एकोक्था होत्रा द्विसूक्ता इति? असौ वै होता यो ऽसौ तपति, स वा एक एव, तस्मादेकसूक्तः। स यद् विध्यातो द्वाविवाभवति, तेज एव मण्डलं भा अपरं शुक्लमपरं कृष्णं, तस्माद् द्व्युक्थः। रश्मयो वाव होत्राः, ते वा एकैकं, तस्मादेकोक्थाः। तद् यदेकैकस्य रश्मेर्द्वौ द्वौ वर्णौ भवतः, तस्माद् द्विसूक्ताः। संवत्सरो वाव होता, स वा एक एव, तस्मादेकसूक्तः। तस्य यद्

१. अथर्व० (शौ० सं०) २०।१२।६॥ ऋ० ७ २३ ६॥
२. ऋ० २।११।२१॥
३. ऋ० ४।१६।२१॥
४. गा० सं०। 'यदहीनः परि०' इति कोशेषु पाठः। पुणे-कोशयोः 'यदहीनपरि०' इत्येव पाठः।
५. " "। '—माना' " " "।
६. तु०—ऐ० ब्रा० ६।२३॥

द्वयान्यहानि भवन्ति शीतान्यन्यान्युष्णान्यन्यानि, तस्माद् द्व्युक्थः । ऋतवो वाव होत्राः, ते वा एकैकम्, तस्मादेकोक्थाः । तद् यदेकैकस्यर्तौ द्वौ द्वौ मासौ भवतः, तस्माद् द्विसूक्ताः । पुरुषो वाव होता, स वा एक एव, तस्मादेकसूक्तः । स यत् पुरुषो भवत्यन्यथैव प्रत्यङ् भवत्यन्यथा प्राङ्, तस्माद् द्व्युक्थः । अङ्गानि वाव होत्राः, तानि वा एकैकम्, तस्मादेकोक्थाः । तद् यदेकैकमङ्गं द्व्युतिर्भवति, तस्माद् द्विसूक्ताः । तदाहुः—यद् द्व्युक्थो होतैकसूक्त एकोक्था होत्रा द्विसूक्ताः, कथं तत् समं भवति ? यदेव द्विदेवत्याभिर्यजन्ति, अथो यद् द्विसूक्ता होत्रा इति ब्रूयात् । तदाहुः—यदग्निष्टोम एव सति यज्ञे द्वे होतुरुक्थे अतिरिच्येते, कथं ततो होत्रा न व्यवच्छिद्यन्त इति ? यदेव द्विदेवत्याभिर्यजन्तिं, अथो यद् द्विसूक्ता होत्रा इति ब्रूयात् । तदाहुः—यदग्निष्टोम एव सति यज्ञे सर्वा देवताः सर्वाणि छन्दांस्याप्याययन्ति, अथ कतमेन छन्दसायातयामान्युक्थानि प्रणयन्ति, कया देवतयेति ? गायत्रेण छन्दसाग्निना देवतयेति ब्रूयात् । देवान् ह यज्ञं तन्वानान्[1] असुररक्षांस्यभिचेरिरे, यज्ञपर्वणि यज्ञमेषां हनिष्यामस्तृतीयसवनं प्रति । तृतीयसवने ह यज्ञस्त्वरिष्ठो[2] बलिष्ठः, प्रतनुमेषां यज्ञं हनिष्याम इति । ते वरुणं दक्षिणतो ऽयोजयन्, मध्यतो बृहस्पतिम्, उत्तरतो विष्णुम् । ते ऽब्रुवन्—एकैकाः स्मः, नेदमुत्सहामह इति । स्तुतो द्वितीयो येनेदं सह व्यश्नवामहा इति । तानिन्द्रो ऽब्रवीत्—सर्वे मद्द्वितीया स्थेति । ते सर्वं इन्द्रद्वितीयाः[3] । तस्मादैन्द्रावारुणमैन्द्राबार्हस्पत्यमैन्द्रावैष्णवमनुशस्यते । द्वितीयवन्तो ह वा एतेन स्वा भवन्ति । द्वितीयवन्तो मन्यन्ते य एवं वेद[4] ।।६।।[5]

आग्नेयीषु मैत्रावरुणस्योक्थं प्रणयन्ति । वीर्यं वा अग्निः, वीर्येणै-

---

१. गा० सं० । 'तन्वाना' इति कोशेषु पाठः ।

२. पुणे-क-कोशे पाठः । '—रिष्टो' इति सन्दिग्धः पाठः कोशान्तरेषु ।

३. गा० सं० । 'इन्द्र' द्वि०' इति कोशेषु पाठः ।

४. 'य एवं वेद' इति पाठो दुरन्वयः ।

५. तु०—ऐ० ब्रा० ६।१३।।

वास्मै तत् प्रणयन्ति । ऐन्द्रावारुणमनुशस्यते । वीर्यं वा इन्द्रः, क्षत्रं वरुणः, पशव उक्थानि, वीर्येणैव तत् क्षत्रेण चोभयतः पशून् परिगृह्णाति, स्थित्यै, अनपक्रान्त्यै । ऐन्द्रीषु ब्राह्मणाच्छंसिन उक्थं प्रणयन्ति । वीर्यं वा इन्द्रः, वीर्येणैवास्मै तत् प्रणयन्ति । ऐन्द्राबार्हस्पत्यमनुशस्यते । वीर्यं वा इन्द्रः, ब्रह्म बृहस्पतिः, पशव उक्थानि, वीर्येणैव तद् ब्रह्मणा चोभयतः पशून् परिगृह्णाति, स्थित्यै, अनपक्रान्त्यै । ऐन्द्रीष्वच्छावाकस्योक्थं प्रणयन्ति । वीर्यं वा इन्द्रः, वीर्येणैवास्मै तत् प्रणयन्ति । ऐन्द्रावैष्णवमनुशस्यते । वीर्यं वा इन्द्रः, यज्ञो विष्णुः, पशव उक्थानि, वीर्येणैव तद् यज्ञेन चोभयतः पशून् परिगृह्य क्षत्रेऽन्ततः प्रतिष्ठापयति । तस्माद् क्षत्रियो[1] भूयिष्ठं[2] हि[3] पशूनामीशते । याधिष्ठाता[3] प्रदाता यस्मै प्रत्ता वेदा अवरुद्धाः । तान्येतान्यैन्द्राणि जागतानि शंसन्ति । अथा एतैरेव सेन्द्रं तृतीयसवनमेतैर्जागतं सवनम् । धराणि ह वा अस्यैतान्युक्थानि भवन्ति । यद् नाभानेदिष्ठो वालखिल्यो वृषाकपिरेवयामरुत् । तस्मात् तानि सार्धमेवोपेयुः । सार्धमिदं रेतः सिक्तं समृद्धमेकधा प्रजनयामेति । ये ह वा एतानि नानूपेयुः, यथा रेतः सिक्तं विलुम्पेत् कुमारं वा जातमङ्गशो विभजेत्, तादृक् तत् । तस्मात् तानि सार्धमेवोपेयुः । सार्धमिदं रेतः सिक्तं समृद्धमेकधा प्रजनयामेति । शिल्पानि शंसति देवशिल्पानि । एतेषां वै शिल्पानामनुकृतीह[4] शिल्पमधिगम्यते । हस्ती कंसो वासो हिरण्यमश्वतरीरथः शिल्पम् । शिल्पं हास्य समधिगम्यते य एवं वेद । यदेव शिल्पानि शंसति, तत् स्वर्गस्य लोकस्य रूपम् । यद् वेव शिल्पानि, आत्मसंस्कृतिर्वै शिल्पानि, आत्मानमेवास्य तत् संस्कुर्वन्ति ॥७॥[5]

---

१. 'क्षत्रिया' इति पाठोऽत्र साधीयान् स्यात् !

२. अनावश्यकं प्रतीयत एतत् !

३. 'योऽधिष्ठाता' इति पाठः साधीयान् स्यात् !

४. गा० सं० (ऐ० ब्रा० ६।२७) । 'अनुकृतिर्हि' इति कोशेषु पाठः ।

५. तु०—ऐ० ब्रा० ६।२७ ॥

नाभानेदिष्ठं शंसति। रेतो वै नाभानेदिष्ठः, रेत एवास्य तत् कल्पयति। तद् रेतोमिश्रं भवति। क्ष्मया रेतः संजग्मानो निषिञ्चद्[1] इति। रेतसः समृद्ध्या एव। तं सनाराशंसं शंसति। प्रजा वै नरः, वाक् शंसः, प्रजासु तद् वाचं दधाति। तस्मादिमाः प्रजा वदन्त्यो जायन्ते। तं हैके पुरस्तात् प्रगाथानां शंसन्ति पुरस्तादायतना वागिति वदन्तः, उपरिष्टादेक उपरिष्टादायतना वागिति वदन्तः। मध्य एव शंसेत्, मध्यायतना वा इयं वाक्, उपरिष्टाद् नेदीयसीव। तं होता रेतोभूतं शस्त्वा मैत्रावरुणाय संप्रयच्छति—एतस्य त्वं प्राणान् कल्पय[2] इति। वालखिल्याः शंसति। प्राणा वै वालखिल्याः, प्राणानेवास्य तत् कल्पयति। ता विहृताः शंसति। विहृता वै प्राणाः, प्राणेनापानः, अपानेन व्यानः। स पच्छः प्रथमे सूक्ते विहरति, अर्धर्चशो द्वितीये, ऋक्शः तृतीये। स यत् प्रथमे सूक्ते विहरति, वाचं चैव तद् मनश्च विहरति। यद् द्वितीये, चक्षुश्चैव तच्छ्रोत्रं च विहरति। यत् तृतीये, प्राणं चैव तदात्मानं च विहरति। तदुपाप्तो[3] विहरेत्[3] कामो,[3] नेतुर्वै[3] प्रगाथाः कल्पन्ते[4]। अतिमर्शमेव[5] विहरेत्। तथा वै प्रगाथाः कल्पन्ते। यदेवातिमर्शं तत् स्वर्गस्य लोकस्य रूपम्। यद् वेवातिमर्शम्, आत्मा वै बृहती, प्राणाः सतोबृहती। स बृहतीमशंसीत्, स आत्मा; अथ सतोबृहतीं, ते प्राणाः। अथ बृहतीम्, अथ सतोबृहतीं, तदात्मानं प्राणैः परिबृहन्नेति। यद् वेवातिमर्शम्, आत्मा वै बृहती, प्रजाः सतोबृहती। स बृहतीमशंसीत्, स आत्मा; अथ सतोबृहतीं, ते प्रजाः। अथ बृहतीम्, अथ सतोबृहतीं, तदात्मानं प्रजया परिबृहन्नेति। यद् वेवातिमर्शम्, आत्मा वै बृहती, पशवः सतोबृहती। स बृहतीमशंसीत्, स आत्मा, अथ

---

१. ऋ० १०।६१।७॥
२. गा० सं०। 'कल्पयति' इति कोशेषु पाठः।
३. भ्रष्टः पाठः! 'विहारे कामो नेत् तु वै' इति ऐ० ब्रा०' (६।२८) पाठः।
४. गा० सं०। 'कल्पयन्ते' 'कल्प्यन्ते' इति कोशेषु पाठौ।
५. „ „ । 'ऽतिमर्शं समेव' 'ऽतिमर्श समेव' इति कोशेषु पाठौ।

सतोबृहतीं, ते पशवः। अथ बृहतीम्, अथ सतोबृहतीं, तदात्मानं पशुभिः परिबृहन्नेति। तस्य मैत्रावरुणः प्राणान् कल्पयित्वा ब्राह्मणाच्छंसिने संप्रयच्छति—एतस्य त्वं प्रजनयेति। सुकीर्तिं शंसति। देवयोनिर्वै सुकीर्तिः। तद् यज्ञियायां देवयोन्यां यजमानं प्रजनयति। वृषाकपिं शंसति। आत्मा वै वृषाकपिः, आत्मानमेवास्य तत् कल्पयति। तं न्यूङ्खयति[1]। अन्नं वै न्यूङ्खः, अन्नाद्यमेवास्मै तत् संप्रयच्छति, यथा कुमाराय जाताय स्तनम्। स पाङ्क्तो भवति। पाङ्क्तो ह्ययं पुरुषः, पञ्चधा विहितः—लोमानि त्वगस्थि मज्जा मस्तिष्कम्। स यावानेव पुरुषस्तावन्तं यजमानं संस्कृत्याच्छावाकाय संप्रयच्छति—एतस्य त्वं प्रतिष्ठां कल्पयेति। एवयामरुतं शंसति। प्रतिष्ठा वा एवयामरुत्, प्रतिष्ठायामेवैनमन्ततः प्रतिष्ठापयति। याज्यया यजति। अन्नं वै याज्या, अन्नाद्यमेवास्मै तत् संप्रयच्छति ॥८॥[2]

तानि वा एतानि सहचराणीत्याचक्षते यद् नाभानेदिष्ठो वालखिल्यो वृषाकपिरेवयामरुत्। तानि सह वा शंसेत्,सह वा न शंसेत्। यदेषामन्तरीयात्, तद् यजमानस्यान्तरीयात्। यदि नाभानेदिष्ठं, रेतोऽस्यान्तरीयाद्; यदि वालखिल्याः, प्राणानस्यान्तरीयाद्; यदि वृषाकपिम्, आत्मानमस्यान्तरीयाद्; यद्येवयामरुतं, प्रतिष्ठा वा एवयामरुत् प्रतिष्ठाया एवैनं तं श्रावयेद् दैव्याश्च मानुष्याश्च। तानि सह वा शंसेत्, सह वा न शंसेत्। स ह बुडिल आश्विनरास्युर्विश्वजितो[3] होता सन्नीक्षां[4] चक्रे—एतेषां वा एषां शिल्पानां विश्वजिति सांवत्सरिके द्वे होतुरुक्थे माध्यंदिनमभिप्रच्यवेते, हन्ताहमित्थमेवयामरुतं शंसयानीति[5]। तद्ध तथा शंस्यां[6] चक्रे। तद्ध तथा

---

१. गा० सं०। तन्यूङ्खः इत्यन्नं' 'तन्यूखमित्यन्नं' इति कोशेषु पाठौ।

२. तु०—ऐ० ब्रा० ६।२७—३० ॥

३. सन्दिग्धः पाठः। 'बुलिल आश्वतर आश्विर्वैश्वजितो' इति ऐ० ब्रा० (६।३०)। श्रूयते। गास्ट्रस्तु 'बुडिल आश्वितराश्विर्विश्वजितो' इति पाठमत्र कल्पयामास।

४. गा० सं०। 'सं दीक्षां' इति कोशेषु पाठः।

५. „ „। 'शस्ययानीति' इति प्रायिकः पाठः।

६. „ „। 'शस्ययां' इति कोशेषु पाठः।

शस्यमाने गोश्ल आजगाम। स होवाच—होतः कथा ते शस्त्रं विचक्रं प्लवन इति ? किं ह्यभूदित्येवयामरुदयमुत्तरतः शस्यत इति ? स होवाच—ऐन्द्रो वै माध्यंदिनः, कथेन्द्रं माध्यंदिनाद् निनीषसीति[1] ? नेन्द्रं माध्यंदिनाद् निनीषामीति[2]—स होवाच। छन्दस्त्विदममाध्यंदिनं-साचि,[3] जागतं वातिजागतं वा, स उ मारुतः, मैवं संमृष्टेति। स होवाच—आरमाच्छावाकेति, अथास्मिन्ननुशासनमीषे। स होवाच—ऐन्द्रमेष विष्णुन्यङ्गानि शंसति, अथ त्वं होतः[4] उपरिष्टाद् रौद्रिया धाय्यायाः पुरस्ताद् मारुतस्य सूक्तस्याप्यस्यथा[5] इति। तथेति। तदप्येतर्हि तथैव शस्यते। यथा षष्ठे पृष्ठ्याहनि कल्पत एव यज्ञः, कल्पते यजमानस्य प्रजातिः; कथमत्राशस्त एव नाभानेदिष्ठो भवति, अथ वालखिल्याः शंसति, रेतो वा अग्रे ऽथ प्राणाः, ? एवं ब्राह्मणाच्छंस्यशस्त एव नाभानेदिष्ठो भवति, अथ वृषाकपिं शंसति, रेतो वा अग्रे ऽथात्मा, कथमत्र यजमानस्य प्रजातिः ? कथं प्राणा अवरुद्धा भवन्तीति ? यजमानं वा एतेन सर्वेण यज्ञक्रतुना संस्कुर्वन्ति। स यथा गर्भो योन्यामन्तरेव [प्राणानस्यान्तरियाद्, यदि वृषाकपिमात्मानमस्यान्तरियाद् यद्येव या][6] संभवञ्छेते। न ह वै सकृदेवाग्रे सर्वं संभवति, एकैकं वा अङ्गं संभवतः[7] संभवति। सर्वाणि चेत् समाने ऽहनि क्रियेरन् कल्पत एव यज्ञः, कल्पते यजमानस्य प्रजातिः। अथ हैवैवयामरुतं होता शंसेत्। तस्यास्य[8] प्रतिष्ठा, तस्यामेवैनमन्ततः[9] प्रतिष्ठापयति, प्रतिष्ठापयति ।।९।।[10]

---

१. गा० सं०। '—दिनान्यनीकसीति' इति कोशेषु पाठः।
२. ,, ,,। '—दिनान्यनीषामीति' इति प्रायिकः पाठः।
३. ,, ,,। '—त्विदमु माध्यंदिनं साति' इति कोशेषु पाठः।
४. ऐतरेयमनुसृत्य संशोधितः पाठः। 'होतुः' इति सार्वत्रिकः पाठः।
५. गा० सं०। '—प्यस्पध्म' 'प्यस्वधा' इति कोशेषु पाठौ।
६. कोष्ठान्तर्गतः पाठो रा० संस्करण ऐतरेयब्राह्मणे (६।३१) च नोपलभ्यते।
७. गा० सं०। 'संभवति' इति कोशेषु पाठः।
८. सन्दिग्धः पाठः ! 'तद् यास्य' इति ऐ० ब्रा० (६।३१) पाठः।
९. गा० सं०। 'तस्या एवै०' इति कोशेषु पाठः। १०. तु०—ऐ० ब्रा० ६।३०,३१।।

देवक्षेत्रं वै षष्ठमहः। देवक्षेत्रं वा एत आगच्छन्ति, ये षष्ठमहरागच्छन्ति। न वै देवा अन्यो ऽन्यस्य गृहे वसन्ति, नर्तुर्ऋतोर्गृहे[1] वसतीत्याहुः। तद् यथायथमृत्विज ऋतुयाजान् यजन्त्यसंप्रदायम्। तद् यदृतून् कल्पयन्ति यथायथं जनिता[2]। तदाहुः—नर्तुप्रैषैः[3] प्रेष्येयुर्नर्तुप्रैषैर्वषट्कुर्युः[4]। वाग् वा ऋतुप्रैषाः। आप्यते[5] वै वाक् षष्ठे ऽहनीति[6]। यदृतुप्रैषैः[3] प्रेष्येयुर्यदृतुप्रैषैर्वषट्कुर्युः,[4] वाचमेव तदाप्तां शान्तामृक्तवतीं[7] वहरावणीमृच्छेयुः,[7] अच्युताद् यज्ञस्य च्यवेरन्, यज्ञात् प्राणान् प्रजायाः[8] पशुभ्यो जिह्मा ईयुः[9]। तस्मादृग्मेभ्य एव प्रेषितव्यम्, ऋग्मेभ्यो ऽधि वषट्कृत्यम्। तद् न वाचमाप्तां शान्तामृक्तवतीं[7] वहरावणीमृच्छन्ति,[7] नाच्युताद् यज्ञस्य च्यवेरन्, न[10] यज्ञात् प्राणान् प्रजायाः[10] पशुभ्यो जिह्मा यन्ति। पारुच्छेपीरुपदधति द्वयोः सवनयोः पुरस्तात् प्रस्थितयाज्यानाम्। रोहितं वै नामैतच्छन्दो यत् पारुच्छेपम्। एतेन ह वा इन्द्रः सप्त स्वर्गां[11] ल्लोकानारोहत्। आरोहति सप्त स्वर्गां[11] ल्लोकान्[11] य एवं वेद। तदाहुः—यत् पञ्चपदा एव पञ्चमस्याह्नो रूपं षट्पदाः[12] षष्ठस्य, अथ कस्मात्

१. गा० सं०। पुणे-ककोशेऽपि तथा। 'नर्त्तु ऋतो गृहे' 'नर्त्तुर्तो गृहे' 'नर्त्तुर्तौ गृहे' इति कोशेषु पाठाः।

२. यथाकोशं पाठः! 'जनताः' इति ऐ० ब्रा० (५।६) श्रूयते।

३. गा० सं। '—प्रैषी' इति कोशेषु पाठः।

४. गा० सं०। '—प्रैषीर्व०' इति कोशेषु पाठः।

५. गा० सं०। 'आप्यायते' 'आथायते' इति कोशेषु पाठौ।

६. " "। पुणे कोशयोरपि तथा। 'ऽह्नीते' इति कोशेषु पाठः।

७. यथाकोशं पाठः! 'श्रान्तामृक्णावहीं वहराविणीमृच्छे०' इति ऐ० ब्रा०(५।६)पाठः।

८. भ्रष्टोऽयं पाठः प्रतीयते! 'प्रजापतेः' इति ऐ० ब्रा० पाठः।

९. गा० सं०। 'येयुः' इति कोशेषु पाठः।

१०. 'न' इति पदं कोशेषु नोपलभ्यते।

११. गा० सं०। 'लोकाद्' इति कोशेषु पाठः।

१२. " "। 'षट्पदात्' " " "।

सप्तपदाः[1] षष्ठे ऽहनि शस्यन्त इति ? षड्भिरेव पदैः षष्ठमहरवाप्नुवन्त्यवछिद्यैवैतदहर्यत् सप्तमम्। तदेव सप्तमेन पदेनाभ्यारुह्य वसन्ति। संततैस्त्र्यहैरव्यवछिन्नैर्यन्ति, य एवं विद्वांस उपयन्ति ॥१०॥[2]

देवासुरा वा एषु लोकेषु समयतन्त। ते वै देवाः षष्ठेनाह्नैभ्यो लोकेभ्यो ऽसुरान् परागुदन्त। तेषां यान्यन्तर्हस्तानि[3] वसून्यासन्, तान्यादाय[4] समुद्रं प्रारूप्यन्त[5]। तेषां वै देवा अनुहायैतेनैव छन्दसान्तर्हस्तानि वसून्याददत। तदेवैतत् पदं पुनःपदम्। स एवाङ्कुश[6] आकुञ्चनाय। आ द्विषतो वसु दत्ते, निरेवैनमेभ्यः सर्वेभ्यो लोकेभ्यो नुदते, य एवं वेद। द्यौर्वै देवता षष्ठमहर्वहति, त्रयस्त्रिंश स्तोमः, रैवतं साम, अतिच्छन्दश्छन्दः। यथादेवतमेनेन यथास्तोमं यथासाम यथाछन्दसमृध्नोति य एवं वेद। यद् वै समानोदर्कं तत् षष्ठस्याह्नो रूपम्। यद्येव प्रथममहस्तदुत्तममहः। तदेवैतत् पदं पुनर्यत् षष्ठम्। यदश्ववद् यद् रथवद् यत् पुनरावृत्तं यत् पुनर्निवृत्तं यदन्तरूपं यदसौ लोको ऽभ्युदितो यद् नाभानेदिष्ठं यत् पारुच्छेपं यद् नाराशंसं यद् द्वैपदा यत् सप्तपदा यत् कृतं यद् रैवतं तत् तृतीयस्याह्नो रूपम्—एतानि वै षष्ठस्याह्नो रूपाणि। छन्दसामु ह षष्ठेनाह्नाक्तानां रसो ऽत्यनेदत्। तं प्रजापतिरुदानाद् नाराशंस्या गायत्र्या रैभ्या त्रिष्टुभा परिक्षित्या जगत्या गाथयानुष्टुभा[7]। एतानि वै छन्दांसि षष्ठे ऽहनि शस्तानि भवन्त्ययातयामानि। छन्दसामेव तत् सरसताया अयातयामतायै। सरसाणि ह्यस्य छन्दांसि षष्ठे ऽहनि

१. गा० सं०। 'सप्तपदात्' इति कोशेषु पाठः।
२. तु०—ऐ० ब्रा० ५।९,१०॥
३. 'अन्तर्हस्तीनानि' इति ऐ० ब्रा० (५।११) पाठः।
४. गा० सं०। '—दायन्त्' इति कोशेषु पाठः।
५. भ्रष्टः पाठः! 'प्रौप्यन्त' इति ऐ० ब्रा० (५।११) पाठः।
६. गा० सं०। 'वाङ्कश' इति कोशेषु पाठः।
७. गा० सं०। 'गाथाया' इति कोशेषु पाठः।

शस्तानि भवन्ति । सरसैश्छन्दोभिरिष्टं भवति, सरसैश्छन्दोभिर्यज्ञं तनुते य एवं वेद ।।११।।[1]

अथ यद् द्वैपदौ स्तोत्रियानुरूपौ भवतः—इमा नु कं भुवना सीषधाम[2] इति । द्विपाद् वै पुरुषः । द्विप्रतिष्ठः पुरुषः । पुरुषो वै यज्ञः । तस्माद् द्वैपदौ स्तोत्रियानुरूपौ भवतः । अथ सुकीर्तिं शंसति—अपेन्द्र प्राचो मघवन्न मित्रान्[3] इति । देवयोनिर्वै सुकीर्तिः । स य एवमेतां देवयोन्यां सुकीर्तिं वेद, कीर्तिं प्रतिष्ठापयति भूतानाम्, कीर्तिमान् स्वर्गे लोके प्रतितिष्ठति । प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद । अथ वृषाकपिं शंसति—वि हि सोतोरसृक्षत[4] इति । आदित्यो वै वृषाकपिः । तद् यत् कम्पयमानो रेतो वर्षति, तस्माद् वृषाकपिः । तद् वृषाकपेर्वृषाकपित्वम् । वृषाकपिरिव वै स सर्वेषु लोकेषु भाति य एवं वेद । तस्य तृतीयेषु पादेष्वाद्यन्तयोर्न्यूङ्खनिनर्दान् करोति । अन्नं वै न्यूङ्खः, बलं निनर्दः, अन्नाद्यमेवास्मै तद् बले निदधाति । अथ कुन्तापं शंसति कुय[5] ह वै नाम कुत्सितं भवति, तद् यत् तपति, तस्मात् कुन्तापाः । तत् कुन्तापानां कुन्तापत्वम् । तप्यन्ते ऽस्मै कुयानिति[5] तप्तकुयः[5] स्वर्गे लोके प्रतितिष्ठति । प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद । तस्य चतुर्दश प्रथमा भवन्ति—इदं जना उप श्रुत[6] इति । ताः प्रग्राहं शंसति यथा वृषाकपिम् । वार्षरूपं[7] हि । वृषाकपेस्तद्[8] न्यायमेत्येव । अथ रैभीः शंसति—

---

१. तु०—ऐ० ब्रा० ५।११, १२; ६।३२।।
२. अथर्व० (शौ० सं०) २०।६३।१।। ऋ० १०।१५७।१ ।।
३. अथर्व० (पै० सं०) १६।१६।८ ।। अथर्व० (शौ० सं०) २०।१२५।१ ।।
४. अथर्व० (शौ० सं०) २०।१२६।१ ।। ऋ० १०।८६।१ ।।
५. 'कुय' इति सन्दिग्धम् !
६. अथर्व० (शौ० सं०) २०।१२७।१ ।।
७. गा० सं० । 'वार्षरूपं' इति कोशेषु पाठः । 'वार्षाकपं' इति ऐ० ब्रा० (६।३२) पाठः ।
८. ,, ,, । 'वृषाकपेस्तन्याय०' इति कोशेषु पाठः ।

वच्यस्व रेभवच्यस्व[1] इति । रेभन्तो वै देवाश्चर्षयश्च स्वर्गं लोकमायन्, तथैवैतद् यजमाना रेभन्त एव स्वर्गं लोकं यन्ति । ताः प्रग्राहमेत्येव । अथ पारिक्षितीः[2] शंसति–राज्ञो विश्वजनीनस्य[3] इति । संवत्सरो वै परिक्षित्, संवत्सरो हीदं सर्वं परिक्षियतीति । अथो खल्वाहुः–अग्निर्वै परिक्षिद्, अग्निर्हीदं सर्वं परिक्षियतीति । अथो खल्वाहुः–गाथा एवैताः कारव्या राज्ञः परिक्षित इति, स नस्तद् यथा कुर्यात् । गाथा एवैताः शस्ता भवन्ति । यद्यु वै गाथा अग्नेरेव गाथाः संवत्सरस्य वेति ब्रूयात् । यद्यु वै मन्त्रो ऽग्नेरेव[4] मन्त्रः संवत्सरस्य वेति ब्रूयात् । ताः प्रग्राहमित्येव[5] । अथ कारव्याः शंसति–इन्द्रः कारुमबूबुधद्[6] इति । यदेव देवाः कल्याणं कर्माकुर्वन्,[7] तत् कारव्याभिरवाप्नुवन् । तथैवैतद् यजमाना यदेव देवाः कल्याणं कर्म कुर्वन्ति तत् कारव्याभिरवाप्नुवन्ति । ताः प्रग्राहमित्येव । अथ दिशां क्लृप्तीः पूर्वं शस्त्वा—यः सभेयो विदथ्यः[8] इति जनकल्पा उत्तराः शंसति—यो ऽनाक्ताक्षो अनभ्यक्तः[9] इति । ऋतवो वै दिशः प्रजननः । तद् यद् दिशां क्लृप्तीः पूर्वं शस्त्वा – यः सभेयो विदथ्यः[8] इति जनकल्पा उत्तराः शंसति, ऋतूनेव तत् कल्पयति । ऋतुषु प्रतिष्ठापयति । प्रतिष्ठन्तीरिदं सर्वमनुप्रतितिष्ठति । प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद । ता अर्धर्चशः शंसति, प्रतिष्ठित्या एव । अथेन्द्रगाथाः शंसति–यदिन्द्रादो दाशराज्ञे[10]

१. अथर्व० (शौ० सं०) २०।१२७।४ ॥
२. गास्ट्रविहितः 'पारिक्षिताः' इति शोधस्तु न समीचीनः प्रतीयते !
३. अथर्व० (शौ० सं०) २०।१२७।७॥
४. 'ऽग्निरेव' इति गा० पाठः ।
५. 'प्रग्राहमंत्येव' इति गा० पाठः ।
६. अथर्व० (शौ० सं०) २०।१२७।११॥
७. गा० सं० । 'कर्म कुर्वन्' इति कोशेषु पाठः ।
८. अथर्व० (शौ० सं०) २०।१२८।१॥
९. „ „ „ २०।१२८।६॥
१०. „ „ „ २०।१२८।१२॥

इति । इन्द्रगाथाभिर्हं वै देवा असुरानागायाथैनानत्यायन् । तथैवैतद् यजमाना इन्द्रगाथाभिरेवाप्रियं भ्रातृव्यमागायाथैनमतियन्ति । ता अर्धर्चशः शंसति, प्रतिष्ठित्या एव ॥१२॥[1]

अथैतशप्रलापं शंसति—एता अश्वा आप्लवन्ते[2] इति । ऐतशो ह मुनिर्यज्ञस्यायुर्ददर्श । स ह पुत्रानुवाच—पुत्रका यज्ञस्यायुरदर्शम्,[3] तदभिलपिष्यामि, मा मा दृप्तं मन्यध्वमिति । तथेति । तदभिललाप । तस्य ह्वाभ्यग्निरैतशायनो[4] ज्येष्ठः पुत्रो ऽभिद्रुत्य[5] मुखमपिजग्राह ब्रुवन् दृप्तो नः पितेति । स होवाच—धिक् त्वा जाल्मापरस्य पापिष्ठां ते प्रजां करिष्यामीति, यो मे मुखं प्राग्रहीः;[6] यदि जाल्म मुखं न प्राग्रहीष्यः, शतायुषं गामकरिष्यं सहस्रायुषं पुरुषमिति । तस्मादभ्यग्नय ऐतशायना आजानेयाः सन्तः पापिष्ठा अन्येषां[7] बलिहृतः गितायच्छन्ताः[8] स्वेन प्रजापतिना स्वया देवतया । यदैतशप्रलापः, तत् स्वर्गस्य लोकस्य रूपम् । यद् वेवैतशप्रलापो ऽयातयामा वा[9] अक्षितिः[9] ऐतशैतशप्रलापः[10] । अयातयामा मे यज्ञो ऽसदक्षितिर्मे यज्ञो ऽसदिति । तं वा ऐतशैतशप्रलापं[10] शंसति पदावग्राहम् । तासामुत्तमेन पदेन प्रणौति[11] यथा निविदः । अथ प्रव-

---

१. तु०—ऐ० ब्रा० ५।१६; ६।२६;६।३२॥

२. अथर्व० (शौ० सं०) २०।१२९।१ ॥

३. ऐतरेय (६।३३) कौषीतकि (३०।५) ब्राह्मणयोः पाठमनुसृत्य संशोधितः पाठः । 'अभिददर्शं' इति गा० पाठः । 'अददृश्यं' 'अददृक्षं' इति कोशेषु पाठौ ।

४. गा० सं० । 'ह् इत्यग्नि०' 'हत्यग्नि' इति कोशेषु पाठौ ।

५. „ „ । 'ऽभिदुदृत्या' 'ऽतिदुदत्य' „ „ „ ।

६. „ „ । 'प्राग्रहीस्यो' „ „ पाठः ।

७. „ „ । 'मन्येषां' „ „ „ ।

८. सन्दिग्धः पाठः ! 'पित्रा यच्छप्ताः' इति पाठोऽत्र सम्भाव्यते गास्ट्रेण (तु०–कौषी० ब्रा० ३०।५) ।

९. गा० सं० । 'वाक्षितिः' इति कोशेषु पाठः ।

१०. यथाकोशं पाठः ! ऐतशप्रलाप' इत्यंतशपदावृत्तिरहितः पाठ ऐतरेयब्राह्मणे (६।३३) श्रूयते ।

११. पुणे क-कोश-रा० पाठः । 'प्राणौति' इति गास्ट्रसंस्करणे पाठः ।

ल्हिकाः पूर्वं शस्त्वा—विततौ किरणौ द्वौ[1] इति, प्रतिराधानुत्तरान् शंसति—भुगित्यभिगतः[2] इति। प्रवल्हिकाभिर्ह वै देवा असुराणां रसान् प्रववृहुः। तद् यथाभिर्ह वै देवा असुराणां रसान् प्रववृहुः, तस्मात् प्रवल्हिकाः। तत् प्रवल्हिकानां प्रवल्हिकात्वम्। ता वै प्रतिराधैः प्रत्यराध्नुवन्। तद् यत् प्रतिराधैः प्रत्यराध्नुवन्, तस्मात् प्रतिराधाः। तत् प्रतिराधानां प्रतिराधत्वम्। प्रवल्हिकाभिरेव द्विषतां भ्रातृव्याणां रसान् प्रवल्हिकास्ता[3] वै[3] प्रतिराधैः प्रतिराध्नुवन्ति। ताः प्रग्राहमित्येव। अथाजिज्ञासेन्याः शंसति—इहेत्थ प्रागपागुदगधराग्[4] इति। आजिज्ञासेन्याभिर्ह वै देवा असुरानाज्ञायाथैनानत्यायन्। तथैवैतद् यजमाना आजिज्ञासेन्याभिरेवाप्रियं[5] भ्रातृव्यमाज्ञायाथैनमतियन्ति[6]। ता अर्धर्चशः शंसति, प्रतिष्ठित्या एव। अथातिवादं शंसति—वीमे देवा अक्रंसत[7] इति। श्रीर्वा अतिवादः। तमेकर्चं शंसति। एकस्ता वै श्रीः। तां वै विरेभं शंसति। विरेभैः[8] श्रियं पुरुषो वहतीति। तामर्धर्चशः शंसति, प्रतिष्ठित्या एव ॥१३॥[9]

अथादित्याश्चाङ्गिरसीश्च शंसति—आदित्या ह जरितरङ्गिरोभ्यो दक्षिणामनयन्[10] इति। तद् देवनीथमित्याचक्षते। आदित्याश्च ह वा अङ्गिरसश्च[11] स्वर्गे लोकेऽस्पर्धन्त—वयं पूर्वे स्वरेष्यामो वयं पूर्व इति। ते हाङ्गिरसः

१. अथर्व (शौ० सं०) २०।१३३।१ ॥
२. अथर्व (शौ० सं०) २०।१३५।१ ॥
३. सन्दिग्धः पाठः। 'प्रवल्हयाथैनं' इति पाठमत्र गास्ट्रः कल्पयति।
४. अथर्व० (शौ० सं०) २०।१३४।१—६ ॥
५. गा० सं०। 'अजिज्ञा०' इति कोशेषु पाठः।
६. ,, ,,। 'भ्रातृव्यमागाया०' इति कोशेषु पाठः।
७. अथर्व० (शौ० सं०) २०।१३५।४॥
८. सन्दिग्धम् ॥
९. तु०—ऐ० ब्रा० ६।३३ ॥ कौषी० ब्रा० ३०।५,७॥
१०. अथर्व० (शौ० सं०) २०।१३५।६॥
११. गा० सं०। 'आङ्गिरसश्च' इति कोशेषु पाठः।

श्वःसुत्यां ददृशुः । ते हाग्निमूचुः[1]—परेह्यादित्येभ्यः श्वःसुत्यां प्रब्रूहीति । अथादित्या अद्यसुत्यां ददृशुः । ते हाग्निमूचुः—अद्यसुत्याऽस्माकम्,तेषां नस्त्वं होतासोत्युपेमस्त्वामिति[2] । स एत्याग्निरुवाच—अथादित्या अद्यसुत्यामीक्षन्ते, कं वो होतारमवोचन् वाह्वयन्ते युष्माकं वयमिति । ते हाङ्गिरसश्चुक्रुधुः[3]—मा त्वं गमो नु वयमिति । नेति हाग्निरुवाचानिन्द्या वै माह्वयन्ते । किल्बिषं हि तद् यो ऽनिन्द्यस्य हवं नैति[4] । तस्माददतिदूरमत्यल्पमिति[5] यजमानस्य हवमियादेव । किल्बिषं हि तद् यो ऽनिन्द्यस्य हवं नैति[6] । तान् हादित्यानङ्गिरसो याजयां चक्रुः । तेभ्यो हीमां पृथिवीं दक्षिणां निन्युः । तां[7] ह न प्रतिजगृहुः । सा हीयं निवृत्तोभयतः—शीर्ष्णी[8] दक्षिणाः शुचा विद्धाः शोचमाना व्यचरत् कुपिता—मां[9] न प्रत्यग्रहीषुरिति । तस्या एते निरदीर्यन्त य एते प्रदरा अधिगम्यन्ते । तस्माद् निवृत्तदक्षिणां नोपाकुर्याद्, नैनां प्रमृजेद्, नेद् दक्षिणां प्रमृणजानीति । तस्माद् य एवास्य समानजन्मा भ्रातृव्यः स्याद् वृणहूयुस्तस्मा[10] एनां दद्यात् । तद् न पराची दक्षिणा विवृणक्ति । द्विषति भ्रातृव्ये ऽन्ततः शुचं[11] प्रतिष्ठापयति यो[12] ऽसौ[12] तपति[12] । स वै शंसति—आदित्या ह जरि-

---

१. गा० सं० । 'हाग्निरमूचुः पुरे०' इति कोशेषु पाठः ।
२. „ „ । 'होतासीं दुपेम०' 'होतासीदुपेम०' इति कोशेषु पाठौ ।
३. „ „ । '—चक्रुधुः' इति कोशेषु पाठः ।
४. „ „ । 'न इति' „ „ „ ।
५. „ „ । '—मतल्पमिति' '—मत्तलमिति' इति कोशेषु पाठौ ।
६. „ „ । 'हवत्वेति' इति कोशेषु पाठः ।
७. „ „ । 'तं' „ „ „ ।
८. „ „ । '—शीष्णी' „ „ „ ।
९. „ „ । 'मा नः प्रतिगृहीषुरिति । तस्मा एतानि निरदीर्यन्ते य एते प्रतरा' इति कोशेषु पाठः ।
१०. 'वृणहूयुः' इत्यस्य स्थाने 'वर्जनीयः' इति पाठः स्यादिति गास्त्रः ।
११. गा० सं० । 'स्रुचं' इति कोशेषु पाठः ।
१२. प्रक्षिप्तम् ।

तरङ्गिरोभ्यो दक्षिणामनयन्[1],तां ह जरितः प्रत्यायन्[2] इति। न हीमां पृथिवीं प्रत्यायन। तामु ह जरितः प्रत्यायन्[3] इति। प्रति हि ते ऽमुमायन्[4]। तां ह जरितर्नः प्रत्यगृभ्णन्[4] इति। न हीमां पृथिवीं प्रत्यगृभ्णन्। तामु ह जरितर्नः प्रत्यगृभ्णन्[4] इति। प्रगृह्यादित्यमगृभ्णन्। अहानेतरसं न वि चेतनानि[5] इति। एष ह वा अह्नां विचेता यो ऽसौ तपति। स वै शंसति—यज्ञा नेतरसं न पुरोगवासः[5] इति। एषा[6] ह वै यज्ञस्य पुरोगवी यद् दक्षिणा। यथांर्हमिः[7] स्रस्तमतिरेतदन्त्येतेष एवेश्वर उन्नेता।

उत श्वेत आशुपत्वा उत पद्याभिर्यविष्ठः।
उतेमाशु मानं पिपर्त्ति ॥[8] इति।

एष एव श्वेत एष शिशुपत्यैष[9]। उत पद्याभिर्यविष्ठः, उतेमाशु मानं पिपर्त्ति[8] इति।

आदित्या रुद्रा वसवस्तेनुत इदं राधः प्रतिगृभ्णीह्यङ्गिरः।
इदं राधो विभु प्रभु इदं राधो बृहत् पृथु ॥[10]

देवा ददत्वासुरं तद् वो अस्तु सुचेतनम्।
युष्माँ अस्तु दिवे दिवे प्रत्येव गृभायत ॥[11] इति।

---

१. अथर्व० (शौ० सं०) २०।१३५।६ ॥
२. गा० सं०। 'तेषु मायन्' इति कोशेषु पाठः।
३. अथर्व० (शौ० सं०) २०।१३५।७ ॥
४. अथर्व० (शौ० सं०) २०।१३५।७॥ 'प्रत्यगृभ्णः' इति पाठः।
५. " " "। 'पुरोगवामः' इति पाठः।
६. गा० सं०। 'एष' इति कोशेषु पाठः।
७. अस्फुटम्!
८. अथर्व० (शौ० सं०) २०।१३५।८॥ 'उतो पद्या०' इति पाठः।
९. 'आशुपत्वैष' इति पाठोऽत्र साधीयान् स्यात्।
१०. अथर्व० (शौ० सं०) २०।१३५।९॥ 'वसवस्त्वेनु त' इति पाठः।
११. " " २०।१३५।१०॥

तद् यदादित्याश्चाङ्गिरसीश्च शंसति स्वर्गताया एवैतत् । अहरहः शंसति यथा निविदः । अथ भूतेच्छदः[1] शंसति—त्वमिन्द्र शर्म रिणा[2] इति । इमे वै लोका भूतेच्छदः[1] । असुरान् ह वै देवा अन्नं सेचिरे[3] भूतेन भूतेन जिघांसन्तस्तितीर्षमाणाः। तानिमे देवाः सर्वेभ्यो भूतेभ्यो ऽच्छादयन् । तद् यदेतानिमे देवाः सर्वेभ्यो भूतेभ्यो ऽच्छादयन् तस्माद् भूतेच्छदः[1] । तद् भूतेच्छदां[1] भूतेच्छत्त्वम्[4] । छादयन्ति ह वापरमिमे[5] लोकाः । सर्वेभ्यो भूतेभ्यो निरघ्नन् । सर्वेभ्यो भूतेभ्यश्छन्दते[6] य एवं वेद ।।१४।।[7]

अथाहनस्याः शंसति—यदस्या अंहुभेद्याः[8] इति । आहनस्याद् वा इदं सर्वं प्रजातम् । आहनस्याद् वा एतदधिप्रजायते । अस्यैव सर्वस्याप्त्यै, प्रजात्यै । ता वै षट् शंसेत् । षड् वा ऋतवः । ऋतवः पितरः । पितरः प्रजापतिः । प्रजापतिराहनस्याः । ता दश शंसेदिति शांभव्यस्य वचः । दशाक्षरा विराट् । वैराजो यज्ञः । तं गर्भा उपजीवन्ति । श्रीर्वै विराड्, यशो ऽन्नाद्यम् । श्रियमेव तद् विराजं यशस्यन्नाद्ये प्रतिष्ठापयति । प्रतितिष्ठन्तीरिदं[9] सर्वमनुप्रतितिष्ठति । प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद । तिस्रः शंसेदिति वात्स्यः । त्रिवृद् वै रेतः सिक्तं सभवत्याण्डमुल्वं[10] जरायु । त्रिवृत् प्रत्ययं माता पिता यज्जायते

१. गा० सं० । 'भूतेछन्दः' इति कोशेषु पाठः ।

२. अथर्व० (शौ० सं०) २०।१३५।११ ।।

३. अयं पाठो भ्रष्टः प्रतीयते !

४. संशोधितः पाठः । 'भूतेछदत्वम्' इति गा० सं० । 'भूतेछन्दत्वं' इति कोशेषु पाठः ।

५. 'वा अपर०' इति पाठः साधीयाम् स्यात् !

६. 'भूतेभ्यो छन्दते' इति सार्वत्रिकः पाटः ।

७. तु०—ऐ० ब्रा० ६।३४—३६ ।।

८. अथर्व० (शौ० सं०) २०।१३६।१ ।।

९. गा० सं० । 'प्रतिष्ठ०' इति कोशेषु पाठः ।

१०. गा० सं० । '—मल्पं' '—मल्बं' इति कोशेषु पाठौ ।

तत् तृतीयम् । अभूतोद्यम्[१] एवैतद् यच्चतुर्थीं शंसेत् । सर्वा एव षोडश शंसेदिति हैके । कामार्तौ वै रेतः सिञ्चति । रेतसः सिक्तात्[२] प्रजाः प्रजायन्ते । प्रजानां प्रजननाय । प्रजावान् प्रजनयिष्णुर्भवति, प्रजात्यै[३] प्रजायते प्रजया पशुभिर्य एवं वेद ॥१५॥[४]

अथ दाधिक्रीं शंसति—दधिक्राव्णो अकारिषम्[५] इति । तत उत्तराः पावमानीः शंसति—सुतासो मधुमत्तमाः[६] इति । अन्नं वै दधिक्री[७] । पवित्रं पावमान्यः । तदु हैके पावमानीभिरेव पूर्वं शस्त्वा तत उत्तरा दाधिक्रीं शंसन्ति,[८] इयं वागन्नाद्या[९] यः पवत इति वदन्तः । तदु तथा न कुर्याद्, उपनश्यति ह वागशनायती । स दाधिक्रीमेव पूर्वं शस्त्वा तत उत्तराः पावमानीः शंसति । तद् यद् दाधिक्रीं शंसति, इयं वागाहनस्यां वाचमवादीत् । तद् देवपवित्रेणैव वाचं पुनीते । सा वा अनुष्टुब् भवति । वाग् वा अनुष्टुप् । तत् स्वेनैव छन्दसा वाचं पुनीते । तामर्धर्चशः शंसति,प्रतिष्ठित्या एव । अथ पावमानीः शंसति । पवित्रं वै पावमान्यः । इयं वागाहनस्यां वाचमवादीत् । तत् पावमानीभिरेव वाचं पुनीते । ताः सर्वा अनुष्टुभो भवन्ति । वाग् वा अनुष्टुप् । तत् स्वेनैव छन्दसा वाचं पुनीते । ता अर्धर्चशः शंसति, प्रतिष्ठित्या एव । अव द्रप्सो अंशुमती-मतिष्ठद्[१०] इत्येतं तृचमैन्द्राबार्हस्पत्यं सूक्तं शंसति । अथ हैतदुत्सृष्टम् ।

१. एतत्पदसाधुत्वं सन्देग्धि गास्त्रः !
२. गा० सं० । 'सिक्ताः' इति कोशेषु पाठः ।
३. अनावश्यकः पाठः !
४. तु०—ऐ० ब्रा० ६।३६ ॥
५. अथर्व० (शौ० सं०) २०।१३७।३ ॥ ऋ० ४।३९।६॥
६. अथर्व० (शौ० सं०) २०।१३७।४ ॥ ऋ० ९।१०१।४॥
७. गा० सं० । दधिक्रा' इति कोशेषु पाठः ।
८. गा० सं० । 'शंसति' इति कोशेषु पाठः ।
९. भ्रष्टः पाठः !
१०. अथर्व० (शौ० सं०) २०।१३७।७ ॥ ऋ० ८।९६।१३ ॥

तद् यदेतं तृचमैन्द्राबार्हस्पत्यमन्त्यं तृचमैन्द्राजागतं शंसति, सवनधारणमिदं गुल्मह[1] इति वदन्तः । तदु तथा न कुर्यात् । त्रिष्टुबायतना[2] वा इयं वागेषां होत्रकाणां यदैन्द्राबार्हस्पत्या तृतीयसवने । तद् यदेतं तृचमैन्द्राबार्हस्पत्यमन्त्यं तृचमैन्द्राजागतं शंसति, स्व एवैनं तदायतने प्रीणाति स्वयोर्देवतयोः । कामं नित्यमेव परिदध्यात्, कामं तृचस्योत्तमया । तदाहुः—संशंसेत् षष्ठे ऽहनि न संशंसेत् । कथमन्येष्वहःसु संशंसति ? कथमत्र न संशंसतीति ? अथो खल्वाहुः—नैव संशंसेत् । स्वर्गो वै लोकः[3] षष्ठमहः । असमायी[4] वै स्वर्गो लोकः । कश्चिद् वै स्वर्गे लोके शमयतीति[5] । तस्माद् न संशंसति । यदेव न संशंसति, तत् स्वर्गस्य लोकस्य रूपम् । यद् वेवैनाः संशंसति, यद् नाभानेदिष्ठो वालखिल्यो वृषाकपिरेवयामरुदेतानि वा अत्रोक्थानि भवन्ति, तस्माद् न संशंसति । ऐन्द्रो वृषाकपिः । सर्वाणि छन्दांस्यैतशप्रलापः । उपाप्तो यदैन्द्राबार्हस्पत्या तृतीयसवने, तद् यदेतं तृचमैन्द्राबार्हस्पत्यं सूक्तं शंसति, ऐन्द्राबार्हस्पत्या परिधानीया—विशो अदेवीरभ्याचरन्तीः[6] इति । अपरजना ह वै विशो देवीर्न ह्यस्यापरजनं भयं भवति । शान्ताः प्रजाः क्लृप्ताः सहन्ते, यत्रैवंविदं शंसति । यत्रैवंविदं शंसतीति ब्राह्मणम् ॥१६॥[7]

॥ इत्यथर्ववेदे गोपथब्राह्मणोत्तरभागे षष्ठः प्रपाठकः ॥

॥ इत्यथर्ववेदब्राह्मणपूर्वोत्तरं समाप्तम् ॥

---

१. भ्रष्टः पाटः !
२. गा० सं० । 'त्रिष्टुभायतना' इति कोशेषु पाठः।
३. ,, ,, । 'लोकाः' इति कोशेषु पाठः।
४. ,, ,, । 'असमाये' 'असमायै' इति कोशेषु पाटः ।
५. 'समेतीति' इत्यैतरेयी श्रुतिः (६ ३६) ।
६. अथर्व० (शौ० सं०) २० १३७ ६ ॥ ऋ० ८ ९६.१५ ॥
७. तु०—ऐ० ब्रा० ६.३६ ॥

# गोपथब्राह्मण उद्धृतानां वैदिक-सन्दर्भाणाम्

## अनुक्रमः

[अस्मिन्ननुक्रमे क्रमशो भाग-प्रपाठक-कण्डिकानां संख्या निर्दिश्यन्ते। तत्र पूर्वभागः '१' अङ्केन, उत्तरभागश्च '२' अङ्केन सङ्केत्यते। पृष्ठ-पङ्क्त्योः संख्ये कोष्ठस्थाङ्काभ्यां निर्दिश्येते।]

# शोधन-पत्रम्

| अशुद्धम् | शुद्धम् | पृष्ट-पङ्क्ती | | अशुद्धम् | शुद्धम् | पृष्ट-पङ्क्ती | |
|---|---|---|---|---|---|---|---|
| ओमित्येव् | ओमित्येतद् | १० | १८ | आद्य | आद्यं | ८७ | १३ |
| व्याहृति | व्याहृतिं | ११ | ६ | श्रेयंसीं | श्रेयसीं | ८७ | २० |
| व्यायामि | व्ययायि | १२ | २४ | ब्रह्मणस्यों | ब्राह्मणस्यों | ८८ | २० |
| वय | वयं | १५ | १० | बृहस्पतिर्ब्रह्म | बृहस्पतिर्ब्रह्मा | ९१ | ४ |
| ऋगनादि० | ऋगयनादि० | १५ | २४ | सद्भ्यः | सद्भ्यः | ९५ | ९ |
| किं स्विका० | किं स्विदा० | १८ | ६ | ऋघ्नोत्येव | ऋघ्नोत्येव | ९७ | ९ |
| वागभिपन्ना | वागभिपन्ना | २० | २० | इति' इति | इति | ९७ | २२ |
| त्वोपस्तृणमीति | त्वोपस्तृणामीति | २१ | ११ | पौर्णमास्ं याँ | पौर्णमास्यां | १०० | १ |
| मृत्युं | मृत्यु | २४ | १३ | फ लगुन्यौ | फाल्गुन्यौ | १०० | ३ |
| आचार्यो | आचार्यो | २६ | ६ | अप्याययास्मान् | आप्याययास्मान् | १०८ | ५ |
| यथाकोशापाठस्तु | यथाकोशपाठस्तु | २६ | २१ | धर्मस्त च्छिश्नं | घर्मस्तच्छिश्नं | ११० | ४ |
| गास्त्रसंशोधिस्तु | गास्त्रसंशोधितस्तु | २६ | २६ | निरघ्नन् | रिरघ्नन् | ११० | १९ |
| वेद | वेदः | २९ | १४ | लकेभ्यो | लोकेभ्यो | १११ | ७ |
| चक्षर्देव | चक्षुर्देव | ३१ | ४ | क्षेत्रपति | क्षेत्रपतिः | १११ | १४ |
| क्कचिद् | क्वचिद् | ३२ | ६ | इति' इति | इति | ११२ | २७ |
| ०दनमचत् | ०दनमपचत् | ३२ | १२ | ऋघ्यते | ऋध्यते | ११३ | ३ |
| पाठः | पाठाः | ३७ | २५ | अमिव | अमेव | १२१ | १ |
| देवानगच्छत् | देवानागच्छत् | ३८ | १ | पूर्वेद्यर्देवताः | पूर्वेद्युर्देवताः | १२१ | १६ |
| हवि परं | हविरपरं | ३९ | १० | वृषंणं | वृषणं | १३८ | १ |
| ०गातारारमथ० | ०गातरमथ० | ४० | १७ | ऐवं | एवं | १३८ | ६ |
| पशुभियँ | पशुभियँ | ४० | १९ | अहवैँ | अहवैँ | १४९ | १ |
| ०त्यथर्वणां | ०त्यथर्वणां | ४१ | १५ | संदधाति | संदधति | १५१ | १८ |
| ओं श्रावयेति | ओ श्रावयेति | ४९ | ९ | ०माग्नीध्रीय | ०माग्नीध्रीयं | १५२ | १९ |
| गर्भंभूतो | गर्भंभूतो | ५६ | १६ | विश्वमित्रः | विश्वामित्रः | १६० | ७ |
| ०कथाचदिभिभाषेत | ०कथाचिदभिभाषेत | ५८ | ४ | पठों | पाठौ | १६२ | २५ |
| पुनर्मृत्युम् | पुनर्मृत्युम् | ५८ | १७ | ह्यीनः | ह्यहीनः | १६४ | ११ |
| प्रवर्ग्यं | प्रवर्ग्यँ | ६१ | २१ | लोक य | लोकस्य | १६५ | ११ |
| हैप | हैप | ६९ | १ | होत्रा | होत्राः | १६५ | १८ |
| विषवान्त्स्वरसाम्य: | विषुवान्त्स्वरसामम्य | ७० | १४ | अथा | अथो | १६७ | १२ |
| ०वागे चतुर्दः | ०भागे चतुर्थः | ७२ | ७ | ॥७॥ | ॥७॥[५] | १६७ | २२ |
| ह्यद्यन्ति | ह्युद्यन्ति | ७६ | १० | कल्ययन्ति | कल्पयन्ति | १७१ | ४ |
| ०करंभैरिति | ०करम्भैरिति | ७९ | १८ | | | | |

# रामलाल कपूर ट्रस्ट द्वारा

## प्रकाशित वा प्रसारित कतिपय प्रामाणिक ग्रन्थ

१. ऋग्वेदभाष्य—(संस्कृत हिन्दी तथा ऋग्वेदादिभाष्यभूमिका सहित)—प्रतिभाग सहस्राधिक टिप्पणियां, १०-११ प्रकार के परिशिष्ट वा सूचियां। प्रथम भाग ३५-००, द्वितीय भाग ३०-००, तृतीय भाग ३५-००।

२. अथर्ववेदभाष्य—श्री पं० विश्वनाथ वेदोपाध्यायकृत। १८-१९ वां काण्ड १६-००। बीसवां काण्ड अजिल्द १२-००, सजिल्द १५-००। काण्ड १४-१७ छप रहे हैं।

३. गोपथ-ब्राह्मणम्—(मूलमात्र) श्री पं० विजयपाल जी विद्यावारिधि द्वारा सम्पादित। शुद्ध सुन्दर मुद्रण और उत्तम जिल्द। मूल्य ४०-००

४. माध्यन्दिन (यजुर्वेद) पदपाठ—शुद्ध संस्करण। मूल्य २०-००

५. वैदिक-सिद्धान्त-मीमांसा—युधिष्ठिर मीमांसक लिखित वेदविषयक १७ विशिष्ट निबन्धों का अपूर्व संग्रह। विशिष्ट संस्करण मूल्य ३०-००।

६. ऋग्वेदानुक्रमणी वेङ्कटमाधवकृत। इस ग्रन्थ में स्वर छन्द आदि आठ वैदिक विषयों पर गम्भीर विचार किया है। व्याख्याकार-श्री पं० विजयपाल जी विद्यावारिधि। उत्तम संस्करण ३०-००, साधारण २०-००।

७. ऋग्वेद की ऋक्संख्या—युधिष्ठिर मीमांसक १-००

८. वैदिक-छन्दोमीमांसा—युधिष्ठिर मीमांसक। नया संस्करण १२-००

९. यजुर्वेद का स्वाध्याय तथा पशुयज्ञ-समीक्षा—लेखक पं० विश्वनाथ वेदोपाध्याय। बढ़िया जिल्द १५-००, साधारण १२-५०।

१०. वैदिक-पीयूष-धारा—लेखक श्री देवेन्द्रकुमार जी कपूर। चुने हुए ५० मन्त्रों की प्रतिमन्त्र पदार्थ-पूर्वक विस्तृत व्याख्या तथा अन्त में भावपूर्ण गीतों से युक्त। उत्तम संस्करण १५-००, साधारण १०-००।

११. संस्कार-विधि—शताब्दी-संस्करण, ४६० पृष्ठ, सहस्राधिक टिप्पणियां, तथा १२ परिशिष्ट। मूल्य लागतमात्र १०-००, राज-संस्करण १२-००।

१२. वैदिक-नित्यकर्म-विधि—सन्ध्यादि पांचों महायज्ञ तथा बृहद् हवन के मन्त्रों के पदार्थ तथा भावार्थ व्याख्या सहित। व्याख्याकार–युधिष्ठिर मीमांसक। मूल्य ३-००, सजिल्द ४-००

१३. वैदिक नित्यकर्म विधि – (मूलमात्र) सन्ध्या तथा सभी कर्म ०-६०

१४. शिक्षासूत्राणि—(संस्कृत) आपिशल-पाणिनीय-चान्द्र शिक्षा-सूत्र १-५०

१५. अष्टाध्यायी—(मूल) शुद्ध-संस्करण। २-००

१६. धातुपाठ—धात्वादिसूची सहित, सुन्दर शुद्ध संस्करण। २-००

१७. वामनीयं लिङ्गानुशासनम्—स्वोपज्ञ-व्याख्या सहितम्। ६-००

१८. अष्टाध्यायी-परिशिष्ट—सूत्रों के पाठ भेद तथा सूत्र-सूची आदि। २-५०

१९. अष्टाध्यायी-भाष्य—श्री पं० ब्रह्मदत्त जिज्ञासु कृत। प्रथम भाग २४-०० द्वितीय भाग १६-००, तृतीय भाग २०-००। पूरा सेट ६०-००।

२०. संस्कृत पठन-पाठन की अनुभूत सरलतम विधि—लेखक श्री पं० ब्रह्मदत्त जिज्ञासु। प्रथम भाग ७-००, द्वितीय भाग ८-००।

२१. महाभाष्य—हिन्दी व्याख्या, यु० मी०। प्रथम भाग ५०-००, द्वितीय भाग २५-००, तृतीय भाग २५-००।

२२. उणादिकोष—ऋ० द० स० कृत व्याख्या, तथा पं० यु० मी० कृत टिप्पणियों, एवं ११ सूचियों सहित। अजिल्द ७-००, सजिल्द १०-००।

२३. दैवम्-पुरुषकारवार्तिकोपेतम्—लीलाशुकमुनि कृत। ८-००

२४. काशकृत्स्न-धातु-व्याख्यानम्—संस्कृत रूपान्तर। यु० मी० कृत। ८-००

२५. विष्णुसहस्रनाम-स्तोत्रम्(सत्यभाष्य सहितम्) पं० सत्यदेव वासिष्ठ कृत आध्यात्मिक वैदिक भाष्य (४ भाग)। प्रति भाग १२-५०। पूरा सैट ५८-००

२६. श्रीमद्भगवद्-गीता-भाष्यम्—श्री पं० तुलसीराम स्वामी कृत। मूल्य ५-००

२७. सत्याग्रह-नीति-काव्य—आ० स० सत्याग्रह १९३९ में हैदराबाद जेल में पं० सत्यदेव वासिष्ठ द्वारा विरचित। हिन्दी व्याख्या सहित। मूल्य ५-००

२८. संस्कृत व्याकरणशास्त्र का इतिहास युधिष्ठिर मीमांसक कृत। नया संस्करण (सन् १९७३) तीन भागों में। पूरा सैट ६०-००

२९. संस्कृत व्याकरण में गणपाठ की परम्परा और आचार्य पाणिनि—लेखक—डा० कपिलदेव शास्त्री एम० ए०। सजिल्द १०-००

३०. मीमांसा-शाबर-भाष्य—आर्षमतविमर्शिनी हिन्दी व्याख्या सहित। व्याख्याकार—पं० युधिष्ठिर मीमांसक। प्रथम भाग मूल्य ४०-००, द्वितीय भाग ३०-००, राजसंस्करण ४०-००। तृतीय भाग, बढ़िया जिल्द ५०-००।

३१. नाडीतत्त्वदर्शनम् श्री पं० सत्यदेव जी वासिष्ठ। सजिल्द १०-००

३२. सत्यार्थ-प्रकाश (आर्यसमाज-शताब्दी-संस्करण)—राजसंस्करण १३ परिशिष्ट ३५०० टिप्पणियां, तथा सन् १८७५ के प्रथम संस्करण के विशिष्ट उद्धरणों सहित। मूल्य ३०-००, साधारण संस्करण २४-००।

३३. दयानन्दीय लघुग्रन्थ-संग्रह—१४ ग्रन्थ, सटिप्पण, अनेक परिशिष्टों के सहित। लागतमात्र २५-००

३४. अष्टोत्तरशतनाममालिका—सत्यार्थप्रकाश के प्रथम समुल्लास की सुन्दर प्रामाणिक विस्तृत व्याख्या। पं० विद्यासागर शास्त्री कृत। मूल्य ५-००

३५. ऋषि दयानन्द के पत्र और विज्ञापन—नया परिवर्धित संस्करण तीन भागों में। प्रथम भाग ३५-००, द्वितीय भाग ३०-००, तृतीय भाग ३५-००। भाग २-३ छप रहे हैं।

रामलाल कपूर ट्रस्ट, बहालगढ़; जिला-सोनीपत (हरयाणा)

